दद्याच्छिष्याय सा दीक्षा मान्त्री मलविघातनी ।

इति मान्त्री दीक्षा ।

अथ होत्री दीक्षा तत्रैव ।

कुण्डे वा स्थण्डिले वाऽपि निःक्षिप्याग्निं विधानतः ।
लयभोगक्रमेणैव प्रत्यध्वानं यथाक्रमम् ॥
मन्त्रवर्णकलातत्त्वपदविष्टपमेव च ।
शुद्ध्यर्थं होमयेदेषा होत्री दीक्षा समीरिता ॥

लयभोगक्रमेणेति । वेधदीक्षाक्रमेण मूलाधाराधिष्ठितवर्णदेवतासंहाररूपेणेत्यर्थः ।

इति होत्री दीक्षा ।

अथ शास्त्री दीक्षा तत्रैव ।

योग्यशिष्याय भक्ताय शुश्रूषार्चापराय च ।
सार्धं शास्त्रप्रदा त्वय्या शास्त्री दीक्षेति चोच्यते ॥

इति शास्त्री दीक्षा ।

अथाभिषेचिकी दीक्षा तत्रैव ।

शिवं च शिवपत्नीं च कुम्भे संपूज्य सादरम् ।
शिवकुम्भाभिषेकात् सा दीक्षा स्यादभिषेचिकी ॥

इत्यभिषेचिकी दीक्षा ।

अथ शाम्भवी दीक्षा (मेरुतन्त्रे)

गुरोरालोकमात्रेण भाषणात् स्पर्शनादपि ।
सद्यः संजायते ज्ञानं सा दीक्षा शाम्भवी स्मृता ॥

इति शाम्भवी दीक्षा ।

अथोपदेशदीक्षा (विश्वसारे)

तत्राप्यशक्तः कश्चिच्चेदब्जमभ्यर्च्य साक्षतम् ।
तदम्बुनाऽभिषिञ्च्याष्टवारं मूलेन के करम् ॥
निधायाष्टौ जपेत् कर्णे उपदेशे त्वयं विधिः ।

तत्रेति। पूर्वोक्तसंक्षेपदीक्षायामित्यर्थः। अब्जमिति शङ्खम्। के करं निधायेति। शिरसि हस्तं न्यस्येदित्यर्थः।

अथोपदेशदीक्षान्तरं तत्रैव।

महादीक्षा तथा दीक्षा उपदेशस्ततः परम्।
युगे युगे च कर्त्तव्या उपदेशः कलौ युगे॥
चन्द्रसूर्यग्रहे तीर्थे सिद्धिक्षेत्रे शिवालये।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते॥

( मेरुतन्त्रे )

भुक्तिमुक्तिप्रसिद्ध्यर्थं परीक्ष्य विधिवद्गुरुः।
पश्चादुपदिशेन्मन्त्रमन्यथा निष्फलं भवेत्॥
अन्यायेन च यो दद्यात् गृह्णात्यन्यायतश्च यः।
ददतो गृह्णतो वाऽपि कुल*शापो भविष्यति॥
गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम्।
उपदेशं ददद्गृह्णन् प्राप्नुयातां पिशाचताम्॥
अशास्त्रीयोपदेशं तु यो गृह्णाति ददाति च।
भुञ्जाते तावुभौ घोरान् नरकानेकविंशतिम्॥
असंस्कृत्योपदेशं तु यः करोति विमूढधीः।
विनश्यन्ति च तन्मन्त्राः सैकते शालिबीजवत्॥
अनर्हे मन्त्रविज्ञानं न तिष्ठति कदा चन।
तस्मात् परीक्ष्य वक्तव्यमन्यथा निष्फलं भवेत्॥
सच्छिष्यायातिभक्ताय यज्ज्ञानमुपदिश्यते।
तत् प्राप्नोति प्रतीतित्वं गोक्षीरात् तु यथा घृतम्॥

---

* कुलनाश इति पु०पा०।

धनेच्छाभयलोभाद्यैरयोग्यं यदि दीक्षयेत् ।
देवताशापमाप्नोति कृतं च विकृतं भवेत् ॥

इत्युपदेशदीक्षाविधिः ।

अथ क्रमदीक्षाविधिः । ( तन्त्रचिन्तमणि- ) धृत-( शक्तिशङ्गमकुलार्णवा- ) दिवचनानि ।

सुन्दरी तारिणी काली क्रमदीक्षाभिगामिनी ।
क्रमपूर्णो महेशानि क्रमाच्छम्भुर्भविष्यति ॥
चन्द्राग्निपक्षषोढाख्यपरानिर्वाणतत्परा ।
षट्शाम्भवं ततो देवि चक्रसंभेदमेव च ॥
स्वचक्रदेहविज्ञानं परकायप्रवेशनम् ।
एतज्ज्ञानाद्भवेन्मेधा दीक्षा प्रोक्ता मया तव ॥
हादाविदं निगदितं शृणु कादौ महेश्वरि ।
चन्द्राग्निरसराज्ञी च महाराज्ञी ततः शिवे ॥
महाकामकला काली गुह्यकाली ततः शिवे ।
गुह्यकाली द्विधा प्रोक्ता सकला निष्कला क्रमात् ॥
दशवक्त्रा तु सकला प्रोक्ता वा सृष्टिकारिका ।
उग्रा सौम्या महाक्रूरा त्रिधा साऽपि प्रकीर्त्तिता ॥
निष्कला गुह्यसंशान्ती काली भेदेन कीर्त्तिता ।
केवलेयं भवेन्मेधाह्वयी साम्राज्यरूपिणी ॥
चन्द्राग्निवेदपञ्चार्णा तथा नीला क्रमेण च ।
हंसतारा महानीला तदन्ते चीनसम्भवी ॥
केवला तु भवेन्मेधा ऋद्धिसिद्धिक्रिया द्विधा ।
त्रितया दिव्यसाम्राज्ये मेधा दीक्षा प्रकीर्त्तिता ॥
देवरूपा दिव्यरूपा मन्त्ररूपा महापरा ।

सर्वरूपा सर्वपूर्वा महासाम्राज्यमेधया ॥
ऋद्धिसिद्धिक्रमेणैव भेदबाहुल्यमीरितम् ।
विद्या राज्याभिधा दीक्षा छिन्नमस्ताविधौ स्मृता ॥
चन्द्रवह्निरसारक्तश्यामा च षोडशी तथा ।
परा षोढा सप्तदशी तदा जाता परा भवेत् ॥
दीपिनी मालिनी कुल्ला क्रमाद्विद्यादिराज्यदा ।
वगला या महेशानि साम्राज्यपरमे स्थिता ॥
चन्द्रवेदसूक्ष्ममेरुमन्त्रहीनं शिवान्तरम् ।
हृदयं च शतार्णं च पञ्चास्त्रं कुल्लुका तथा ॥
गायत्री क्रमयोगेन साम्राज्यपरमेष्ठ्यधृक् ।
एतत्पञ्चकसंयुक्तः सर्वसाम्राज्यबुद्धिधृक् ॥
श्रीदिव्यसर्वसाम्राज्यदीक्षासर्वोत्तरा भवेत् ।
ततोऽपि दीक्षा देवेशि नास्ति ब्रह्माण्डगोलके ॥
दश विद्याप्रभेदाश्च महाविद्याप्रभेदजाः ।
सिद्धिविद्याप्रभेदाश्च महामन्त्रास्तथैव च ॥
तदङ्गमन्त्रा देवेशि शावरं देशशावरम् ।
कालशावरकं देवि तथैव सिद्धिशावरम् ॥
त्रिधा दर्शनमन्त्राश्च तथाऽऽम्नायक्रमोद्भवाः ।
कादिहादिक्रमत्वेन ऊर्ध्वाम्नाये कलौ शिवे ॥
तथाऽऽयतनमन्त्राश्च यत् किं चिन्मन्त्रजालकम् ।
सर्वाधिकारो देवेशि एतद्दीक्षाविधौ भवेत् ॥
एतद्दीक्षासमायुक्तः साक्षाच्छ्रीकालिका स्वयम् ।

प्रहराष्टक्रमेणैव दशविद्यास्वरूपधृक् ॥
कामकलाभिधा विद्या सभेदा वृत्तिदेवता ।
अङ्गमन्त्रास्तथाऽन्येऽपि तस्य चास्त्रगताः सदा ॥
क्रमदीक्षा महेशानि पञ्चविद्यासु भेदतः ।
तदङ्गमन्त्रा गायत्रीकुल्लुकापञ्चकं शिवे ॥
अन्यविद्याविधौ प्रोक्तं रहस्यातिरहस्यकम् ।
श्रीविद्यायां कालिकायां तारायां परमेश्वरि ॥
क्रमदीक्षां विना देवि यो जपेत् साधकाधमः ।
स दरिद्री महाघोरी लक्ष्मीहीनस्तु निन्दितः ॥
अथ वा वातुलो भूयान्मन्त्रक्षोभमवाप्नुयात् ।
क्रमदीक्षासमायुक्तो राजा भवति निश्चितम् ॥
महाविभवसंयुक्तः सर्वसिद्धिसमन्वितः ।
वीजयी विनयी साधुः सिद्धश्च सिद्धिदः शुभः ॥
प्रहृष्टात्मा सर्ववेत्ता त्रिकालज्ञः कविः सुखी ।
कोटिसिद्धीश्वरः शूरः सुन्दरः काममोहनः ॥
आनन्दात्मा *परात्मा च पराजितगुणोत्तरः ।
राजराजेश्वरः साक्षान्महाकालसमः कलौ ॥
नैतद्विद्योपासकस्य दारिद्र्यं दीनता क्व चित् ।
गुरुहीनात् क्रमत्यागात् संप्रदायवियोगतः ॥
दारिद्र्यं प्रथमं भूयान्नात्र कार्या विचारणा ।
चिन्तामणिगृहं यत्र यत्र रत्नस्य मन्दिरम् ॥
नवरत्नात्मसोपानं सर्वैश्वर्यास्पदं गृहम् ।

* परानन्द इति २ पु० पा० ।

कल्पवृक्षवनं यत्र पारिजातवनं तथा ॥
स्पर्शमणेस्तु प्राकारो दारिद्र्यं तत्र कुत्र वै ।
तस्मात् क्रमविहीनस्य दारिद्र्यं तु पदे पदे ॥
क्रमयुक्तं गुरुं प्राप्य क्रमं संप्रार्थयेत् सुधीः ।
अन्यथा गुरुमौढ्येन दरिद्रत्वमवाप्नुयात् ॥
अल्पायुर्वा भवेद्देवि नात्र कार्या विचारणा ।

दीक्षापद्धती ( वाडवानलीय )वचनम्

गविसूमापतीशाश्च कथ्यन्ते दिक्षु च क्रमात् ।
देशिकेन क्रमज्ञेन दीयन्ते यद्विधानतः ॥
क्रमदीक्षेति सा प्रोक्ता व्युत्क्रमो नैव सिद्धिदः ।
क्रमदीक्षाविधिर्यत्र तत्र पूर्णाभिषेचनम् ॥

इति क्रमदीक्षाप्रकारः ।

अथ पूर्णाभिषेकदीक्षाविधिः ( मेरुतन्त्रे ) पूर्वोक्तदीक्षाभेदानुक्त्वा—

एवं दत्वा गुरुर्दीक्षां कुर्यात् पूर्णाभिषेचनम् ।
विना येनाभिषेकेण साधकः पूर्णबोधताम् ॥
आचार्यत्वं न चाप्नोति सद्गतिं च समीहिताम् ।
तस्माद्गुरुः प्रियं शिष्यं बोधयित्वाऽभिषेचयेत् ॥

( शक्तिसङ्गमकुलार्णवादौ )

विना पूर्णाभिषेकेण पशुरूपः शिवोऽपि च ।
विना पूर्णाभिषेकेण देवता न प्रसीदति ॥
विना पूर्णाभिषेकेण कालीं तारां च यो जपेत् ।
तस्य क्रियां हरिष्यामि वातुलो जायते नरः ॥
विना पूर्णाभिषेकेण गुरुधर्मेण पार्वति ।
न जपो न तथा होमो न पूजा पूर्णता क्वचित् ॥

विशेषतः कौलिकानां पूर्णाभिषेक आवश्यकः ।

पूर्णाभिषेकहीनस्तु कौलिको म्रियते यदि ।

पिशाचत्वमवाप्नोति यावदाभूतसंप्लवम्—इति (कुलार्णववचनात्)।

तथा—

पूर्णाभिषेको देवेशि दशविद्याविधौ स्मृतः ।

पूर्णाभिषेककाला उक्ताः ( तन्त्रराजे )

ग्रहाणां वैपरीत्येषु जन्मर्क्षे ग्रहणे द्वयोः ।

कुहूप्राप्तौ रिपुक्लेशे कुर्यात् पूर्णाभिषेचनम् ॥

तेन दोषाः स्पृशन्त्येनं न कदा चन तद्बलात् ।

( शक्तिसङ्गमादौ )

पूर्णाभिषेकदीक्षा तु चन्द्रसूर्यग्रहे भवेत् ।

अन्येष्वपि पुण्यकालेषु पूर्णाभिषेकदीक्षा कर्त्तव्यैव ।

सप्तसूक्तेषु कालेषु पुण्येष्वन्येषु वाऽऽदरात्—इति ( तन्त्र-राज- ) वचनात् ।

विधानमाह ।

पूर्वोक्तमण्डपे स्थित्वा गुरुर्ध्यानपरायणः ।

अङ्कुरारोपणं वास्तुयागं कुर्यात् परेऽहनि ॥

कुण्डं निर्माय यत्नेन यथाविहितमादरात् ।

होमं कृत्वा गुरुकुलं मान्यं पूज्यमथादरात् ॥

वेदिकायामिष्टदेवं गुरुत्रितयमादरात् ।

वस्त्रालङ्करणैः पूज्या गुरुशक्तय एव च ॥

तथा दिव्यौघचरणं सिद्धौघचरणं शिवे ।

मानवौघं महेशानि स्वगुरूणां चतुष्ककम् ॥

( मेरुतन्त्रे )

विरच्य विपुलं चक्रं मण्डपेऽतिमनोहरम् ।

---

* अशुभफलदेषु ग्रहेषु सत्स्विति ।

† चन्द्रसूर्ययोरिति । ‡ शत्रुभिः क्लेशे प्राप्ते इति ।

खारीतोयभृतं कुम्भं स्थापयेच्चक्रमध्यतः ॥
अन्येषु कलशाँस्तत्र वस्त्रहेमसमन्वितान् ।
दलेषु विविधाः स्थाप्यास्तत्रावाह्येष्टदेवताम् ॥
अभ्यर्च्य मध्ये चान्तेषु साङ्गावरणदेवताः ।

तन्त्रान्तरे ।

मध्ये मूलघटः स्थाप्यस्ततः पूजाक्रमेण च ।
सर्वावरणकुम्भाश्च स्थापनीयाः समन्ततः ॥

(तन्त्रराजे)

विरच्य विपुलं चक्रं प्रतियोनि च षोडश ।
त्रिकोणानि विधायात्र मध्ये कुम्भं च विन्यसेत् ॥
सौवर्णं राजतं ताम्रं काचं मार्त्तिकमेव च ।
पूरितं खारितोयेन क्वथितेनाक्षरौषधैः ॥
निःक्षिप्य नव रत्नानि धान्यानि विविधानि च ।
हिरण्यानि सताम्राणि वासोभ्यामभिवेष्टयेत् ॥
रक्ताभ्यां चन्दनैश्चूतपनसाश्वत्थपल्लवैः ।
शतक्रतुलताबद्धैर्मातुलुङ्गफलान्वितैः ॥
विधाय कलशानन्यानन्येष्वेकैकशो न्यसेत् ।
सार्धं सहस्रं षट्त्रिंशत्पञ्चसंख्याः क्रमोदिताः ॥

खारीतोयमिति । खारीलक्षणमुक्तं ( स्कन्दपुराणे )

पलद्वयं तु प्रसृतिः कुडवं द्विगुणं मतम् ।
चतुर्भिः कुडवैः प्रस्थ आढकस्तैश्चतुर्गुणैः ॥
चतुर्गुणो भवेद्द्रोणः कुम्भस्तद्द्वयतः स्मृतः ।
कुम्भैस्तैरष्टभिः खारी .... .... .... इति ॥

( तन्त्रराजे )

मध्ये चक्रेषु तोयादि कृत्वा वात्वाऽभिपूज्य च ।
कालात्मनि च मन्त्रांश्च जपित्वा पूर्ववासरे ॥
जन्मर्क्षे प्रातरुत्थाय स्वनित्यान्ते प्रपूजयेत् ।
सहस्रं प्रजपेत् पश्चाद्धोमं कृत्वा समन्ततः ॥

(त्रिशक्तिरत्ने)

नानोपचारैः संपूज्य सहस्रं जुहुयाच्छुचौ ।
अभिषिञ्चेद्गुरुः शिष्यं नामास्मै प्रदिशेत् स्वयम् ॥

(तन्त्रराजे)

शृङ्गकाहलशङ्खादिवाद्यसङ्गीतनर्त्तनैः ।
मुदितैर्योगिनीवृन्दैरेकैकं देवतात्मभिः ॥
धृतैः सुपूजितैः सार्धमभिषिञ्चेद्गुरुः स्वयम् ।

(मेरुतन्त्रे)

स्पृशँश्च मध्यकलशमाचार्यः प्रपठेदिति ।
साङ्गाँश्च चतुरो वेदाँस्ततस्तेन जलेन तु ॥
अभिषिञ्चेद्गुरुः शिष्यमिति पूर्णाभिषेचनम् ।

(तन्त्रराजे)

अथ वा खण्डवत्यष्ट कलशाँस्तत्र विन्यसेत् ।
तेषु शक्तीः समावाह्य संपूज्यैवाभिषेचयेत् ॥
एकं वा कलशं जन्मदिने कृत्वाऽभिषेचयेत् ।

तथा ।

सोमसूर्याग्निरूपत्वं जलस्य परिकीर्त्तितम् ।
तस्मादशेषदुःखार्त्तिशान्त्यै स्यादभिषेचनम् ॥

तन्त्रान्तरे ।

अभिषेकक्रियाभिज्ञ उद्वर्त्तनपुरःसरम् ।

स्नानद्वयं यथोक्तेन कृत्वा यत्नेन पार्वति ॥
पञ्चपल्लवयोगेन दूर्वाविल्वफलैस्तथा ।
वैदिकैस्तान्त्रिकैर्मन्त्रैः सेचयेच्छिष्यमादरात् ॥
अयमेव महादेवि पूर्णादीक्षाक्रमः स्मृतः ।
अन्यत् सर्वं महेशानि दीक्षापटलगोचरम् ॥

स्नानद्वयमिति । क्रियावत्यादिदीक्षोक्तमेकमपरं पूर्णाभिषेकरूपमित्यर्थः । तदुक्तं ( तन्त्रराजे )

अथाभिषेकं द्विविधं समवाप्य तदाज्ञया ।
अनुग्रहादि कुर्वीत सिद्धये नान्यथा भवेत् ॥
विधाय चक्रं तन्मध्ययोन्यां कुम्भं विधाय तु ।
वर्णक्काथैः समापूर्य अभिषिञ्च्य वदेन्मनुम् ॥
क्रमागतसमाचारनिरते भक्तिशालिनि ।
द्वितीयमभिषेकं च कुर्याद्देव्यात्मसिद्धये ॥

(मेरुतन्त्रे)

देवेभ्यः सर्वतन्त्राणि तन्त्रेभ्यो मनवस्तथा ।
यतो यातास्ततः शिष्यः सर्वमन्त्रैकभाजनम् ॥
भवेदाचार्यनामा च कुर्यान्नामान्तरं गुरुः ।
एतादृशस्य यो दीक्षां गृह्णीयात् स तु सिद्धिभाक् ॥
सर्वमन्त्रप्रदानेषु समर्थः स तु जायते ।
सर्वे देवा वशास्तस्य वेदपन्थास्तु सात्त्विकः ॥
एष एव विधिस्तत्र मार्गे स्याद्दक्षिणाभिधे ।
विशेषस्तत्र तोयानि तीर्थानामाहरेत् सुधीः ॥
गङ्गाया यमुनायाश्च सरस्वत्या महोदधेः ।

सिन्धुगोदावरीरेवाकावेरीभ्यः पृथूदकात् ॥
महेन्द्रजायाः सरयूचर्मन्वत्योश्च पुष्करात् ।
महानद्या वेदिकाया क्षिप्रावेत्रवतीजलम् ॥
कुरुक्षेत्रस्य गण्डक्याः पूर्णाया मानसस्य च ।
घटे दत्वा जपेन्मन्त्रान् नानातन्त्रगतानपि ॥
अभिषिक्तस्तु तैस्तोयैः सिद्धास्ते मनवोऽस्य तु ।
प्रयोगार्थं तथा न्यस्य दानार्थम् .... इति ॥

(निरुत्तरतन्त्रे)

वैष्णवो गाणपत्यश्च सौरश्चैव कुलेश्वरि ।
अभिषेकं प्रकुर्वीत शाक्तश्च कुलभूषणः ॥

तथा ।

अभिषेकं चरेद्देवि अधिवासपुरःसरम् ।
वृद्धिशक्तिं ततः कृत्वा शिवशक्तीः प्रपूजयेत् ॥
गुरुं संपूज्य विधिवत् स्वर्णालङ्कारभूषणैः ।
ततः संकल्पविधिना गुरूणां वरणं चरेत् ॥

तथा ।

शिवशक्ती च संपूज्य स्थापयेद्घटमुत्तमम् ।
नातिह्रस्वं नातिदीर्घं स्वर्णरूप्यादिनिर्मितम् ॥
विशेषार्घस्य यन्त्रे वा त्रिकोणे वाऽपि विन्यसेत् ।
कामबीजेन संप्रोक्ष्य वाग्भवेनैव ताडयेत् ॥
शक्त्या घटं समालोच्य मायया पूरणं जलैः ।
मन्त्रेणानेन तीर्थानि देशिकस्तत्र विन्यसेत् ॥
गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ।
सर्वे समुद्राः सरितः सरांसि जलदा नदाः ॥

ह्रदाः प्रस्रवणाः पुण्याः स्वःपातालमहीगताः ।
सर्वतीर्थानि पुण्यानि घटे कुर्वन्तु सन्निधिम् ॥
श्रीबीजेन प्रजप्तेन पल्लवं प्रतिपादयेत् ।
कूर्चेन फलदानं स्यात् स्त्रीबीजेन स्थिरीकृतिः ॥
सिन्दूरं वह्निबीजेन पुष्पं प्रेतेन विन्यसेत् ।
मूलेन प्रणवेनापि दूर्वां दद्याद्विचक्षणः ॥
हुँ फट्स्वाहेति मन्त्रेण कुर्याद्दर्भेण ताडनम् ।
विचिन्त्य देवीपीठं च तत्रावाह्य प्रपूजयेत् ॥
अनेनैव विधानेन सर्वकर्मसु सुन्दरि ।
घटं संस्थापयेद्देवीभक्तैनैव विशेषतः ॥
महापूजां चरेद्धीमान् षोडशोपचारसंयुताम् ।
गुरूणां च महापूजां शक्तीनां च ततः परम् ॥
तत्पश्चात् साधकानां च क्रमेण परिपूजनम् ।
कुमारीभ्यो बलिं दत्वा कुलजाभ्यो विशेषतः ॥
अभिषेकं ततो देवि कुर्याच्च गुरुमार्गतः ।
स्वतन्त्रोक्तविधानेन मन्त्रस्योच्चारणैः सह ॥
चालयेच्च घटं मन्त्री मन्त्रेणानेन देशिकः ।
ॐ उत्तिष्ठ ब्रह्मकलश सेविताशेषसिद्धिद ॥
सर्वतीर्थाम्बुपूर्णस्त्वं पूरयस्व मनोरथम् ।
इशानेन्द्रस्मरक्षोणी तदन्ते भुवनेश्वरी ॥
मन्त्रेणानेन वाद्यानां निर्घोषैश्चालयेद्घटम् ।
अभिषिञ्चेद्गुरुः शिष्यं यजमानं पुरोहितः ॥

तथा—

अभिषेकस्य दक्षिणामूर्त्तिर्ऋषिरनुष्टुप्छन्दः शक्तिर्देवता सर्वसिद्धिसंकल्पसिद्धये विनियोगः ॥

ॐ राजराजेश्वरीशक्तिर्भैरवी *कालभैरवी ।
श्मशानभैरवी देवी त्रिपुरानन्दभैरवी ॥
त्रिपुरा त्रिपुरादेवी तथा त्रिपुरसुन्दरी ।
त्रिपुरेशी महादेवी तथा त्रिपुरमालिका ॥
नित्या च नित्यरूपा च वज्रप्रस्तारिणी तथा ।
सर्वचक्रेश्वरी देवी तथा नीलसरस्वती ॥
सर्वसिद्धिकरी देवी सिद्धगन्धर्वसेविता ।
उग्रतारा महादेवी तथा दक्षिणकालिका ॥
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।
उग्रदंष्ट्रा महादंष्ट्रा शुभदंष्ट्रा कपालिनी ॥
भीमनेत्रा विशालाक्षी मङ्गला विजया जया ।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥
मङ्गला नन्दिनी भद्रा लक्ष्मीः कीर्त्तिर्यशस्विनी ।
पुष्टिर्मेधा शिवा साध्वी यशःशोभा जया धृतिः ॥
श्रीनन्दा च सुनन्दा च नन्दिन्यानन्दपूजिता ।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥
विजया मङ्गला भद्रा स्मृतिः शान्तिः क्षमा धृतिः ।
सिद्धिस्तु परमा पुष्टिः श्री ऋद्धिश्च रतिस्तथा ॥
दीप्ता कान्तिर्यशोलक्ष्मीरीश्वरी बुद्धिरेव च ।

---

* पुरभैरवी इति २—३ पु० पा० ।

शक्तिर्मायावती ब्राह्मी जयन्ती चापराजिता ॥
अजिता मानवी श्वेता दितिस्त्वदितिरेव च ।
माया चैव महामाया मोहिनी क्षोभिणी तथा ॥
कमला विमला गौरी लावण्याम्बुधिसुन्दरी ।
दुर्गा क्रियाऽरुन्धती च घण्टाकर्णा कपालिनी ॥
चर्चिका चापरा ज्ञेया तथैव सुरपूजिता ।
वैवस्वती च कौमारी तथा माहेश्वरी परा ॥
वैष्णवी च महालक्ष्मीः कार्त्तिकी कौशिकी तथा ।
शिवदूती च चामुण्डा मुण्डमालाविभूषणा ॥
एतास्त्वा- .... .... .... .... इत्यादि ।
इन्द्रो वह्निर्यमश्चैव नैर्ऋतो वरुणस्तथा ॥
पवनो धनदेशानौ ब्रह्माऽनन्तो दिगीश्वराः ।
एतास्त्वा- .... .... .... .... इत्यादि ।
संवत्सरश्चायनौ च मासपक्षदिनानि च ।
तिथयश्चाभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥
रविः सोमः कुजबुधौ गुरुः शुक्रः शनैश्चरः ।
राहुः केतुश्च सततमभिषिञ्चन्तु ते ग्रहाः ॥
नक्षत्रं करणं योगोऽमृतसिद्धिस्ततः परम् ।
दग्धाः पापास्तथा भद्रा योगा वाराः क्षणास्तथा ॥
वारवेला कालवेला दण्डा ऋक्षादयस्तथा ।
अभिषिञ्चन्तु सततं मन्त्रपूतेन वारिणा ॥
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त एव च ।
कपाली भीषणाख्यश्च संहारश्चाष्ट भैरवाः ॥

एते त्वा- .... .... .... .... .... इति ।

द्राविणीपुत्रिकाश्चैव डाकिनीपुत्रिकास्तथा ।
शाकिनीपुत्रिकाश्चान्याः काकिनीपुत्रिकाः पराः ॥
शाकिनीपुत्रिका भूयो हाकिनीपुत्रिकास्तथा ।
ततश्च राकिणीपुत्री देवपुत्री ततः परम् ॥
मातृणां च तथा पुत्री चोर्ध्वमुख्याः सुतास्तथा ।
अधोमुख्याः सुताश्चैव ज्वालामुख्याः सुताः पराः ॥

एतास्त्वा- .... .... .... .... .... इति ।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।

एते त्वा- .... .... .... .... .... इति ।

पुरुषः प्रकृतिश्चैव विकाराश्चैव षोडश ।
आत्मा परात्मा ज्ञानात्मा ध्यानात्मा परमात्मनः ॥
आत्मानश्चात्मनश्चैव स्थूलसूक्ष्मौ च ये पराः ।

एते त्वा- .... .... .... .... .... इति ।

वेदादिबीजं ह्रुँ बीजं स्त्रीबीजं तन्निकेतनम् ।
शक्तिबीजं रमाबीजं मायाबीजं सुधाकरम् ॥
चिन्तारत्नं महाबीजं नारसिंहं च तारकम् ।
मार्तण्डभैरवं दौर्गं बीजं स्त्रीपौरुषोत्तमम् ॥
गाणपत्यं च वाराहं कालीबीजं भयापहम् ।
एतानि त्वाऽभिषिञ्चन्तु .... .... इति ।
गङ्गा गोदावरी रेवा यमुना च सरस्वती ।
आत्रेयी भारती चैव सरयू गण्डकी तथा ॥

करतोया चन्द्रभागा श्वेतगङ्गा च कौशिकी ।
भोगवती च पाताले स्वर्गे मन्दाकिनी तथा ॥
एतास्त्वा- .... .... .... .... .... इति ।
भैरवी भीमरूपा च शोणः सुमुख एव च ॥
सिन्धुश्चैव ह्रदः पुण्यस्तथा पातालसम्भवः ।
एते त्वा- .... .... .... .... .... इति ॥
यानि कानि च तीर्थानि पुण्यापुण्यतराणि च ।
तानि त्वा- .... .... .... .... .... इति ॥
जम्बूद्वीपादयो द्वीपाः सागरा लवणादयः ।
अनन्ताख्यस्तथा नागः सर्पा ये तक्षकादयः ॥
एते त्वा- .... .... .... .... .... इति ।
तारश्च वह्निजाया च वषट् कूर्चमतः परम् ॥
वौषट्कारस्तु फट्कारो ह्यभिषिञ्चतु सर्वदा ।
नश्यन्तु प्रेतकूष्माण्डा राक्षसा दानवाश्च ये ॥
पिशाचा गुह्यका भूता अभिषेकेण ताडिताः ।
अलक्ष्मीः कालकर्णी च पापानि सुमहान्ति च ॥
नश्यन्तु चाभिषेकेण तारबीजेन ताडिताः ।
रोगाः शोकाश्च दारिद्र्यं दौर्बल्यं चित्तविक्रिया ॥
नश्यन्तु चाभिषेकेण वाग्बीजेनैव ताडिताः ।
लोकानुरागत्यागाश्च दौर्भाग्यमपि दुर्यशः ॥
नश्यन्तु चाभिषेकेण मन्मथेनैव ताडिताः ।
तेजोह्रासः शक्तिह्रासो बुद्धिह्रासस्तथैव च ॥
नश्यन्तु चाभिषेकेण शक्तिबीजेन ताडिताः ।

विषाणि च महारोगा डाकिन्यो भीतयस्तथा ॥
घोराभिचाराः क्रूराश्च ग्रहा नागास्तथैव च ।
नश्यन्तु चाभिषेकेण कालीबीजेन ताडिताः ॥
नश्यन्तु विपदः सर्वाः संपदः सन्तु सुस्थिराः ।
अभिषेकेण शाक्तानां पूर्णाः सन्तु मनोरथाः ॥
एवं संसिच्य शिष्यं तु पुनः पूजां समाचरेत् ।
शिष्योऽपि तत्र संपूज्य गुरवे दक्षिणां ददेत् ॥
गोभूमिस्वर्णरूप्यं च नानारत्नानि पार्वति ।
सर्वस्वं गुरवे दद्यात् तदर्धं वाऽपि दक्षिणाम् ॥
श्रीविद्यां वा सिद्धिकालीं तारां वा महिषार्दिनीम् ।
शिष्याय भक्तियुक्ताय प्रदद्याद्देशिकः स्वयम् ॥

तन्त्रान्तरे ।

एवं कृत्वाऽभिषेकं च प्रधानकलशाम्भसा ।
तत्तन्मन्त्रं समुच्चार्य परिचारघटोदकैः ॥
अभिषिञ्चेत् ततस्तस्मै प्रदद्यान्मन्त्रमुत्तमम् ।
कृते पूर्णाभिषेके तु सर्वमन्त्राधिकारवान् ॥
शिष्यः संजायते तस्मादभिषिच्य मनुं ददेत् ।
पूर्वमल्पविधानेन उपदिष्टोऽपि चेन्मनुः ॥
पश्चात् सर्वाधिकारार्थं कुर्यात् पूर्णाभिषेचनम् ।
महामन्त्रोपमन्त्राश्च सिद्धिं दद्युर्न संशयः ॥

वाममार्गे तु प्रधानकलशो हेतुद्रव्येण पूरणीयः । कलशान्तराणि जलेनैव । तदुक्तं ( मेरुतन्त्रे )

मध्ये तीर्थघटः स्थाप्यः शेषास्तोयघटा मताः ।
ये ये आवाहिता देवा गुरुणा तु सुरा घटे ॥

ते ते कुर्वन्ति सान्निध्यं मन्त्ररूपाश्च तन्मुखे।
स्वयं सिद्ध्यति वागस्य मूर्द्धानं नैव नामयेत्॥
यदर्थं नामितो मूर्द्धा तस्य मृत्युर्न संशयः।
वाममार्गे गुरुर्यस्य ईदृक् सिद्धो यदा भवेत्॥
शिष्यश्च निरहङ्कारः सदा दैवततत्परः।
देवार्थं यस्य* नान्यत्र यस्य भोगे मनो न च॥
स एव सिद्धो वामे स्यादन्यो निरयभाजनम्।

कौलमार्गे विशेष उक्तस्तत्रैव।

सजीवमीनयुक्तेन सुरया पूरितेन च।
पञ्चामृतैस्तु संपूर्णं शङ्खेन कलशेन वा॥
अभिषेकं ततः कुर्यात् कुलवृक्षोत्थपल्लवैः।
अयं पूर्णाभिषेकोऽत्र कुलमार्गे प्रकीर्त्तितः॥

कुलवृक्षाश्च।

सहकारः कर्णिकारः केशरस्तिलकस्तथा।
कदम्बः सिन्धुवारश्च कङ्कोलश्चम्पकाह्वयः॥
श्लेष्मातकं कुरवको निम्बश्चलदलस्तथा।
यज्ञाङ्गो जटिलो विल्वः कुलवृक्षा मता अमी—इति (कुलचूडामणौ) प्रोक्ताः॥

तन्त्रान्तरे।

अभिषिञ्चेद्गुरुः शिष्यं नामास्मै प्रदिशेत् स्वयम्।
आनन्दनाथशब्दादि द्व्यक्षरं चतुरक्षरम्॥
नियोज्यैवामुकोऽसीति गुरुरादौ तदाह्वयेत्।
यथा नारी पितुर्गोत्रात् पत्युर्गोत्रं समाश्रयेत्॥

---

* {नाम ततो भोगे इति २ पु० पा०।
{नान्तत्रयं भोगे इति ३ पु० पा०।

तथा शक्त्युपदेशेन कौलो गोत्रान्तरे व्रजेत् ।
अथोच्यते महेशानि कौलनां गोत्रमुत्तमम् ॥
दुर्लभं सर्वतन्त्रेषु शाम्भवं तत् प्रकीर्त्तितम् ।
कौलावधूतमार्गेषु तीर्थयात्रां न च व्रजेत् ॥
तीर्थाटनं च संन्यासं व्रतधारणमेव च ।
उपवासं मुण्डनं च सर्वथा परिवर्जयेत् ॥
पूर्णाभिषिक्ते शिरसि तेन तत्र न मुण्डनम् ।

पूर्णाभिषेकमाहात्म्यमाह ( मेरुतन्त्रे )

रसेन्द्रेण यथा विद्धमयः सौवर्णतां व्रजेत् ।
दीक्षाविद्धस्तथा ह्यात्मा शिवत्वं लभते ध्रुवम् ॥

तथा ।

गतं शूद्रस्य शूद्रत्वं गता विप्रस्य विप्रता ।
दीक्षासंस्कारसंपन्ने जातिभेदो न विद्यते ॥
पूर्णाभिषेकं कृत्वा तु यत्र कुत्र मृतोऽपि च ।
स एव देवीरूपः स्यात् स देवो धन्यतामियात् ॥

तन्त्रान्तरे ।

पूर्णाभिषेकयुक्तस्य यत्किञ्चिदनृतं भवेत् ।
तस्य क्रिया च सफला देवता सुप्रसीदति ॥
पूर्णाभिषेकयुक्तो हि मन्त्रान् दत्वा जपेच्छिवे ।
तत्क्षणात् सिद्धिमाप्नोति नात्र कार्यविचारणा ॥
गुरुं विनाऽपि देवेशि त्वभिषेकी तु यं जपेत् ।
तं सभेदं साधयित्वा सिद्धिं दातुमथार्हति ॥
पूर्णाभिषेकसंयुक्तश्चाण्डालोऽपि भवेद्यदि ।
स ब्रह्मर्षिर्महेशानि नात्र कार्या विचारणा ॥

पूर्णाभिषेकहीनो य ऋषिवर्योऽपि पार्वति।
स ब्राह्मणाधमः प्रोक्तस्त्वभिषेकी द्विजोत्तमः॥
पूर्णाभिषेकी देवेशि यस्मिन् देशे विराजते।
स देशो धन्यतां याति समन्तात् कोटियोजनम्॥
न व्याधिर्न च वै मृत्युर्न शत्रूणां भयं क्वचित्।
पूर्णरूपः शिवः प्रोक्तः शिव एव न संशयः॥
को वा देहः कस्य देहः सुखं दुःखं च कस्य च।
को जातः को मृतो देवि सर्वं ब्रह्मस्वरूपकम्॥
यस्मिन् काले भवेद्देवि मन्त्रवर्यस्य विस्मृतिः।
तदैव मरणं प्रोक्तं मरणं मरणं न हि॥
पूर्णाभिषेकयुक्तानामधिकारो हि सर्वतः।

इति पूर्णाभिषेकदीक्षाविधिः।

अथ गुरुं विना मन्त्रिणां मन्त्रान्तरग्रहणोपायो (मेरुतन्त्रे)

अथ तान्त्रिकमन्त्राणां दीक्षां शृणु गुरुं विना।
शुक्लपक्षे त्रयोदश्यां चन्द्रताराबलान्विते॥
गत्वा च दक्षिणामूर्त्तेः सन्निधौ पूजयेच्च तम्।
कलशस्थापनं कृत्वा तदग्रे वोपरि क्षिपेत्॥
तालपत्रे मनुं लेख्यं* मन्त्रदेवं च पूजयेत्।
देवो गुरुरिति ध्यात्वा मन्त्रं व्यक्तं तु वाचयेत्॥
अष्टोत्तरशतं चैतन्मन्त्रग्रहणमुच्यते।
एतत् तत्त्वं समाख्यातं गोप्यं मातरि जारवत्॥

---

* लिखितमित्यर्थः।

गुरौ लोभादयो दोषास्तस्मादुद्विजते मनः ।
अतः शास्त्रगुरुं कृत्वा दक्षिणामूर्त्तितो मनुः ॥
विभ्रत्यद्भुतभूतिभूतपवचोवैचित्र्याचित्रामृत-
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
गोरक्षाचलभूपनिर्मितपुरश्चर्यार्णवे पञ्चमः
सद्युक्तिस्फुटमौक्तिकोत्कररुचोत्तुङ्गस्तरङ्गो गतः ॥

इति श्रीमन्महाराजाधिराजप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे क्रियावती-दीक्षाप्रयोगपूर्वकदीक्षाभेदनिर्णयो नाम पञ्चमस्तरङ्गः ॥ ५ ॥

# अथ पुरश्चरणविधिर्निरूप्यते ।

तत्र पुरश्चरणपदार्थ उक्तो (यामले)

वेदादिशावरान्तानां मन्त्राणां सिद्धिहेतवे ।
पुरतश्चरणीयत्वात् पुरश्चरणमुच्यते ॥

(मेरुतन्त्रेऽपि)

धर्मार्थकाममोक्षाणां साधनं मन्त्र उच्यते ।
तत्सिद्धये पुरो यच्च चर्यते तत् प्रकीर्तितम् ॥
पुरश्चरणकर्माख्यं वेदादौ शावरान्तके ।
मन्त्रे यन्त्रे तथाऽवश्यम् .... .... इति ॥

एतेन पुरश्चरणप्रयोजनमप्युक्तं भवति ।

(वायवीयसंहितायाम्)

साधनं मूलमन्त्रस्य पुरश्चरणमुच्यते ।

(वीरचूडामणौ)

पुरश्चरणहीनस्य मन्त्रसिद्धिर्न जायते ।
आदौ पुरस्क्रियां कुर्यान्नियमेन यथाविधि ॥

(योगिनीहृदयेऽपि)

गुरोराज्ञां समादाय शुद्धान्तःकरणो नरः ।
ततः पुरस्क्रियां कुर्यान्मन्त्रसंसिद्धिकाम्यया ॥
जीवहीनो यथा देहः सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः ॥
तस्मादादौ स्वयं कुर्याद्गुरुं वा कारयेद्बुधः ।
गुरोरभावे विप्रं वा सर्वप्राणिहिते रतम् ॥

स्निग्धं शास्त्रविदं मित्रं नानागुणसमन्वितम् ।
स्त्रियं वा सद्गुणोपेतां सपुत्रां विनियोजयेत् ॥

पुरश्चरणस्वरूपमुक्तम् (कुलचूडामणौ)

पञ्चाङ्गानि महादेवि जपो होमश्च तर्पणम् ।
अभिषेकश्च विप्राणामाराधनमपीश्वरि ॥
पूर्वपूर्वदशांशेन पुरश्चरणमुच्यते ।

(कुलमूलावतारे)

संसारे दुःखभूयिष्ठे यदिच्छेच्छ्रेय आत्मनः ।
पञ्चाङ्गोपासनेनैव मन्त्रजापी सुखं व्रजेत् ॥

(मुण्डमालायाम्)

यावद्यस्मिन् जपः प्रोक्तो मन्त्रं तावज्जपेत् पुरः ।
ततस्तु तद्दशांशं हि होमं कुर्याद्विचक्षणः ॥
तस्यापि च दशांशेन तर्पणं समुदाहृतम् ।
तद्दशांशं ततः कुर्यान्मार्जनं तु विशेषतः ॥
तस्यापि च दशांशेन प्रोक्तं ब्राह्मणभोजनम् ।
कुमारीभोजनं तद्वद् गुरवे दक्षिणां तथा ॥
एवं गुरुप्रसादेन पुरश्चरणकर्मकृत् ।
मन्त्रसिद्धिमवाप्नोति परमार्थं हि साधकः ॥

( मेरुतन्त्रे )

जपो होमस्तर्पणं च मार्जनं विप्रभोजनम् ।
पञ्चाङ्गकर्मरूपं तदाहुः के चन तत्र तु ॥
चतुरङ्गास्तथा त्र्यङ्गा द्व्यङ्गा एकाङ्गिनोऽपि च ।
मन्त्रास्तिष्ठन्ति वेदेषु तथा मन्त्रेऽपि शावरे ॥
के चित् षडङ्गा मन्त्राः स्युस्तदङ्गानां जपादिति ।
अघमर्षणसूर्यार्घजलपानप्रणामकैः ॥

देवार्चया पञ्चभिश्च तैरेवं स्युर्दशाङ्गकाः ।
दूतीयागात् तथा चौलीकर्मतश्चक्रपूजनात् ॥
भगलिङ्गसमायोगजपाच्च बलिदानतः ।
महाबलिप्रदानाच्च भवन्त्येकादशाङ्गकाः ॥
षोडशाङ्गाः कौलिकानां वामिकानां द्विकोनिताः ।
अमर्यश्मरिसेवातोऽष्टादशाङ्गास्त्वघोरिणाम् ॥
(वैष्वक्सेन्याम)
पञ्चाङ्गोऽयं महायागः पुरश्चरणसंज्ञकः ।
साधनं पुरुषार्थानामन्ये यागाः सहस्रशः ॥
अस्य पञ्चाङ्गयागस्य कलां नार्हन्ति षोडशीम् ।
विशेषतः कलियुगे जपयागः प्रशस्यते ॥
(मेरुतन्त्रे)
अयुताब्दे कलेर्याते त्यजेद्विष्णुशिला महीम् ।
तदर्धे जाह्नवीतोयं तदर्धे देवताशिला ॥
प्राप्ते कलियुगे घोरे वामाचारविमिश्रिते ।
भक्ष्याभक्ष्यविचारादिरहिते म्लेच्छसंकुले ॥
कामक्रोधादिभिर्व्याप्ते जने स्त्रीभिर्विनिर्जिते ।
क्व शिष्यः क्व गुरुर्मन्त्रः क्व तपः क्व च सिद्धयः ॥
जप एव कलौ श्रेयान् शालग्रामार्चनं तथा ।
(यामले)
साङ्गो जपो महादेवि पुरश्चर्येति गीयते ।
तस्यामाचरितायां च मन्त्रः सिद्ध्यति नान्यथा ॥
(पुरश्चरणचन्द्रिकायाम् )
विना येन न सिद्धिः स्यान्मन्त्रो वर्षशतैरपि ।
कृतेन येन लभते साधको वाञ्छितं फलम् ॥

पुरश्चरणसंपन्नो मन्त्रो हि फलदायकः ।
अतः पुरस्क्रियां कुर्यान्मन्त्रवित् सिद्धिकाङ्क्षया ॥
सम्यक्सिद्धैकमन्त्रस्य नासाध्यं विद्यते क्वचित् ।
बहुमन्त्रवतः पुंसः का कथा शिव एव सः ॥
किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ।
रहस्यानां हि मन्त्राणां यदि न स्यात् पुरस्क्रिया ॥
पुरस्क्रिया हि मन्त्राणां प्रधानं बीजमुच्यते ।

(आदियामले)

अकृत्वा तु पुरश्चर्यां यो यत् कर्म समाचरेत् ।
तत् तस्यैवाभिचाराय जायते नात्र संशयः ॥
तस्मादादौ पुरश्चर्यां कृत्वा कर्माणि साधयेत् ।

कर्माणीति षट् कर्माणि ।

तथा ।

हेतुरप्यङ्कुरोत्पत्तौ जलसेकं विना यथा ।
नाङ्कुरं जनयेद्बीजं तथा मन्त्रोऽपि कीर्त्तितः ॥
पुरश्चर्याविहीनो हि सिद्धिहेतुर्न सिद्ध्यति ।
तस्मात् तत्सिद्धये मन्त्री पुरश्चरणमाचरेत् ॥

तत्रादौ पुरश्चरणकाला (वैष्वक्सेन्याम्)

माधवे मार्गशीर्षे वा मकरस्थे दिवाकरे ।
आरभेत पुरश्चर्यां शुक्लपक्षे शुभेऽहनि ॥

(दक्षिणामूर्त्तिकल्पे)

आरभेत् प्रवरो विद्वान् पूर्वपक्षं समाश्रितः ।
पुण्ये मुहूर्त्ते नक्षत्रे तिथौ स्नात्वा यथाविधि ॥

पूर्वपक्षः शुक्लपक्षः । शाक्तादौ तु पक्षद्वयमपि प्रशस्तमेव ।

अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ।
आरभेत पुरश्चर्यां काले दीक्षोक्त एव हि—इति (यामल-)
वचनात् ।

( सुधार्णव- ) धृतवचनम् ।

यस्मिन् काले भवेद्दीक्षा तस्मिन् काले भवेदिदम् ।

(मुण्डमालायाम्)

गुरोरनुज्ञां संप्राप्य विशेषेण शुभे दिने ।
समारभ्य पुरश्चर्यां विधिपूर्वं समापयेत् ॥

(वैशम्पायनसंहितायाम्)

चन्द्रतारानुकूले च शुक्लपक्षे शुभेऽहनि ।
आरभेन्मकरादौ तु सुप्ते विष्णौ जपेन्न च ॥

(श्रीनृसिंहपादार्चनपद्धतावपि)

प्रसुप्ते तु महाविष्णौ पुरश्चर्यां न चाचरेत् ।
मुह्यन्ति सकला मन्त्राः सुप्ते तस्मिन् जगद्गुरौ ॥

मुह्यन्तीति । सर्वेषां मन्त्राणां नारायणात्मकतया तस्मिन् योगरूपनिद्रामाश्रिते सर्वे मन्त्रास्तदीययोगनिद्रया व्यामोहिता भवन्तीत्यर्थः । तथा च मन्त्राणां व्यामोहकाले पुरश्चरणादिना सिद्धिर्न भवतीति भावः । न च तत्तन्मन्त्राणां तत्तद्देवतात्मकतया तन्मन्त्राणामेव तदात्मकत्वेन तन्मन्त्रातिरिक्तमन्त्राणामपि कथं तदात्मकत्वमस्तीति वाच्यम् । 'सर्वदेवमयो हरि'रित्यादिना भगवतः सकलदेवात्मकत्वे सिद्धे तत्तद्देवतात्मकतत्तन्मन्त्राणां तदात्मकत्वस्य सुवचत्वात् । एतेन हरिशयनकालिकपुरश्चरणनिषेधो विष्णुमन्त्रमात्रविषयो वैशम्पायनवचनस्य तत्प्रकरणीयत्वादित्यपास्तम् । 'मुह्यन्ति सकला मन्त्रा' इत्यत्र सकलपदमहिम्ना मन्त्रशब्दस्य वैष्णवावैष्णवमन्त्रपरत्वावगमात् । एवं च 'ब्राह्मणेभ्यो दधि दातव्यं न कौण्डिन्याये'त्यादौ ब्राह्मणादिपदस्य कौण्डिन्येतरब्राह्मणपरत्वदर्शनात् पुरश्चरणप्रकरणीयवैशम्पायनादिवचनैर्निषिद्धकालातिरिक्तो दीक्षाप्रकरणीयसिद्धान्तशेखरादिवचनैर्विहितश्च यः कालः स एव 'यस्मिन् काले भवेद्दीक्षा तस्मिन् काले भवेदिद'मिति सामान्यवचनेन गृह्यते । तेन दीक्षायां विहितोऽपि श्रावणादिः पुरश्चरणे निषिद्ध एव । हरिशयनकाले पुरश्चरणमेव निषिद्धम् । तदतिरिक्तजपपूजादेस्त्वावश्यकत्वमुक्तम् ।

तत्रैव ।

अर्चया स्तोत्रपाठेन जपेन नियमेन च ।
तत्प्रीतिकामुकैर्भक्तैः सेव्यः सुप्तो जनार्दनः ॥
यः प्रसुप्तोऽपि जागर्त्ति विश्वसाक्षी चिदात्मकः ।
स भक्त्या तोषितो येन तस्यैव सफलं जनुः—इति ॥

शक्तिविषयेऽपि (वाडवानलीये)

घनागमे घनान्ते च पुष्पकाले च शाम्भवि ।
आराधयेज्जगद्धात्रीं दिवा वा यदि वा निशि ॥
एकैकदिवसे देव्याः प्रीतिः सांवत्सरी भवेत् ।
विशेषादेषु कालेषु येन नाराधिताऽम्बिका ॥
स दरिद्रो भयग्रस्तः क्षीणायुः साधको भवेत्—इति ।

केचन शाक्तास्तु ।

शिशिरश्च वसन्तश्च शरत्काल इति त्रयः ।
उत्तमा ऋतवो देव्याः पुरश्चरणकर्मणि ॥

इत्यादि-(यामल-) वचनेन हरिशयनकालान्तःपातिनि शरत्काले देवीमन्त्र-पुरश्चरणविधानाद् 'विष्णौ सुप्ते जपेन्नचे'त्यादिवैशम्पायनीयवचनं देवीमन्त्रातिरिक्तमन्त्रपरमिति संकोचं परिकल्प्य हरिशयनकालेऽपि पुरश्चरणमाचरन्ति । अत्र शरत्कालशब्दः शरत्कालान्तःपातिदुर्गोत्सवकालपरः । तन्त्रोक्तवचनेन 'शरत्काले चतुर्थ्यादिनवम्यन्तं विशेषत' इत्यादिवक्ष्यमाण(-कालीकल्प-मुण्डमाला-)दिवचनेन च शक्तिमन्त्रपुरश्चरणविधानेऽपि तस्य हरिशयनाधिकरणीभूतयावत्काले कर्त्तव्यताकत्वे प्रमाणाभावः । अन्यथा 'ऊर्जे तपसि राधे वा शुक्लपक्षस्तु वैष्णवे' इत्यादि (चन्द्रपीठादि) वचनेन 'वैशाखे कार्त्तिके तथे'त्यादिमत्स्यपुरश्चरणप्रकरणीय-(मेरुतन्त्र-)वचनेन च वैष्णवस्यापि मन्त्रस्य हरिशयनकालान्तःपातिनि कार्त्तिकादौ पुरश्चरणविधानाद्वैशम्पायनादिवचनस्य निर्विषयत्वापत्तेः । यदि च तन्त्रोपतन्त्राणामनन्तत्वेन चातुर्मास्येऽपि शक्तिमन्त्रपुरश्चरणविधायैकवचनानन्तरमुपलभ्येत तदा तु संकोचकल्पना न दुष्टा । अन्यथा दुष्टैवेति पुरश्चरणपद्धतिकृतः ।

प्राञ्चस्तु । निषिद्धमासपतितेऽपि ग्रहणादौ सकलमन्त्राणां विशेषपुरश्चरणविधानात् सामान्यपुश्चरणमेव हरिशयनकाले निषिद्धम । विशेषपुरश्चरणे तु नायं निषेध इत्याहुः ।

वस्तुतस्तु । दुर्गोत्सवकालादौ शाक्तादिमन्त्रस्य कार्त्तिकादौ वैष्णवादिमन्त्रस्य भाद्रपदादौ गणेशादिमन्त्रस्य ग्रहणादौ मन्त्रमात्रस्य च पुरश्चरणविधानादनुक्तकालस्य विशेषपुरश्चरणस्याप्यनिषिद्धकाल एवाचरणाच्च निषिद्धकालान्तर्गतं यद्यत्कालावच्छेदेन यद्यद्देवतामन्त्रपुरश्चरणं विशेषवचनैर्विधीयते तत्तत्कालावच्छेदेन तत्तद्देवतामन्त्रपुरश्चरणं कर्त्तव्यमेव । समान्यवचनेन निषिद्धो विशेषवचनेनाविहितश्च यः कालस्तत्र कस्यापि मन्त्रस्य पुरश्चरणमात्रं नाचरणीयमिति सिद्धान्तस्थितिः ।

कार्त्तिके तु मन्त्रमात्रस्य पुरश्चरणं कर्त्तव्यम् ।

सर्वेषामपि मन्त्राणां कुर्यादूर्जे पुरस्क्रियाम्—इति (साधन-समुच्चय-) वचनादुवक्ष्यमाणमहाचीनादिक्रमेण पुरश्चरणे तु न कालादिनियमः। तदुक्तं (सारसंग्रहे)

सर्व एव शुभः कालो नाशुभो विद्यते क्व चित् ।

तथा ।

दिग्देशनियमो नात्र स्थित्यादिनियमो न हि ।

न जपे कालनियमो नार्चादिषु वलिष्वपि ॥

स्वेच्छानियम उक्तोऽत्र महामन्त्रस्य साधने ।

इत्यादिमहामन्त्रशब्दस्तु मन्त्रमात्रोपलक्षकः । अन्यथा महाचीनक्रमेणोप-मन्त्रपुरश्चरणे नियमपरिपालनापत्तेरत्रापि कालपदमहारात्रान्तर्गततत्तत्कालपरं न तु विहितनिषिद्धमासदिवसादिपरम् ।

तथा च ।

प्रातःकालं समारभ्य जपेन्मध्यं दिनावधि—इति ।

पाशवकल्पोक्तौ ।

गते तु प्रथमे यामे तृतीयप्रहरावधि ।

निशायामेव जप्तव्यं रात्रिशेषे जपेन्न च—इति वीरकल्पोक्त-श्च यः कालनियमः स चास्मिन् महाचीनक्रमेणास्तीति तदर्थः ॥

न विशेषो दिवारात्रौ सन्ध्यायां वा महानिशि ।

सर्वकाले यजेद्देवीमस्नातः कृतभोजनः ॥

इति तत्रैवोक्तत्वात् ।

कथमन्यथा ।

वीराणां जपकालस्तु सर्वकालः प्रशस्यते ।

इति (भावचूडामणि-) वचनं सङ्गमनीयम् ।

अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ।

आरभेत पुरश्चर्यां काले दीक्षोक्त एव हि ॥

इत्यादिवीरपुरश्चरणप्रकरणीय-( यामलादि-) वचनविरोधादुक्तयुक्त्या तु कालशब्दस्योक्तकालपरतया वीरशब्दस्य च कौलिकपरतया तदीयकल्पे दिव-सस्य रात्रेश्च पुरश्चरणकालतया वक्ष्यमाणत्वान्न कश्चिद्विरोधः ।

एवं महानीलक्रमेण पुरश्चरणेऽपि नोक्तकालनियमः। उक्तवचनानां तत्राप्युपलम्भात्।

अत्र केचित्।

न जपे कालनियमो महामन्त्रस्य साधने।

इत्यादि-(सिद्धान्तसंग्रह-) वचनान्महामन्त्रपुरश्चरणे कालनियमो नास्तीति वदन्ति।

तन्मते।

न देशकालनियमो भक्ष्यादिनियमो न हि।
शौचादिनियमो नास्ति महामन्त्रस्य साधने॥

इति तस्य वचनात्।

न शौचादिक्रियाः कार्याः स्मृतिशास्त्रप्रचोदिताः।
एकं लिङ्गे गुदे पञ्च इत्याद्या याः प्रकीर्त्तिताः॥

इति स्वच्छन्दभैरवादिवचनाच्च।

महामन्त्रपुरश्चरणे नियमसामान्याभावापत्त्या—

नियमास्तत्र भूयांसः प्रकर्त्तव्याः प्रयत्नतः।
अवैधकरणात् सिद्धिहानिः स्यान्नात्र संशयः॥

इत्यादिमहाविद्यापुरश्चरणप्रकरणीयमहाकालवचनविरोधः स्पष्ट एवेति संक्षेपः।

अथ देशाः ( योगिनीतन्त्रे )।

आदौ पुरस्क्रियां कर्त्तुं स्थाननिर्णय उच्यते।
पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम्॥
तीर्थप्रदेशाः सिन्धूनां संगमः पावनं वनम्।
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः॥
तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम्।
अश्वथामलकीमूलं गोशाला जलमध्यतः॥
देवतायतनं कूलं समुद्रस्य निजं गृहम्।

तथा।

गृहे शतगुणं विद्याद्गोष्ठे लक्षगुणं भवेत्।

कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ॥
म्लेच्छदुष्टमृगव्याधशङ्कातङ्कविवर्जिते ।
एकान्तोपवने निन्दारहिते भक्तिसंयुते ॥
सुदेशे धार्मिके देशे सुभिक्षे निरुपद्रवे ।
रम्ये भक्तजनस्थाने निवसेत् तापसप्रिये ॥
गुरूणां सन्निधाने च चित्तैकाग्रस्थले तथा ।
एषामन्यतमं स्थानमाश्रित्य जपमारभेत् ॥

(महाकापिलपञ्चरात्रे)

क्षेत्रतीर्थगृहारामदेवालयनदीह्रदाः ।
कुटी विविक्तमित्येते देशाः स्युर्मन्त्रसिद्धिदाः ॥

(प्रपञ्चसारे)

समुद्रतीरेऽप्यथ वाऽद्रिशृङ्गे
समुद्रगानां सरितां च तीरे ।
जपेद्विविक्ते निज एव गेहे
विष्णोर्गृहे वा पुरुषो मनस्वी ॥

(मामले)

म्लेच्छदुष्टमृगव्यालशङ्कातङ्कविवर्जिते ।
एकान्ते पावने चिन्तारहिते भक्तिसंयुते ॥
सुदेशे धार्मिके राष्ट्रे सुभिक्षे निरुपद्रवे ।
रम्ये भक्तगणस्थाने निवसेन्न पराश्रये ॥

देवताभेदेन पुरश्चरणस्थानभेदा उक्ता (मेरुतन्त्रे)

जपस्थानानि वक्ष्यामि कृत्तिमाकृत्तिमानि च ।
गुप्तानि सर्वतन्त्रेषु देवतानां पृथक् पृथक् ॥
महागणपतिक्षेत्रं मायूरं नर्मदातटम् ।
महाश्मानं मायूरं गणेशमनुसिद्धिदम् ॥

प्रभासं च कुरुक्षेत्रं पुष्करं भृगुपर्वतम् ।
यमुनायास्तटं काशीं दिनेशमनुसिद्धिदम् ॥
अयोध्या मथुरा माया काशी बदरिकाश्रमः ।
गया च गण्डकीतीरं द्वारिका विष्णुसिद्धिदा ॥
केदारस्त्र्यम्बकं काशी काञ्च्यवन्त्यौ वनानि च ।
गङ्गातीरं वैद्यनाथो रामेशः शिवसिद्धिकृत् ॥
ज्वालामुखी प्रयागश्च कामिनी मालिकापदम् ।
सरस्वत्यास्तथा तीरं शक्तिमन्त्रस्य सिद्धिकृत् ॥
तीरं च कमलेश्वर्या मेखला यक्षपर्वतः ।
अङ्गवङ्गकलिङ्गाश्च क्षुद्रदैवतसिद्धिदाः ॥
कामरूपं च नेपालं हिङ्गुला विन्ध्यवासिनी ।
जालन्धरं पूर्णगिरिर्वाममार्गेण सिद्धिदाः ॥
तटं पद्माकराणां च कदलीक्ष्वर्कवाटिका ।
विद्रुमाकुलितो ग्रामो गणेशस्यातिवल्लभः ॥
पद्माकरतटारण्यकरवारार्कवाटिका ।
गोधूमदूर्वाक्षेत्राणि शिलाभानुमतः प्रिया ॥
तुलस्यश्वत्थ*धात्रीक्षुशालग्रामादिसन्निधौ ।
गोष्ठे श्रोत्रिययुग्ग्रामे हरेर्मुद्धैदिकान्तिके ॥
पश्चिमाभिमुखे लिङ्गे नन्दिवर्जे शिवालये ।
शिवतोषे वटस्यारात् संगमे विपिने ह्रदे ॥
कदलीचूतचम्बेलीसेवन्तीवर्बरीवने ।
†पश्चख्यातनदीतीरे शक्तेः प्रीतिश्च निर्जने ॥

* शालीक्षु—इति २ पु. पा. ।
† ग्रन्थख्यात—इति २-३ पु. पा. ।

पल्वलारान्निम्बकोलशाखोटमधुकाकुले ।
वल्मीके शुष्कनद्यां च मोदन्ते क्षुद्रदेवताः ॥
पितृगेहे श्मशाने च त्रिपथे च चतुष्पथे ।
शून्यालये शिवाकीर्णभुवि तुष्यन्ति वामगाः ॥
गृहे गोष्ठे तथोद्याने वने पर्वतमस्तके ।
नद्यां तत्संगमे देवालये स्याद्वैदिकोऽधिकः ॥
यस्मिन् देशे न गोहत्या नापि ब्रह्मवधो भवेत् ।
न श्रावयन्ति शूद्राश्च सिद्धिस्तत्र तु वैदिकी ॥
म्लेच्छाः पाखण्डिनो धूर्त्ता राजानः सचिवादयः ।
युवत्यश्च न वर्त्तन्ते तत्र सिद्धिरदूरतः ॥

अथ निषिद्धस्थानानि तत्रैव ।

जीर्णदेवालयोद्यानगृहवृक्षतलेषु च ।
नदीकूलाद्रिकूटेषु भूच्छिद्रादिषु नो वसेत् ॥

जीर्णत्वं वृक्षपर्यन्तमन्वेति । नदीकूलनिषेधस्तु समुद्रगाकुलभिन्नपरः ।
( यामले )

राजानः सचिवा राजपुरुषाः प्रभवो जनाः ।
चरन्ति येन मार्गेण न वसेत् तत्र तत्त्ववित् ॥
(मेरौ)
एवं विचार्य मतिमान् कुर्याद्भूमिपरिग्रहम् ।

अथ पुरश्चरणे भक्ष्यादिनियमो ( यामले )

शाकं मूलं फलं भक्ष्यं हविष्यं शक्तवोऽथ वा ।
अथ वा क्षीरमात्रं स्यात् पुरश्चरणवृत्तये ॥

हविष्याण्युक्तानि (स्मृतौ)
हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ।

कलायकङ्गुनीवारा वास्तुकं हिलमोचिका ॥
षष्टिका कालशाकं च मूलकं केमुकेतरत् ।
लवणे सैन्धवसामुद्रे गव्यं च दधि सर्पिषाम् ॥
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।
पिप्पली जीरकं चैव नागरङ्गकतिन्तिडी ॥
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥

( मेरुतन्त्रे )

सत्कन्दफलमूलाशी सद्भिक्षाशी हविष्यभुक् ।
पयोव्रती भवेच्छ्रेष्ठस्तेषाम् .... .... इति ॥

तत्रैव ।

श्रेष्ठं गवां दुग्धमुक्तं मध्यमं सुरभीभवम् ।
अधमं माहिषं चान्यद्दूतस्थानां निषिध्यते ॥

(कुलार्णवे)

यस्यान्नपानपुष्टाङ्गः कुरुते धर्मसंचयम् ।
अन्नदातुः फलस्यार्धं कर्त्तुश्चार्धं न संशयः ॥
तस्मात् सर्वप्रयत्नेन परान्नं वर्जयेत् सुधीः ।
पुरश्चरणकाले तु सर्वकर्मसु शाम्भवि ॥
जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।
मनो दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने ॥

परान्नमिति भिक्षेतराविषयम् । भिक्षायां तु विहितत्वान्न दोषः ।
तदुक्तं ( मेरुतन्त्रे )

वैदिकाचारयुक्तानां शुचीनां श्रीमतां सताम् ।
सत्कुलस्थानजातानां भिक्षाशी चाग्रजन्मनाम् ॥
चरुमूलफलक्षीरदधिभिक्षान्नशक्तवः ।

एतत् सप्तविधं भीक्षालब्धं भक्ष्यं व्रतस्थितैः ॥

(अगस्त्यसंहितायाम्)

दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्जितम् ।
तिलाश्चैवासिता मुद्गाः कन्दः केमुकवर्जितः ॥

(पद्धतौ)

कन्दाश्च पिण्डारुकसेरुकाद्या
गवां दधिक्षीरघृतानि सैन्धवम् ।
मुद्गा यवाः कृष्णतिलाः कलायाः
प्रियङ्गवः षष्टिकतण्डुलाश्च ॥
कदम्बजम्बूपनसाम्रनिम्बा
नारङ्गधात्रीकदलीफलानि ।
कपित्थमिष्टीमृदुदाडिमानि
भक्ष्याणि चैतानि पुरस्क्रियायाम् ॥

मिष्टी मधुररसविशिष्टफलविशेषः । मृदुर्मृद्वीका । इतराणि प्रसिद्धानि । एतद्भिन्नान्यप्यनिषिद्धानि यावकनारिकेलादीनि भक्ष्याण्येव ।

अथ निषिद्धानि ।

क्षारं च भौमं लवणं तथाऽऽढकी
माषा मसूराश्चणकाश्च कोद्रवाः ।
तैलं सितं मुद्गकमारनालकं
क्षौद्रं गुडं फाणितमामिषादिकम् ॥
कूष्माण्डवृन्ताकपलाण्डुलाबु-
च्छत्राकनालं लशुनं करीरः ।
पटोलताम्बूलविभीतकाद्य
मन्यच्च संजातरसान्तरं यत् ॥

अन्धस्तथा पर्युषितं च दग्धं
त्याज्यानि चैतानि वदन्ति धीराः ।

पटोलं पडवर इति प्रसिद्धम् । अलाबुस्तुम्बीफलम् । करीरो वंशाङ्कुरः । अन्ध इत्यन्नम् । अन्यान्यपि निषिद्धानि गृञ्जरकरञ्जादीनि त्याज्यान्येव । गृञ्जरं च गाजर इति मध्यदेशीयभाषया प्रसिद्धा ।

अथासनानि ( मेरुतन्त्रे )

आसनं तु द्विधा प्रोक्तं नित्यकामिकभेदतः ।
कुशाजिनाम्बरैर्युक्तं चतुरङ्गुलमूर्द्धतः ॥
चतुरस्रं द्विहस्तं च सुन्दरं मृदुनिर्मलम् ।
इदं सुखासनं नित्यं जपसिद्धिविधायकम् ॥
अथ काम्यानि वक्ष्यन्ते ज्ञानसिद्ध्यै मृगाजिनम् ।
सर्वसिद्ध्यै व्याघ्रचर्म त्वाविकं रोगनाशनम् ॥
कौशेयं पौष्टिकं प्रोक्तं वेत्रजं श्रीविवर्द्धनम् ।
श्वेते तु कम्बले धर्मसिद्धी रक्तेऽर्थसिद्धयः ॥
पीते कामो द्विजान्येषां मोक्षदः कृष्णकम्बलः ।
दुःखमुक्त्यै रञ्जितं तु नीलरङ्गो न शोभनः ॥

( पुरश्चरणचन्द्रिकायाम् )

अभिचारे कृष्णवर्णं रक्तं वश्यादिकर्मणि ।
शान्तिके धवलं प्रोक्तं चित्रकं सर्वकर्मसु ॥
स्तम्भने गजचर्म स्यान्मारणे माहिषं तथा ।
मैषीचर्म तथोच्चाटे खड्गिजं वश्यकर्मणि ॥
विद्वेषे जाम्बुकं प्रोक्तं भवेद्गोचर्म शान्तिके ।

अथ निषिद्धानि ( मेरुतन्त्रे )

त्यजेन्निषिद्धमप्राप्तौ न निषिद्धे तु संविशेत् ।
निषिद्धान्यथ वक्ष्यन्ते शोकः स्याद्दारुजासने ॥

वंशासने दरिद्रः स्याद्धस्ते स्थानविनाशनम् ।
पाषाणे च तथोच्चाटो ज्वरी स्यान्मृण्मयासने ॥
क्षित्यासने भवेत् पीडा पल्लवे चित्तविभ्रमः ।
तृणासने भवेत् पीडा निषिद्धं त्विष्टिकासनम् ॥
चित्तक्षोभो गृहस्थस्य कृष्णासाराजिने भवेत् ।
वटुर्वनस्थः संन्यासी स्नातकः सिद्धिमाप्नुयात् ॥

( पुरश्चरणचन्द्रिकायाम् )

न दीक्षितो विशेज्जातु कृष्णासाराजिने गृही ।
विशेद्यतिर्वनस्थश्च ब्रह्मचारी च स्नातकः ॥
कुशाजिनाम्बरेणाढ्यं चतुरस्रं समन्ततः ।
एकहस्तं द्विहस्तं वा चतुरङ्गुलमुच्छ्रितम् ॥
स्वस्तिकादिक्रमेणाथ विशेत् तत्र निराकुलः ।
स्वस्तिकं भद्रकं वीरं *कूर्मं चेति चतुष्टयम् ॥
जपेत् प्रशस्तमन्येषां प्रसङ्गादेव कीर्त्तनम् ।
उद्देशानुक्रमेणैव वक्ष्याम्येषां तु लक्षणम् ॥
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तदुदीरितम् ॥
गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वे पादौ तु पाणिभ्यां दृढं बध्वा सुनिश्चलम् ॥
भद्रासनं भवेदेतत् सर्वव्याधि†विनाशनम् ।
एकं पादमथैकस्मिन् विन्यस्योरुणि‡ संस्थितः ॥

---

* सिद्धं चेति २-३ पु. पा. । † विषापहम् २-३ पु. पा. ।
‡ तान्त्रिकप्रयोगः

इतरस्मिँस्तथा चोरौ वीरासनमुदाहृतम् ।

तन्त्रान्तरे तु ।

वामोरुन्यस्तदत्ताङ्घ्रि वीरासनमुदाहृतम्—इत्युक्तम् ।

गुदं निरुद्ध्य गुल्फाभ्यां व्युत्क्रमेण समाहितः ॥

कूर्मासनं भवेदेतत् कूर्ममुत्तानकूर्मकम् ।

गोमुखं कुक्कुटं मात्स्यं धनुःपश्चिमतानकम् ॥

मयूरं लावकं सिद्धं पद्मं सिंहं शवासनम् ।

स्वस्तिकं पद्मकं वीरमिति योगविदो विदुः ॥

कुक्कुटासनबन्धस्थो दोर्भ्यां संबध्य कन्धराम् ।

शेते कूर्मवदुत्तान एतदुत्तानकूर्मकम् ॥

सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे निवेशयेत् ।

दक्षिणे च तथा सव्यं गोमुखं गोमुखं यथा ॥

पद्मासनं तु संयोज्य जानूर्वोरन्तरे करौ ।

निवेश्य भूमौ संस्थाप्य व्योमस्थं कुक्कुटासनम् ॥

वामोरुमूलार्पितदक्षपादं
जानोर्बहिर्वेष्टितदक्षदोष्णा ।

प्रगृह्य तिष्ठेत् परिवर्त्तिताङ्गः
श्रीमत्स्यनाथोदितमासनं तत् ॥

पादाङ्गुष्ठौ तु पाणिभ्यां गृहीत्वा श्रवणावधि ।

धनुराकर्षणं कुर्याद्धनुरासनमीरितम् ॥

प्रसार्य पादौ भुवि दण्डरूपौ
दोर्भ्यां च पादद्वितयं गृहीत्वा ।

जानौ परिन्यस्तललाटदेशो
वसेदिदं पश्चिमतानमाहुः ॥

अवष्टभ्य धरां सम्यक् तलाभ्यां तु करद्वयम् ।
हस्तयोः कुर्परे चापि स्थापयेन्नाभिपार्श्वयोः ॥
समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः ।
मयूरासनमेतत् तु सर्वरोगहरं परम् ॥
भूमौ स्वमस्तकं स्थाप्यं हस्तयोः कुर्परे तथा ।
पादौ खे दण्डवत् कुर्यान्नरकासनमीरितम् ॥
मेढ्रादुपरि निःक्षिप्य सव्यं गुल्फं ततोपरि* ।
गुल्फान्तरं च निःक्षिप्य मुक्तासनमितीरितम् ॥
एतत् सिद्धासनं प्राहुरन्ये वज्रासनं विदुः ।
मुक्तासनं वदन्त्येके प्राहुर्गुप्तासनं परे ॥
वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा
याम्योरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकये-
देतद्व्याधिविघातकारि यमिनां पद्मासनं प्रोच्यते ॥
गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोर्न्यसेत् ।
दक्षिणे सव्यगुल्फं च दक्षगुल्फं च सव्यके ॥
हस्तौ जान्वोस्तु संस्थाप्य स्वाङ्गुलीः संप्रसार्य च ।
व्यातवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ॥
सिंहासनं भवेदेतत् पूजितं योगिभिः सदा ।
उत्तानशववद्भूमौ शयनं तु शवासनम् ॥
शवासनं चार्त्तिहरं चित्तविश्रान्तिसाधनम् ।
(यामले)
ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुलीः ।

---

* अयं 'तस्योपरी'त्यर्थे तान्त्रिकप्रयोगः ।

करौ निदध्यादाख्यातं वज्रासनमनुत्तमम् ॥

(गोरक्षशतके)

योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेन्-
मेढ्रे पादमथैकमेव नियतं कृत्वा समं विग्रहम् ।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन् भ्रुवोरन्तरं
चैतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते ॥

तथा ।

आसनानि च तावन्ति यावन्तो जीवजन्तवः ।
एतेषामखिलान् भेदान् विजनामि महेश्वरः ॥

अथ मालाभेदा ( मेरुतन्त्रे )

अथ मालां प्रवक्ष्यामि द्विविधा सा स्थिरा चला ।
स्थिरा तु स्थिरचित्तानां चञ्चला चलचेतसाम् ॥

(यामले)

माला तु त्रिविधा प्रोक्ता प्रथमा वर्णमालिका ।
द्वितीया चरमालोक्ता तृतीया करमालिका ॥

( मेरुतन्त्रे )

अकारादिक्षकारान्तैर्विन्दुवन्मातृकाक्षरैः ।
अनुलोमविलोमस्थैः क्लृप्तया वर्णमालया ॥
प्रत्येकवर्णयुग्मन्त्राः जप्ताः स्युः सर्वसिद्धिदाः ।
आर्याद्या अपि किं चान्यत् प्रोक्तेयं स्थिरमालिका ॥

(त्रिशक्तिरत्नेऽपि)

अथ वा मातृकामय्या मालया प्रजपेद्बुधः ।
एकैकं वर्णमुच्चार्य वर्णेनान्तरितं जपेत् ॥
सुधीरेव लकारान्तं तत आन्तं समानयेत् ।
मेरुरूपं क्षकारं हि साधको नैव लङ्घयेत् ॥

( मुण्डमालायाम् )

मेरुहीना च या माला मेरुलङ्घ्या च या भवेत् ।
अशुद्धा तु भवेदत्र सा माला निष्फला भवेत् ॥
विचित्रा * विशतन्त्वाभा ब्रह्मनाडीगता तु या ।
तया संग्रथिता ध्येया सर्वकामफलप्रदा ॥
अष्टोत्तरशतजपे त्वादौ क्लीबं समुच्चरेत् ।
ऋ-ॠ-ऌ-ॡ-वर्णाचतुष्टयं क्लीबं प्रचक्षते ॥
वर्णाणामष्टकं वाऽपि काम्यभेदक्रमेण तु ।
अ-क-च-ट-त-प-य-शा इत्येवं चाष्टवर्गकम् ॥

अष्टोत्तरशतजपे कर्त्तव्ये क्लीबचतुष्टयमादावुच्चार्य विलोमसमाप्तौ चापि तच्चतुष्टयं विलोमेन जपेदित्येकः पक्षः ।

अनुलोमविलोमाभ्यां पञ्चाशद्वर्णामुच्चार्य शेषेऽष्टवर्गाक्षराण्युच्चरेदित्यपरः पक्ष इत्यर्थः । क्षकारश्च मेरुत्वेन सकृदेवोच्चार्यस्तदुत्तरं मन्त्रो नोच्चार्य इति तत्र विवेकः ।

प्रकारान्तरमुक्तं ( साधनसमुच्चये )

श्रीमायाकामवाग्योगान्मातृकावर्णयोगतः ।
अनुलोमविलोमाभ्यामष्टोत्तरशतं जपेत् ॥

तन्त्रान्तरे ।

त्रयं गुरो त्रयं देवि गणपाय प्रकीर्त्तितम् ।
न्यूनातिरिक्ते द्वितयं शेषमिष्टाय योजयेत् ॥

( मेरुतन्त्रे )

चराऽथ कथ्यते मालाऽभिचारे तिथिसङ्ख्यकैः ।
मुक्त्यार्थं पञ्चविंशत्या †संतुष्ट्यै सर्वदा जपेत् ॥
त्रिंशद्भिर्धर्मवृद्धिः स्याच्चतुष्पञ्चाशतेप्सितम् ।
शतात् सौख्यं तथाऽष्टाभिः शतात् सफलसिद्धयः ॥

---

* चित्रिणी इति २-३ पु० पा० ।
† ससङ्ख्यैः इति २-३ पु० पा० ।

समस्तसिद्ध्यै रुद्राक्षा मणयो धनदा मताः ।
गतप्राप्तिकरः शङ्खो भोगकृत् स्फाटिको मतः ॥
पुत्रप्रदाः पुत्रजीवाः पद्माक्षाः पुष्टिवर्द्धनाः ।
विद्रुमोत्था वश्यकरा मौक्तिका मुक्तिदा मताः ॥
पापापहाः कुशमयाः स्वर्णजाः कामदायकाः ।
कामवृद्धिस्तारजातैरिन्द्राक्षैः स्याद्गतं पदम् ॥
स्त्रीवश्यार्थं हरिद्रायाः दार्वी पुरुषवश्यकृत् ।
ज्वरहर्त्री तु लाक्षायाः खड्गस्य पितृतृप्तिकृत् ॥
अर्कस्योच्चाटने कार्या श्रीफलैर्ज्ञानसाधने ।
गजदन्तस्य सर्वार्थं मोहने ताम्रजा मता ॥
मारणे चायसी प्रोक्ता धनार्थं श्वेतपद्मजा ।
विषोत्तारे चन्दनोत्था शान्तिकृच्छ्वेतकाष्ठजा ॥
रक्तचन्दनबीजोत्था यक्षिण्यादिकसाधने ।
पद्मकाष्ठोद्भवा तुष्ट्यै देवदारुभवैर्विरुक् ॥
कृष्णकाष्ठसमुद्भूतैस्तामसं कर्म सिद्ध्यति ।
भूतस्तम्भे निम्बजाता जनस्तम्भे समीभवा ॥
महानिम्बेन डाकिन्या भूनिम्बैः स्तम्भनं रुजाम् ।
इन्द्रवृक्षाद्रणस्तम्भोऽभिचारो वानरास्थितः ॥
ऋक्षास्थितो वन्यसिद्धिः शार्दूलात् तस्य देवताः ।
नरास्था राक्षसा वश्या वीरा वश्या हयास्थिभिः ॥
रासभास्था क्षुद्रसिद्धिर्मान्यता तु गजास्थिभिः ।
मृत्तिका*भृष्टमणिजा माला शावरसिद्धिदा ॥
( पुरश्चरणचन्द्रिकायाम् )
रुद्राक्षशङ्खपद्माक्षपुत्रजीवकमौक्तिकैः ।

* भृष्टं जलोपसेकं विना वालुकाग्निसंयोगेन पक्वम् ।

स्फाटिकैर्मणिरत्नैश्च हेमराजतवैद्रुमैः ॥
कुशैः पूर्वोदितैः सर्वैः पर्वभिर्मातृकाक्षरैः ।
गर्दभाश्वनराणां वै दन्तैरप्यभिचारकैः ॥
वैष्णवे तुलसी माला गजदन्तैर्गणेश्वरे ।
त्रिपुराया जपे शस्ता इन्द्राक्षै रक्तचन्दनैः ॥
महाशङ्खमयी ज्ञेया नीलसारस्वते मनौ ।
(त्रिशक्तिरत्नेऽपि)
रहस्यमालया जप्ता तारिणी सिद्धिदा भवेत् ।
अतस्तया प्रजप्तव्या मालया सिद्धिमिच्छता ॥
महाशङ्खमयी माला पञ्चाशन्मणिनिर्मिता ।
रहस्यमाला संप्रोक्ता गोपनीया प्रयत्नतः ॥
कर्णनेत्रान्तरालस्थो महाशङ्खः प्रकीर्त्तितः ।
तदभावे तु कस्यापि कर्त्तव्याऽवयवस्य वै ॥
( यामले )
नरेभाश्वोष्ट्रमुण्डानां छिन्नानां रणसंकटे ।
मालां वै कारयेद्वृत्तां महाविद्यासु साधकः ॥
तदभावे स्फाटिकी स्यान्माला सर्वसमृद्धिदा ।
(वीरतन्त्रे)
रहस्यमालया जप्ता कालिका सर्वसिद्धिदा ।
महाशङ्खास्थिमालोक्ता तारिणीकालिकाविधौ ॥
तदभावे स्फाटकी स्यात् तथा पद्माक्षसंभवा ।
तन्त्रे* ।
स्वयम्भूमालिका देवि भैरव्यां कालिकाविधौ ।

---

* रुद्रयामले इति २ पु०पा० ।

छिन्नमस्ताविधौ देवि महाशङ्खास्थिमालिका ॥
बालायां भुवनेश्वर्यां स्फाटिकी परिकीर्त्तिता ।
गुञ्जामाला तु मातङ्ग्यां धूम्रायां खरदन्तजा ॥
हरिद्रा वगलायां च कमलाक्षा रमाविधौ ।

तथा ।

पूर्वाम्नाये स्फाटिकजैर्दक्षिणे रुद्रनेत्रजैः ।
प्रवालैर्मौक्तिकैर्देवि पश्चिमाम्नायदैवते ॥
उत्तराम्नायदेवीनां महाशङ्खास्थिमालिका ।
ऊर्ध्वाम्नाये स्वयम्भूत्था पाताले रत्नसम्भवा ॥
प्रवालैः सूर्यमन्त्रे च मौक्तिकैः शक्तिमात्रके ।
शिवशक्तिमयी माला रौद्राक्षी स्फाटिकी तथा ॥
रुद्राक्षस्वर्णसंयुक्ता मालां विद्धि शिवात्मिकाम् ।
सर्वतन्त्रेषु रुद्राक्षाः शक्तिमन्त्रे दिवा न हि ॥

(यामले)

रुद्राक्षैर्विहिता माला सर्वकामप्रसाधनी ।
निर्मिता शङ्खमालाभिर्धनं कीर्त्ति च यच्छति ॥
पद्माक्षैः पुष्टिलक्ष्मीदा शत्रुनाशकरी तथा ।
पुत्रञ्जीवभवा पुत्रपशुश्रीधान्यऋद्धिदा ॥
मुक्ताभी रचिता माला सौभाग्यं विपुलं श्रियम् ।
मन्त्रप्रत्यक्षदा सिद्धिं शान्तिकं चाथ पौष्टिकम् ॥
मुक्तिं च तनुते तद्वत् स्फाटिक्यप्यक्षमालिका ।
सारस्वते पद्मरागा पुष्कले च धने तथा ॥
सौवर्णी राजती माला सर्वान् कामान् प्रयच्छति ।
सारस्वते प्रवालोत्था वश्येऽधिकधनागमे ॥

पापक्षयकरी कैःशी रुद्राक्षादिकुशान्तकैः।
सर्वैरेतैर्विरचिता माला स्यान्मुक्तये नृणाम्॥
नित्यं जपं प्रकुर्वीत पर्वभिर्वर्णमालिका।
स्थिरेण मनसा न्यस्ता सर्वान् कामान् प्रयच्छति॥
उच्चाटनेऽश्वदन्तानां माला प्रोक्ताऽश्ववालकैः।
खरदन्तैरधोभूतैर्मनुष्यस्नायुतन्तुना॥
ग्रथितैर्निर्मिता माला शत्रूणां नाशिते मता।
प्रेतदन्तैरधोभूतैः कर्त्तव्या जपमालिका॥
साध्यदेहभवैः केशैः प्रोतव्या द्वेषकर्मणि।
अङ्गुलीजपसंख्यानमेकमेवमुदाहृतम्॥
पुत्रजीवैर्दशगुणैः शतं शङ्खैः सहस्रकम्।
प्रवालैर्मणिरत्नैश्च दशसाहस्रकं स्मृतम्॥
तदेव स्फाटिकं प्रोक्तं मौक्तिकैर्लक्षमुच्यते।
पद्माक्षैर्दशलक्षं स्याद्राजतैः कोटिरुच्यते॥
सौवर्णैर्द्विगुणा सैव सर्वैः शतगुणा स्मृता।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं फलम्॥
श्वेतपद्माक्षमालाभिरपि स्यादमितं फलम्।
मातृकावर्णसंभूतमालयाऽपि तदेव तु॥

(मेरुतन्त्रे)

कुशग्रन्थ्या जपेद्विप्रः सुवर्णमणिभिर्नृपः।
पुत्रजीवैर्जपेद्वैश्यः पद्माक्षैः सर्व एव हि॥
रुद्राक्षस्फाटिकेन्द्राक्षमध्ये किंचिन्न दापयेत्।
मध्ये दत्वा जपं कुर्वन् काममोक्षौ विनाशयेत्॥

रुद्राक्षप्रभेदकथनपूर्वकं तन्माहात्म्यमाह तत्रैव ।

धात्रीफलोपमश्श्रेष्ठो मध्यो वदरसन्निभः ।
अधमश्चणकाभः स्यात् ततो हीनो विपत्तिकृत् ॥
श्वेतरक्तसुवर्णाभकृष्णवर्णा द्विजादितः ।
एतेषु ब्राह्मणः श्रेष्ठो जपमालाकृते भृशम् ॥
अलाभे तु द्विजातीनामपि वा स्वस्वजातयः ।
कलौ तु दुर्लभा विद्या यथा विप्राः स्वधर्मगाः ॥
अतिस्थूलोऽतिसूक्ष्मश्च स्फुटितो भङ्गुरो लघुः ।
भिन्नः पुराधृतो जीर्णो रुद्राक्षो न शुभप्रदः ॥

तथा ।

एकवक्त्रैर्द्विवक्त्रैश्च चतुर्वक्त्रैश्च पञ्चभिः ।
षड्वक्त्रैर्वाऽथ कर्त्तव्या मिथो मिश्राँस्तु वर्जयेत् ॥
एकवक्त्रं शिवस्तस्य माला तु जपतो हरेत् ।
ब्रह्महत्यादिपापानि तथा राज्यादिकेष्टदा ॥
उमाशङ्करनामा यो द्विमुखोऽयं व्यपोहति ।
गोहत्यादिकपापानि गार्हस्थाश्रमसौख्यदः ॥
त्रिमुखस्त्वग्निरूपः स्यात् स्त्रीहत्यादिकपापहा ।
धर्मार्थकामाः सिध्यन्ति धारणात् तज्जपादपि ॥
चतुर्मुखो भवेद्ब्रह्मा भ्रूणहत्यादिनाशकः ।
स्फुरन्ति सकला विद्या वाक्सिद्धिश्चापि जायते ॥
पञ्चवक्त्रः शिवः साक्षात् सर्वपापहरः स्मृतः ।
शैवगाणेशशाक्तानां द्रुतं सिद्धिस्तु तज्जपात् ॥
कार्त्तिकेयस्तु षड्वक्त्रः स्खलितव्रतपापहा ।

विधिना दक्षिणे बाहौ धारणात् समरे जयः ॥
सप्तवक्त्रो महानागोऽनन्तो नामाथ तज्जपात् ।
अनन्ता सिद्धयः सर्पविषभीश्च न जायते ॥
अष्टवक्त्रो गणेशः स्यात् सर्वविघ्ननिवारकः ।
नश्यन्ति तज्जपात् सर्वे कामक्रोधादिशत्रवः ॥
नववक्त्रो भैरवः स्याद्वाममार्गस्थदेवताः ।
जपादेव प्रसीदन्ति वामबाहौ स्थितौघहा ॥
जनार्दनो दशमुखो जपान्नश्यन्ति धारणात् ।
पिशाचग्रहवेतालब्रह्मराक्षसपन्नगाः ॥
एकादशमुखः साक्षाद्रुद्र एवास्य धारणात् ।
जपाच्च हयमेधादियज्ञानां फलभाग्भवेत् ॥
द्वादशास्यो भास्करः स्यात् तज्जपाद्धारणात् तथा ।
तेजस्वी च प्रतापी च गोमेधफलभाग्भवेत् ॥
त्रयोदशमुखः साक्षाद्विश्वेदेवात्मकः स्मृतः ।
श्राद्धकाले धृतो दद्यात् पितृणामक्षयां गतिम् ॥
चतुर्दशमुखे जप्तं तदाऽनन्ताय जायते ।
पूज्यते देवमनुजैरक्षयां लभते गतिम् ॥

तथा ।

देवान् पुष्णन्ति ये देवा पशवस्ते तु वैदिकाः ।
तान् पातयन्ति ये कौले तेषां शास्ता स्वयं यमः ॥
तेषां संरक्षणार्थाय नान्यो रुद्राक्षतो भुवि ।
रुद्राक्षाः सर्वदेवानां मन्त्रसिद्धिविधायकाः ॥
रुद्राक्षं कण्ठमाश्रित्य शुनको म्रियते यदि ।

सोऽपि रुद्रत्वमाप्नोति किं पुनर्मानुषादयः ॥
उच्छिष्टो वा विकर्मस्थो युक्तो वा सर्वपातकैः ।
मुच्यते सर्वपापेभ्यो नरो रुद्राक्षधारणात् ॥
रुद्राक्षमालिकां कण्ठे धारयेद्भक्तिवर्जितः ।
पापकर्माऽपि यो नित्यं रुद्रलोके महीयते ॥
अरुद्राक्षधरो भूत्वा यत्किंचित् कर्मवैदिकम् ।
कुर्याद्विप्रस्तु यो मौढ्यान्नासावाप्नोति तत्फलम् ॥

रुद्राक्षधारणप्रकारस्तत्रैव ।

शिरोमाला तु षड्विंशद्द्वात्रिंशत्कण्ठमालिका ।
कूर्परे षोडश प्रोक्ता द्वात्रिंशन्मणिबन्धयोः ॥
अष्टोत्तरशतैर्युक्तमुपवीतं विधीयते ।
तदर्धमुरसो माला शिखायामेकमुच्यते ॥
कर्णयोश्चापि षट्संख्या धारणक्रम ईरितः ।
संख्याहीनं न कर्त्तव्यमधिकं नैव दूष्यति ॥

तन्त्रान्तरे ।

रुद्राक्षान् कण्ठदेशे दशनपरिमितान् मस्तके विंशती द्वे
षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव ।
बाह्वोरिन्दोः कलाभिर्नयनयुगकृते चैकमेकं शिखायाम्
वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः ॥
रुद्राक्षान् धारयत्येवं देहान्ते स शिवो भवेत् ।
बहुलं लभते पुण्यं भाग्यवानिह जायते ॥
स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने ।
प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः ॥
रुद्राक्षधारी भूत्वा च यत्किंचित् कर्म वैदिकम् ।

यो विप्रः सततं कुर्यात् तत् कर्म सफलं भवेत् ॥
कण्ठे शिरसि हस्ते च कर्णयोरुपवीतके ।
रुद्राक्षधारणादेव रुद्रो भवति मानवः ॥
खादनन्मांसं पिबन्मद्यं संगच्छन्मर्त्यजातिषु ।
सद्यो भवति पूतात्मा रुद्राक्षं मूर्ध्नि धारयन् ॥

देवताभेदेन मालाग्रथनकालभेद उक्तस्तत्रैव ।

चतुर्थ्यां प्रोतयेन्मालां गणनाथस्य मन्त्रकैः ।
मध्याह्नेऽर्कस्य सप्तम्यां रवौ वातस्य मन्त्रकैः ॥
द्वादश्यां वैष्णवी माला प्रोतव्या विष्णुमन्त्रतः ।
त्रयोदश्यां तु सन्ध्यायां तन्मन्त्रैः शिवमालिकाम् ॥
अष्टम्यां वा चतुर्दश्यां नवम्यां भूमिनन्दने ।
शक्तीनामपि कर्त्तव्या भुक्त्वा रात्रौ यथाविधि ॥

सूत्रभेदा उक्तास्तत्रैव ।

ग्रथिता पट्टसूत्रेण देव्याः प्रीत्यै तु मालिका ।
कार्पासैर्वैष्णवी माला वज्रसूत्रैरथापि वा ॥
ऊर्णाभिर्वा वल्कलैर्वा शैवी कार्या ससूत्रजा ।
प्रायशः सर्वदेवानां सूत्रोत्पत्तिविधिं शृणु ॥
सूत्रं द्विजेन्द्रपुण्यस्त्रीनिर्मितं ग्रन्थिवर्जितम् ।
त्रिगुणं त्रिगुणीकृत्य ग्राह्यं प्रक्षाल्य यत्नतः ॥

(उमामहेश्वरे)

या जीवत्पुत्रका नारी सुन्दरी पतिवत्सला ।
तया कर्त्तितसूत्रेण व्यूढा माला सुभावहा ॥

तन्त्रान्तरे ।

कन्याकर्त्तितसूत्रेण दुर्वर्णस्वर्णजैरपि ।

दुर्वर्णं रजतम् ।

मालाग्रथनप्रकारस्तत्संस्कारश्च (पुरश्चरणचन्द्रिकायाम्)

अथातो ग्रथनं वक्ष्ये मालानां तन्त्रबोधितम् ।
एकभक्तं विधायादौ साधको ग्रथयेत् स्वयम् ॥
स्वयं च माला ग्रथिता स्वघृष्टं
न धार्यते चन्दनमित्यनेन ।
निषिध्यते चन्दनसन्निधानात्
स्रगत्र पुष्पस्य न चाक्षमाला ॥
कृतनित्यक्रियाशुद्धः उक्तेष्वृक्षेषु मन्त्रवित् ।
यथाकामं यथालाभादक्ष्याण्यानीय यत्नतः ॥
अन्योन्यसमरूपाणि नातिस्थूलकृशानि च ।
कीटादिभिरदुष्टानि न जीर्णानि नवानि वै ॥
गव्यैस्तु पञ्चभिस्तानि प्रक्षाल्य च पृथक् पृथक् ।

पञ्चगव्येषु विशेष उक्तो ( मेरुतन्त्रे )

दुग्धकाञ्चनवर्णायाः श्वेतायाश्चैव गोमयम् ।
गोमूत्रं ताम्रवर्णाया नीलायाश्च भवेद्दधि ॥
घृतं तु कृष्णवर्णाया एवं पञ्चामृतेऽपि च ।
गवां वर्णास्तु सुलभाः सन्ति देशेषु कुत्र चित् ॥
तत्र वर्णविभागेन पञ्चगव्यानि चाहरेत् ।
वर्णालाभेन दोषोऽस्ति मात्राहीनं तु वर्जयेत् ॥
गोसकृद्द्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गुणम् ।
क्षीरमष्टगुणं प्रोक्तं पञ्चगव्यं तथा दधि ॥
गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम् ।

*आप्यायस्वेति च क्षीरं †दधि क्राव्णेति वै दधि ॥
‡तेजोऽसि शुक्रमित्याज्यं §देवस्य त्वा कुशोदकम् ।
क्षालयेत् पञ्चगव्याद्यैः .... .... .... इति ॥

(पुरश्चरणचन्द्रिकायाम्)

अश्वत्थपत्रैर्नवकैः पद्माकारेण कल्पिते ।
सूत्रे मणीन् सगन्धाभिक्षालितांस्तत्र निःक्षिपेत् ॥
तारं शक्तिं मातृकाश्च सूत्रे चैव मणिष्वथ ।
विन्यस्य पूजयेदाज्यैर्जुहुयाच्चैव शक्तितः ॥
मालामेकैकमादाय सूत्रे वै योजयेत् सुधीः ।
मुखं मुखे तु संयोज्य पुच्छं पुच्छे तु योजयेत् ॥
गोपुच्छसदृशी कार्या यद्वा सर्पाकृतिः शुभा ।
तत्सजातीयमेकाक्षं मेरुत्वेनाग्रतो न्यसेत् ॥

(मेरुतन्त्रे)

एको मेरुस्तत्र देयः सर्वेभ्यः स्थौल्ययुक् च यः ।
आद्यं स्थूलं ततस्तस्मान्न्यूनं न्यूनतरं ततः ॥
सर्पाकारां प्रकुर्वीत ब्रह्मग्रन्थिमणिं प्रति ।
अथ वा ग्रन्थिरहितं दृढरश्मिसमन्वितम् ॥
त्रिरावृत्त्याऽथ मध्येन चार्धावृत्त्याऽन्तदेशतः ।
ग्रन्थिः प्रदक्षिणावर्त्तः स ब्रह्मग्रन्थिरुच्यते ॥
अन्योन्यघर्षणादेव जपहानिर्भवेद्ध्रुवम् ।
मध्यतो ग्रन्थयः कार्या नात्र मुक्तादि विन्यसेत् ॥

---

* वाजसनेयिसंहितायाम् १२ अ० ११४ मन्त्रः ।
† वाजसनेयिसंहितायाम् २३ अ० ३२ मन्त्रः ।
‡ वाजसनेयिसंहितायाम् २२ अ० १ मन्त्रः ।
§ वाजसनेयिसंहितायाम् १ अ० १० मन्त्रः ।

(पुरश्चरणचन्द्रिकायाम्)

एकैकमणिमध्ये तु ब्रह्मग्रन्थिं प्रकल्पयेत् ।
जपमालां विधायेत्थं ततः संस्कारमाचरेत् ॥
क्षालयेत् पञ्चगव्येन सद्योजातेन सज्जलैः ।
ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ॥
भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः ।
चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत् ॥

ॐ वामदेवाय नम ।
ॐ ज्येष्ठाय नमः ।
ॐ श्रेष्ठाय नमः ।
ॐ रुद्राय नमः ।
ॐ कालाय नमः ।
ॐ कलविकरणाय नमः ।
ॐ बलप्रमथनाय नमः ।
ॐ सर्वभूतदमनाय नमः ।
ॐ मनोत्मनाय नमः ।

धूपयेत् तामघोरेण—

ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वतः सर्वसर्वेभ्यो नमस्ते रुद्ररूपेभ्यः सर्वतः सर्वसर्वेभ्यः ।

लेपयेत् तत्पुरुषेण तु ।

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।

मन्त्रयेत् पञ्चमेनैव प्रत्येकं तु शतं शतम् ॥

ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्माशिषो मेऽस्तु सदा शिवोम् ।

मेरुश्च पञ्चमेनैव ततो मन्त्रेण मन्त्रयेत् ।
संस्कृत्यैवं बुधो मालां तत्प्राणाँ स्थापयेत् ततः ॥

( क्रियासंग्रहे )

मन्त्रयेन्मूलमन्त्रेण क्रमेणोत्क्रमयोगतः ।

तथैव मात्रिकावर्णैर्मन्त्रयेन्मन्त्रतत्त्ववित् ॥
पूजयित्वा यथान्यायमिष्टदेवमनुक्रमात् ।
न्यासपूर्वं जपेन्मन्त्रमष्टोत्तरसहस्रकम् ॥
जुहुयाच्च दशांशेन यस्य देवस्य यत् प्रियम् ।

(योगिनीतन्त्रे)

होमकर्म ततः कुर्याद्देवताभावसिद्धये ।
अष्टोत्तरशतं हुत्वा संपाताज्यं विनिःक्षिपेत् ॥
होमकर्मण्यशक्तश्चेद्द्विगुणं जपमाचरेत् ।
त्वं माले सर्वलोकानां सर्वसिद्धिप्रदा मता ॥
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ।
इत्युक्त्वा परिपूज्याथ गोपयेद्यत्नतो गृही ॥

(यामले तु)

माले माले महामाले सर्वतत्त्वस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥
मायाबीजादिकं कृत्वा रक्तपुष्पैः समर्चयेत्—इत्युक्तम् ।

(पुरश्चरणचन्द्रिकायाम्)

एवं कृत्वाऽक्षमालायां जपेन्मातृकया सुधीः ।
मातृकावर्णभेदेभ्यः सर्वे तन्त्राः प्रजज्ञिरे ॥
अतः सकलमन्त्राणां जपः कार्योऽनया स्रजा ।
गुरुं संपूज्य तद्धस्ताद्गृह्णीयात् सर्वसिद्धये ॥
गायत्रीं तु जपन् कश्चिन्मालां ग्रथ्नाति तान्त्रिकः ।
न हीत्थं ग्रथनं क्वापि मन्त्रशास्त्रे निरूपितम् ॥
अशुचिर्न स्पृशेदेनां करभ्रष्टां न कारयेत् ।

(मेरुतन्त्रे)

येन मन्त्रेण या माला कृता तं तु जपेत् तया ।
अन्यमन्त्रजपाच्छापो देवतायाः प्रजायते ॥
दृढसूत्रं नियुञ्जीत जपे त्रुट्यति नो यथा ।
जीर्णे सूत्रे पुनः सूत्रं ग्रन्थयित्वा शतं जपेत् ॥

(पुरश्चरणचन्द्रिकायाम्)

प्रमादात् पतिते हस्ताच्छतमष्टोत्तरं जपेत् ।
तावन्निषिद्धं संस्पर्शे क्षालयित्वा यथोदितम् ॥

(मेरुतन्त्रे)

तर्जन्या न स्पृशेत् सूत्रं कम्पयेन्नैव धूपयेत् ।
न स्पृशेद्वामहस्तेन करभ्रष्टां न कारयेत् ॥
अक्षाणां चालनेऽङ्गुष्ठश्चान्यमक्षं न संस्पृशेत् ।
जपकाले सदा विद्वान्मेरुं चैव न लङ्घयेत् ॥
परिवर्त्तनकाले तु संघट्टं नैव कारयेत् ।
कलिः खटखटाशब्दे दोलमाने चलेन्मतिः ॥
चलिते चैव विद्वेषः स्फुटिते व्याधिसम्भवः ।
हस्तच्युते महाविघ्नः सूत्रच्छेदे विनाशकृत् ॥

(क्रियासंग्रहे)

छिन्ने सूत्रे तु मालायाः पुनः संस्कारमाचरेत् ।
अष्टोत्तरसहस्रं तु जपेद्वाऽष्टोत्तरं शतम् ॥

(शैवागमे)

यदा संत्रुट्यते माला ग्रन्थयित्वा च पूर्ववत् ।
प्रतिष्ठितायां तस्यां तु मन्त्रं जप्यादनन्यधीः ॥

अन्यत्रापि ।

त्रुटिता चेत् स्वयं माला प्रायश्चित्तं समाचरेत् ।

गजान्तकसहस्रं तु जपहोमं समाचरेत् ॥
पुनः संग्रथनं कृत्वा प्राणस्थापनपूर्वकम् ।
तदा माला सिद्धिदा स्यान्नान्यथा शाङ्करं वचः ॥
अग्निदग्धे जपेल्लक्षं नष्टे भग्ने द्विलक्षकम् ।
चौरनीते षट्सहस्रं पतिते तु शतं जपेत् ॥

( पुरश्चरणचन्द्रिकायाम् )

अङ्गुष्ठस्थामक्षमालां चालयेन्मध्यमाग्रतः ।
तर्जन्या न स्पृशेत् सोऽयं मुक्तिदो गणनक्रमः ॥
भुक्तौ मुक्तौ तथा हृष्टौ मध्यमायां जपेत् सुधीः ।
अङ्गुष्ठानामिकाभ्यां तु जपेदुत्तमकर्मणि ॥
तर्जन्यङ्गुष्ठसंयोगाद्विद्वेषोच्चाटने जपः ।
कनिष्ठाङ्गुष्ठसंयोगाज्जपेन्मारणकर्मणि ॥
अन्यकाले इमां मालां पूजयित्वा तु गोपयेत् ।
गुरुं प्रकाशयेद्विद्वान्न तु मन्त्रं कदा चन ॥
अक्षमालां च मुद्रां च गुरोरपि न दर्शयेत् ।
भूतराक्षसवेतालाः सिद्धगन्धर्वचारणाः ॥
हरन्ति प्रकटं यस्मात् तस्माद्गुप्तं जपेत् सुधीः ।

अथ स्त्रीशूद्राणां मालासंस्कारः ( मेरुतन्त्रे )

शूद्रार्थं वा स्त्रियामर्थे मालासंस्कार उच्यते ।
गणेशसूर्यविष्ण्वीशदुर्गाः संपूज्य भक्तितः ॥
मालायामथ तां मालां ह्सौँ बीजेनाभिमन्त्रिताम् ।
अष्टोत्तरशतं पञ्चगव्ये तां स्थापयेत् त्र्यहम् ॥
चतुर्थे तु समुद्धृत्य क्षालयेदस्त्रमन्त्रतः ।
हृन्मन्त्रेण ग्रन्थयित्वा स्थण्डिले तां निधापयेत् ॥

तस्मादुत्तोल्य तां मालां स्थापयेद्धेमपात्रके ।
पञ्चामृतेन संस्नाप्य शीतलेन जलेन च ॥
चन्दनेन सुगन्धेन कस्तूरीकुङ्कुमादिभिः ।
अभिषेकं ततः कुर्याद्ध्सौँ मन्त्रेण साधकः ॥
नव ग्रहान् पूजयित्वा दिक्पालाँश्चापि पूजयेत् ।

अत्रापि मातृकावर्णैर्मूलमन्त्रेण च मालामभिमन्त्र्य तस्यां प्राणप्रतिष्ठापूर्वकमिष्टदेवतार्चनं पूर्ववत् कार्यमिति संप्रदायविदः ।

तथा ।

तिलेन घृतयुक्तेन शक्तितो होमयेत् ततः ।
स्वर्णं तु दक्षिणां दद्याद्गुरवे मणिसंख्यकाम् ॥
तन्मन्त्रजापिनो विप्रान् भोजयेद्वाऽथ वैदिकान् ।
अभावे स्वर्णपात्रस्य ग्राह्यमश्वत्थपत्रकम् ॥
मालासंस्कार इत्युक्तो जपे स्यात् सिद्धिदायकः ।

अथ वाममार्गिणां मालासंस्कारस्तत्रैव ।

कीकशादिकमालानां कौलिकानां च वामिनाम् ।
सिद्ध्यै वक्ष्यामि संस्कारं सर्वतन्त्रेषु गोपितम् ॥
शिल्पिनं पूजयेदादौ वस्त्रगन्धानुलेपनैः ।
संहृष्टः कलयेन्मालां मन्त्रपूतं पिबेन्मधु ॥
पञ्चाशन्मणिभिः कार्या ऋतुमत्या भगे क्षिपेत् ।
निशामेकां समुद्धृत्य कारणैः क्षालयेत् ततः ॥
शुद्धोदैर्मूलमन्त्रेणाभिषिञ्चेद्विजयारसैः ।
प्रक्षाल्य धूपयेत् पश्चात् प्रोतयेदिष्टसूत्रकैः ॥
सूत्रं स्वेष्टजपे नीलं कृष्णं मारणकर्मणि ।
मोहने हरितं स्तम्भे धूमाभं द्विषि तालभम् ॥

शान्तौ पुष्टौ सितं द्वेषे रक्तमुच्चाटने भवेत् ।
वश्ये पीतं कषायं तु विक्षेपकरणे मतम् ॥
चक्रपूजां ततः कुर्यात् साष्टोत्तरसहस्रकम् ।
हुनेन्मध्यपलाभ्यां च मूलमन्त्रेण साधकः ॥
ततो वलिं यथान्यायं महिषादेः प्रदापयेत् ।
शक्तीश्च साधकांश्चापि भोजयेन्मणिसंख्यकान् ॥
एवं संसाधितां मालां पशवे न प्रदापयेत् ।

अथ करमाला ( बालातन्त्रे )

तर्जनी मध्यमाऽनामा कनिष्ठा चेति ताः क्रमात् ।
तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका ॥
पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् ।

तन्त्रान्तरे ।

अनामामध्यमारभ्य कनिष्ठानुक्रमेण च ।
तर्जनीमूलपर्यन्ता करमाला प्रकीर्त्तिता ॥

सनत्कुमारोऽपि ।

अनामामध्यमारभ्य कनिष्ठादित एव च ।
तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥
अनामामूलमारभ्य कनिष्ठादित एव च ।
तर्जनीमध्यपर्यन्तमष्टपर्वसु संजपेत् ॥

अयमुत्तरः श्लोकश्चाष्टोत्तरशतसंख्यजपे कर्त्तव्ये शतजपोत्तरमष्टजपपरः । इदं च वैष्णवविषयम् ।

शक्तिविषये तु ।

आरभ्यानामिकामूलात् प्रादक्षिण्यक्रमेण तु ।
मध्यमामूलपर्यन्तं जपेदष्टसु पर्वसु ॥
अनामामध्यमं पर्व मेरुं कृत्वा न लङ्घयेत् ।

तर्जन्यग्रे तथा मध्ये यो जपेत् तत्र मानवः ॥
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो धनम् ।

इति (सिद्धान्तसारे) प्रोक्तम् ।
तत्रैव ।

अनामामूलमारभ्य प्रादक्षिण्यक्रमेण तु ।
तर्जनीमूलपर्यन्तं जपेन्नवसु पर्वसु ॥

इदं च द्वादशावृत्त्याऽष्टोत्तरशतसंख्यजपपरम् ।
श्रीविद्यायां तु (यामले) ।

अनामामध्यमायाश्च मूलाग्रं तु द्वयं द्वयम् ।
कनिष्ठायाश्च तर्जन्यास्त्रयं पर्व महेश्वरि ॥
अनामामध्यमायाश्च मेरुः स्याद् द्वितयं शुभम् ।
प्रदक्षिणक्रमाद्देवि जपेत् त्रिपुरसुन्दरीम्—इति विशेष उक्तः ॥

(मेरुतन्त्रे)

अङ्गुलीर्न वियुञ्जीत जपकाले कदा चन ।
अङ्गुलीनां वियोगेन च्छिद्रेषु स्रवते जपः ॥
नोल्लङ्घयेच्च गणनां किंचित् संकोचयेत् तलम् ।
न दर्शयेत् करं नो चेत् फलं गृह्णन्ति राक्षसाः ॥

(पुरश्चरणचन्द्रिकायाम्)

अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने ।
पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥
गणनाविधिमुल्लङ्घ्य यो जपेत् तु प्रमादतः ।
गृह्णन्ति राक्षसा यस्मान्नियतं गणयेद्बुधः ॥

(रुद्रयामले)

नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्नैव पुष्पकैः ।
न चन्दनैर्मृत्तिकया जपसंख्यां न कारयेत् ॥
लाक्षाकुसितसिन्दूरं गोमयं च करीषकम् ।

विलोड्य गुडिकां कृत्वा जपसंख्यां तु कारयेत् ॥

(मन्त्रतन्त्रप्रकाशे)

तत्राङ्गुलिजपं कुर्वन् साङ्गुष्ठाङ्गुलिभिर्जपेत् ।
अङ्गुष्ठेन विना कर्म कृतं तन्निष्फलं भवेत् ॥

(मुण्डमालायाम्)

नित्यं जपं करे कुर्यान्न तु काम्यं कदा चन ।
काम्यमपि करे कुर्याद्यदि माला न विद्यते ॥

अथ मुद्राप्रकरणम् ।

तत्र मुद्रापदार्थ उक्तः ( कुलार्णवे )

मुदं कुर्वन्ति देवानां मनांसि द्रावयन्ति च ।
तस्मान्मुद्रा इति ख्याता दर्शितव्याः कुलेश्वरि ॥

(मेरुतन्त्रेऽपि)

मुदं स्वरूपलाभाभ्यां देहद्वारेण चात्मनः ।
या अर्पयन्त्ययत्नेन मुद्रास्ताः शक्तयो मताः ॥
मोदयन्ति ग्रहादिभ्यः पापौघं द्रावयन्ति च ।
मोदनं द्रावणं यस्मादतो मुद्राः प्रकीर्त्तिताः ॥

(यामले)

मोदनात् सर्वदेवानां द्रावणात् पापसन्ततेः ।
तस्मान्मुद्रेयमाख्याता सर्वकर्मार्थसाधिनी ॥
अथ मुद्राः प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताः ।
याभिर्विरचिताभिश्च मोदन्ते मन्त्रदेवताः ॥
अर्चयेज्जपकाले च ध्याने काम्ये च कर्मणि ।
स्नाने चावाहने शङ्खे प्रतिष्ठायां च रक्षणे ॥
नैवेद्ये च तथाऽन्यत्र तत्तत्कल्पप्रकाशिते ।
स्थाने मुद्रा दर्शितव्याः स्वस्वलक्षणलक्षिताः ॥

आवाहनादिका मुद्रा नव साधारणा मताः ।
तथा षडङ्गमुद्राश्च सर्वमन्त्रेषु योजयेत् ॥
एकोनविंशतिर्मुद्रा विष्णोरुक्ता मनीषिभिः ।
शङ्खचक्रगदापद्मवेणुश्रीवत्सकौस्तुभाः ॥
वनमाला तथा ज्ञानमुद्रा विल्वाह्वया तथा ।
गरुडाख्या तथा मुद्रा विष्णोः सन्तोषवार्धिनी ॥
नारसिंही च वाराही हयग्रीवी धनुस्तथा ।
बाणमुद्रा ततः पर्शुर्जगन्मोहनिका तथा ॥
काममुद्रा परा ख्याता शिवस्य दश मुद्रिकाः ।
लिङ्गयोनित्रिशूलाख्या मालेष्टाभीमृगात्मिकाः ॥
खट्वाङ्गा च कपालाख्या डमरुः शिवतोषकः ।
सूर्यस्य चैव पद्माख्या सप्त मुद्रा गणेशितुः ॥
दन्तपाशाङ्कुशा विघ्नपर्शुलड्डुकसंज्ञकाः ।
बीजपूराह्वया मुद्राः विज्ञेया विघ्नपार्चने ॥
पाशाङ्कुशवराभीतिखड्गचक्रधनुःशराः ।
मौशली मुद्रिका दौर्गी मुद्राः शक्तेः प्रियङ्कराः ॥
लक्ष्मीमुद्राऽर्चने लक्ष्मीवाग्वादिन्यास्तु पूजने ।
अक्षमाला तथा वीणा व्याख्या पुस्तकमुद्रिका ॥
सप्तजिह्वाह्वया मुद्रा विज्ञेया वह्निपूजने ।
मत्स्यमुद्रा च कूर्माख्या लेलिहा मुण्डसंज्ञका ॥
महायोनिरिति ख्याता सर्वसिद्धिसमृद्धिदा ।
शक्त्यर्चने महायोनिः श्यामादौ मुण्डमुद्रिका ॥
मत्स्यकूर्माख्यलेलिहाः सर्वसाधारणे मताः ।

दशैमा मुद्रिका ज्ञेयास्त्रिपुरायाः प्रपूजने ॥
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरी बीजयोन्याख्या त्रिखण्डा परिकीर्त्तिता ॥
कुम्भमुद्राऽभिषेके स्यात् पद्ममुद्राऽऽसने तथा ।
कालकर्णी प्रयोक्तव्या विघ्नप्रशमकर्मणि ॥
गालिनी च प्रयोक्तव्या जलशोधनकर्मणि ।
श्रीगोपालार्चने वेणुर्नृहरेर्नारसिंहिका ॥
वराहस्य च पूजायां वाराहास्यां प्रदर्शयेत् ।
रामार्चने धनुर्बाणमुद्रे पर्शुस्तथाऽर्चने ॥
पर्शुरामस्य विज्ञेया जगन्मोहनसंज्ञका ।
वासुदेवाह्वया ध्याने कुम्भमुद्राऽनुरक्षणे ॥
सर्वत्र प्रार्थने चैव प्रार्थनाख्यां प्रयोजयेत् ।
उद्देशानुक्रमादासामुच्यन्ते लक्षणानि च ॥

आवाहनादिका मुद्रा मातृकान्यासमुद्राश्च प्रागुक्तास्तदन्या इहोच्यन्ते ।
तत्रैव ।

अङ्गुष्ठा ऋजवो हस्तशाखा
भवेन्मुद्रा हृदये शीर्षके च ।
अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां
करद्वन्द्वाङ्गुलयो वर्मणि स्युः ॥
नाराचमुष्टिर्धृतबाहुयुग्म-
काङ्गुष्ठतर्जन्युदितो ध्वनिस्तु ।
विष्वग्विभक्तः कथितास्तु मुद्रा
यत्राक्षिणी तर्जनिमध्यमे स्तः ॥

नेत्रत्रयं तत्र भवेदनामा
षडङ्गमुद्राः कथिता यथावत् ।
वैष्णवीनां तु मुद्राणां कथ्यन्ते लक्षणान्यथ ।
वामाङ्गुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना ॥
कृत्वोत्तानं ततो मुष्टिमङ्गुष्ठं तु प्रसारयेत् ।
वामाङ्गुल्यस्तथाऽऽश्लिष्टाः संयुक्ताः संप्रसारिताः ॥
दक्षिणाङ्गुष्ठसंस्पृष्टा मुद्रैषा शङ्खसंज्ञिका ।
हस्तौ तु संमुखौ कृत्वा संलग्नौ सुप्रसारितौ ॥
कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञका ।
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली ॥
अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते ।
गदा मुद्रेयमाख्याता विष्णोः सन्तोषवर्धिनी ॥
हस्तौ तु संमुखौ कृत्वा संनतावुन्नताङ्गुली ।
तलान्तनिलिताङ्गुष्ठौ कृत्वैषा पद्ममुद्रिका ॥
ओष्ठे वामकराङ्गुष्ठो लग्नस्तस्य कनिष्ठिका ।
दक्षिणाङ्गुष्ठसंयोगात् कनिष्ठा सुप्रसारिता ॥
तर्जनीमध्यमानामाः किंचित् संकोच्य चालिताः ।
वेणुमुद्रा भवेदेषा सुगुप्ता प्रेयसी हरेः ॥
अन्योन्यस्पृष्टकरयोर्मध्यमानामिकाङ्गुलीः ।
अङ्गुष्ठेन तु बध्नीयात् कनिष्ठामूलसंस्थिते ॥
तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससंज्ञका ।
अनामापृष्ठसंलग्नां दक्षिणस्य कनिष्ठिकाम् ॥
कनिष्ठयाऽन्यया बद्ध्वा तर्जन्या दक्षया तथा ।

वामानामां च बध्नीयाद्दक्षिणाङ्गुष्ठमूलके ॥
अङ्गुष्ठमध्यमे वामे संयोज्य सरलाः पराः ।
चतस्रोऽप्यग्रसंलग्ना मुद्रा कौस्तुभसंज्ञका ॥
स्पृशेत् कण्ठादिपादान्तं तर्जन्यङ्गुष्ठया तथा ।
करद्वयेन माला चेन्मुद्रेयं वनमालिका ॥
तर्जन्यङ्गुष्ठकौ शक्तावग्रतो हृदि विन्यसेत् ।
वामहस्ताम्बुजं वामजानुं मूर्ध्नि प्रविन्यसेत् ॥
ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य प्रेयसी ।
अङ्गुष्ठं वाममुद्दण्डितमितरकराङ्गुष्ठकेनाथ बद्ध्वा
तस्याग्रं पीडयित्वाऽङ्गुलिभिरपि च ता वामहस्ताङ्गुलीभिः ।
बद्ध्वा गाढं हृदि स्थापयतु विमलधीर्व्याहरन्मारबीजं
विल्वाख्या मुद्रिकैषा स्फुटमिह कथिता गोपनीया विधिज्ञैः॥
हस्तौ तु विमुखौ कृत्वा ग्रन्थयित्वा कनिष्ठिके ।
मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा ॥
मध्यमे नामिके द्वे तु द्वौ पक्षाविव चालयेत् ।
एषा गरुडमुद्राख्या विष्णोः सन्तोषवर्धिनी ॥
जानुमध्ये करौ कृत्वा चिबुकौष्ठौ समावृतौ ।
हस्तौ च भूमिसंलग्नौ कम्पमानः पुनः पुनः ॥
मुखं विवृतकं कुर्याल्लेलिहानश्च जिह्विकाम् ।
नारसिंही भवेदेषा मुद्रा तत्प्रीतिवर्धिनी ॥
अङ्गुष्ठाभ्यां च करयोरथाक्रम्य कनिष्ठिके ।
अधोमुखीभिः सर्वाभिर्मुद्रेयं नृहरेर्मता ॥
देवोपरि करं वामं कृत्वोत्तानमधः सुधीः ।

नामयेदिति संप्रोक्ता मुद्रा वाराहसंज्ञका ॥
दक्षहस्तं चोर्ध्वमुखं वामहस्तमधो मुखम् ।
अङ्गुल्यग्रं तु संयुक्तं मुद्रा वाराहसंज्ञिका ॥
वामहस्ततले दक्षा अङ्गुलीस्तास्त्वधोमुखीः ।
संरोप्य मध्यमां तासामुन्नाम्याधो विकुञ्चयेत् ॥
हयग्रीवप्रिया मुद्रा तन्मूर्त्तेरनुकारिणी ।
वामस्य मध्यमाग्रं तु तर्जन्यग्रेण योजयेत् ॥
अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ।
दर्शयेद्वामके स्कन्धे धनुर्मुद्रेयमीरिता ॥
दक्षमुष्टिस्थतर्जन्या दीर्घया बाणमुद्रिका ।

यद्वा ( ज्ञानार्णवे )

यथा हस्तगतं चापं तथा हस्तं प्रिये कुरु ।
चापमुद्रेयमाख्याता वामहस्ते त्ववस्थिता ॥
कल्पद्रुमा धनुर्मुद्रा यशःकीर्त्तिविवर्धिनी ।
यथा हस्तगतो बाणस्तथा हस्तं कुरु प्रिये ॥
बाणमुद्रेयमाख्याता रिपुवर्गनिकृन्तिनी ।
तले तलं तु करयोस्तिर्यक् संयोज्य चाङ्गुलीः ॥
संहताः प्रसृताः कुर्यान्मुद्रा परशुसंज्ञका ।
ऊर्ध्वस्थाङ्गुष्ठमुष्टी द्वे मुद्रा त्रैलोक्यमोहिनी ॥
हस्तौ तु संपुटीकृत्वा प्रसृताङ्गुलिकौ तथा ।
तर्जन्यौ मध्यमापृष्ठे अङ्गुष्ठौ मध्यमास्थितौ ॥
काममुद्रेयमुदिता सर्वदेवप्रियङ्करी ।
महादेवप्रियाणां च कथ्यन्ते लक्षणान्यथ ॥

उच्छ्रितं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन बन्धयेत् ।
वामाङ्गुलीभिर्दत्ताभिरङ्गुलीभिश्च बन्धयेत् ॥
लिङ्गमुद्रेयमाख्याता शिवसान्निध्यकारिणी ।
मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके ॥
अनामिकोर्ध्वसंश्लिष्टदीर्घमध्यमयोरधः ।
अङ्गुष्ठाग्रद्वयं न्यस्य योनिमुद्रेयमीरिता ॥
अङ्गुष्ठेन कनिष्ठां तु बद्ध्वा श्लिष्टाङ्गुलित्रयम् ।
प्रसारयेत् त्रिशूलाख्या मुद्रैषा परिकीर्त्तिता ॥
अङ्गुष्ठतर्जन्यग्रे तु ग्रन्थयित्वाऽङ्गुलित्रम् ।
प्रसारयेदक्षमाला मुद्रेयं परिकीर्त्तिता ॥
अधःस्थितो दत्तहस्तः प्रसृतावरमुद्रिका ।
ऊर्ध्वीकृतो वामहस्तः प्रसृतोभयमुद्रिका ॥
मिलितानामिकाङ्गुष्ठं मध्यमाग्रे नियोजयेत् ।
श्लिष्टाङ्गुल्यश्रिते कुर्यान्मृगमुद्रेयमीरिता ॥
पञ्चाङ्गुल्यो दक्षिणास्तु मिलिता ह्यूर्ध्वमुन्नताः ।
खट्वाङ्गमुद्रा विख्याता शिवस्यातिप्रिया मता ॥
पात्रवद्वामहस्तं च कृत्वाऽङ्के वामके तथा ।
निधायोच्छ्रितवत् कुर्यान्मुद्रा कापालिकी मता ॥
मुष्टिं च शिथिलां बद्ध्वा ईषदुच्छ्रितमध्यमाम् ।
दक्षिणामूर्ध्वमुन्नम्य कर्णदेशे प्रचारयेत् ॥
एषा डमरुमुद्राख्या सर्वविघ्नविनाशिनी ।
ततो गणेशमुद्राणामुच्यन्ते लक्षणान्यथ ॥
उत्तानोर्ध्वमुखी मध्या सरला बद्धमुष्टिका ।

१८

दन्तमुद्रा समाख्याता सर्वागमविशारदैः ॥
वाममुष्टिस्थतर्जन्या दक्षमुष्टिस्थतर्जनीम् ।
संयोज्याङ्गुष्ठकाग्रे तु तर्जन्यग्रे स्वके क्षिपेत् ॥
एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्त्तिता ।
ऋज्वीं च मध्यमां कृत्वा तर्जनीं मध्यपर्वणि ॥
संयोज्याकुञ्चयेत् किंचिन्मुद्रैषाऽङ्कुशसंज्ञिका ।
तर्जनीमध्यमानामाकनिष्ठाङ्गुष्ठमुष्टिका ॥
अधोमुखी दीर्घरूपा मध्यमा विघ्नमुद्रिका ।
पर्शुमुद्रा निगदिता प्रसिद्धा लड्डुमुद्रिका ॥
वीजपूराह्वया मुद्रा प्रसिद्धत्वादुपेक्षिता ।
शाक्तेयानां च मुद्राणां कथ्यन्ते लक्षणान्यथ ॥
पाशाङ्कुशवराभीतिधनुर्बाणाः समीरिताः ।
कनिष्ठानामिके बद्ध्वा स्वाङ्गुष्ठेनैव दक्षतः ॥
श्लिष्टाङ्गुली तु प्रसृते संसृष्टे खड्गमुद्रिका ।
वामहस्तं तथा तिर्यक् कृत्वा चैव प्रसार्य च ॥
आकुञ्चिताङ्गुलिं कुर्याच्चर्ममुद्रेयमीरिता ।
मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणाम् ॥
कुर्यान्मुशलमुद्रेयं सर्वविघ्नविनाशिनी ।
कृत्वा शिरसि संयोज्य दुर्गामुद्रेयमीरिता ॥
चक्रमुद्रां तथा बद्ध्वा मध्यमे द्वे प्रसार्य च ।
कनिष्ठिके तथाऽऽनीय तदग्रेऽङ्गुष्ठकौ क्षिपेत् ॥
लक्ष्मीमुद्रा परा ह्येषा सर्वसंपत्प्रदायिनी ।
वीणावादनवद्धस्तौ कृत्वा संचालयेच्छिरः ॥

वीणामुद्रेयमाख्याता सरस्वत्याः प्रियङ्करी ।
वाममुष्टिं स्वाभिमुखीं कृत्वा पुस्तकमुद्रिका ॥
दक्षिणाङ्गुष्ठतर्जन्योरग्रलग्ने पदाङ्गुलीः ।
प्रसार्य संहितोत्ताना एषा व्याख्यानमुद्रिका ॥
श्रीरामस्य सरस्वत्या अत्यन्तं प्रेयसी मता ।
मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ ॥
कनिष्ठाङ्गुष्ठयुगले मिलितौ तु प्रसारयेत् ।
सप्तजिह्वाख्यमुद्रेयं वैश्वानरप्रियङ्करी ॥
कनिष्ठाङ्गुष्ठकौ शक्तौ करयोरितरेतरम् ।
तर्जनीमध्यमानामाः संहता भुग्नवर्जिताः ॥
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ।
दत्ताङ्गुष्ठं पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु ॥
सावकाशात्मकां मुष्टिं कुर्यात् सा कुम्भमुद्रिका ।
मुष्ट्योरूर्ध्वकृताङ्गुष्ठौ तर्जन्यग्रे तु विन्यसेत् ॥
सर्वरक्षाकरी ह्येषा कुम्भमुद्रेयमीरिता ।
प्रसृताङ्गुलिकौ हस्तौ मिथःश्लिष्टौ तु संमुखौ ॥
कुर्यात् स्वहृदये सेयं मुद्रा प्रार्थनसंज्ञिका ।
अञ्जल्यञ्जलिमुद्रा स्याद्वासुदेवाभिधा च सा ॥
अङ्गुष्ठावुन्नतौ कृत्वा मुष्ट्योः संलग्नयोर्द्वयोः ।
तावेवाभिमुखौ कुर्यान्मुद्रा सा कालकर्णिका ॥
दक्षिणा निविडा मुष्टिर्नासिकार्पिततर्जनी ।
मुद्रा विस्मयसंज्ञा स्याद्विस्मयावेशकारिणी ॥
मुष्टिरूर्ध्वीकृताङ्गुष्ठा दक्षिणा नादमुद्रिका ।

तर्जन्यङ्गुष्ठसंयोगादग्रतो बिन्दुमुद्रिका ॥
अधोमुखे वामहस्ते ऊर्ध्वास्यं दक्षहस्तकम् ।
क्षिप्त्वाऽङ्गुलीरङ्गुलीभिः संग्रन्थ्य परिवर्त्तयेत् ॥
एषा संहारमुद्रा स्याद्विसर्जनविधौ स्मृता ।
दक्षपाणिपृष्ठदेशे वामपाणितलं स्पृशेत् ॥
अङ्गुष्ठौ चालयेत् सम्यग्मुद्रेयं मत्स्यरूपिणी ।
वामहस्तस्य तर्जन्या दक्षिणस्य कनिष्ठिकाम् ॥
तस्य दक्षिणतर्जन्यां दक्षिणस्य कनिष्ठिकाम् ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ॥
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ॥
वामस्य पितृतीर्थेन मध्यमानामिके तथा ।
अधोमुखे च ते कुर्याद्दक्षिणस्य करस्य च ॥
कूर्मपृष्ठसमं कुर्याद्दक्षपाणिं च सर्वतः ।
कूर्ममुद्रेयमाख्याता देवताध्यानकर्मणि ॥
पृष्ठे कांडे ।
अन्तराङ्गुष्ठमुष्टिं तु कृत्वा वामकरस्य च ।
मध्यमाग्रं तु दक्षस्य तथाऽलम्ब्य प्रयत्नतः ॥
मध्यमेनाथ तर्जन्या अङ्गुष्ठाग्रे तु योजयेत् ।
दक्षिणं योजयेत् पाणिं वाममुष्टौ तु साधकः ॥
दर्शयेद्दक्षिणे भागे मुण्डमुद्रेयमुच्यते ।
तर्जनीमध्यमानामाः समं कुर्यादधोमुखम् ॥
अनामायां क्षिपेद्वृद्धामृज्वीं कृत्वा कनिष्ठिकाम् ।
लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्त्तिता ॥

तर्जन्यनामिकामध्ये कनिष्ठाक्रमयोगतः ।
करयोर्योजयेच्चैव कनिष्ठामूलदेवताम् ॥
अङ्गुल्यग्रे तु निःक्षिप्य महायोनिः प्रकीर्त्तिता ।
(वामकेश्वर-)तन्त्रोक्ताः प्रकाश्यन्तेऽत्र मुद्रिकाः ॥
शृणु देवि प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः ।
याभिर्विरचिताभिस्तु सान्निध्यं त्रैपुरं भवेत् ॥
परिवृत्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डेयं समाख्याता त्रिपुराध्यानकर्मणि ॥
मध्यमामध्यगे कृत्वा कनिष्ठाङ्गुष्ठरोधिते ।
तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ॥
एषा च प्रथमा मुद्रा सर्वसंक्षोभकारिणी ।
एतस्या एव मुद्राया मध्यमे सरले यथा ॥
क्रियते परमेशानि सर्वविद्राविणी तथा ।
मध्यमातर्जनीभ्यां च कनिष्ठानामिके समे ॥
अङ्कुशाकारमुद्राभ्यां मध्यमे परमेश्वरि ।
अङ्गुष्ठं तु नियुञ्जीत कनिष्ठानामिकोपरि ॥
इयमाकर्षणी मुद्रा त्रैलोक्याकर्षणी परा ।
पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ॥
परिवर्त्य क्रमेणैव मध्यमे तदधोगते ।
क्रमेण देवि तेनैव कनिष्ठानामिकादयः ॥
संयोज्या निविडाः सर्वा अङ्गुष्ठावग्रदेशतः ।

मुद्रेयं परमेशानि सर्ववश्यकरी मता ॥
संमुखौ तु करौ कृत्वा मध्यमामध्यगेऽन्त्यजे ।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ॥
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।
मुद्रैषोन्मादिनी नाम क्लेदिनी सर्वयोषिताम् ॥
अस्यास्त्वनामिका युग्ममधः कृत्वाऽङ्कुशाकृती ।
तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ॥
इयं महाङ्कुशा मुद्रा सर्वकामार्थसाधिनी ।
सव्यं दक्षिणदेशे तु सव्यदेशे तु दक्षिणम् ॥
बाहुं कृत्वा महादेवि हस्तौ संपरिवर्त्य च ।
कनिष्ठानामिके देवि मुक्त्वा ते तु क्रमेण तु ॥
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ।
अङ्गुष्ठौ च महेशानि सरलावपि कारयेत् ॥
इयं सा खेचरीनाम्ना पार्थिवस्थानयोजिता ।
परिवर्त्य करौ स्पृष्टावर्धचन्द्राकृती प्रिये ॥
तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेत् ततः ।
अधःकनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ॥
तथैव कुटिले योज्ये सर्वाधस्तादनामिके ।
बीजमुद्रेयमचिरात् सर्वसिद्धिप्रवर्धिनी ॥
मध्यमे कुटिले कृत्वा तर्जन्युपरिसंस्थिते ।
अनामिके मध्यगते तथैव हि कनिष्ठिके ॥
सर्वा एकत्र संयोज्य अङ्गुष्ठपरिपीडिताः ।
एषा तु प्रथमा मुद्रा योनिमुद्रेति संज्ञिता ॥

एता मुद्रा महेशानि त्रिपुराया मयोदिताः ।
पूजाकाले प्रयोक्तव्या यथानुक्रमयोगतः ॥
बद्ध्वा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ।
अङ्गुष्ठेन तदग्रे तु मुद्रेयं भूतिनी मता ॥
वामहस्तेन मुष्टिं तु बद्ध्वा कर्णप्रदेशके ।
तर्जनीं सरलां कृत्वा भ्रामयेन्मनुवित्तमः ॥
सौभाग्यदण्डिनी मुद्रा न्यासकालेऽपि सूचिता ।
अन्तरङ्गुष्ठमुष्ट्या तु निबद्ध्य तर्जनीमिमाम् ॥
रिपुजिह्वाग्रहा मुद्रा न्यासकाले च सूचिता ।
मध्यमानामिकाङ्गुष्ठाः संलग्नाद्या अधोमुखाः ॥
अन्याप्रसारिताङ्गुल्यो गोमुखी सा प्रकीर्त्तिता ।
त्यक्तप्रदेशिनी मुष्टी सूची मुद्रेति कीर्त्तिता ।
रक्षा मुद्रेति सैवोक्ता समन्ताद्भ्रमणं यदि ॥
द्वौ करौ पृष्ठसंलग्नौ भ्रामयेद्ग्रन्थिताङ्गुली ।
छोटिकेति समाख्याता प्रणामे तां प्रदर्शयेत् ॥
अङ्गुष्ठो भैरवस्थानं चण्डिकायास्त्वनामिका ।
अतस्ताभ्यां तर्पणीयं यत एतत् तयोः प्रियम् ॥
अङ्गुष्ठानामिकायोगाद्वामहस्तस्य पार्वति ।
तत्त्वमुद्रा समाख्याता तर्पणे तां नियोजयेत् ॥
( यामले )
अङ्गुष्ठानामिकाभ्यां तु दक्षहस्तेन तर्पयेत् ।
( समयाचारे )
अङ्गुष्ठतर्जनीमध्ये शुद्धिं संगृह्य वामतः ।
वामेन दक्षिणेनापि देवीं संतर्पयेत् सुधीः ॥

एतद्वचनत्रयं च मार्गभेदेन व्यवस्थापनीयम् ।

तत्त्वं तर्पणमात्रं तु वामहस्तेन दक्षिणे ।
दक्षहस्तेन वामेऽपि विशेषः परिकीर्त्तितः ॥
दक्षवामक्रियायुक्तः कौलश्चोभयमिश्रितः ।

इति प्राग्लिखितप्रामाणाद्दक्षिणमार्गिणां दक्षहस्तेन पूजनं वामहस्तेन तर्पणम् । वाममार्गिणां वामहस्तेन पूजनं दक्षहस्तेन तर्पणम् । कौलिकानां तु देवतर्पणे करयोरैच्छिको विकल्प इति विवेकात् ।

तर्पणे च कामनाभेदेनाङ्गुलिभेद उक्तस्तन्त्रान्तरे ।

अङ्गुष्ठानामिकाभ्यां तु वश्यकर्मणि तर्पयेत् ।
अङ्गुष्ठमध्यमाभ्यां तु तर्पयेच्छान्तिकर्मणि ॥
तर्जन्यङ्गुष्ठयोगेन तर्पयेदभिचारिके ।
कनिष्ठाङ्गुष्ठयोगेन स्तम्भने तर्पयेत् प्रिये ॥

तन्त्रान्तरे ।

मिथः पृष्ठार्पितौ हस्तावन्योन्यग्रथिताङ्गुली ।
कृत्वा वद्ध्वा परावृत्य नत्वा सा स्यात् क्षमापिनी ॥

( भैरवतन्त्रे )

योनिश्च भूतिनी चैव बीजाख्या दैत्यधूपिनी ।
लेलिहानेति संप्रोक्ताः पञ्च मुद्राः प्रकीर्त्तिताः ॥

आद्यास्तिस्रः प्रागुक्ताः ।
अन्त्ययोर्लक्षणे तु तत्रैव ।

परिवर्त्त्य करौ कृत्वा कनिष्ठाकृष्टमध्यमाम् ।
अनामयोर्युगं चाधस्तर्जनीयुगलं पृथक् ॥
अन्योन्यं निविडं वद्ध्वा अङ्गुष्ठाग्रे अनामिकाः ।
दैत्यानां धूमकेत्वाख्या मुद्रैषा कथिता प्रिये ॥
वक्त्रं विस्फारितं कृत्वाऽप्यधो जिह्वां च चालयेत् ।
पार्श्वस्थमुष्टियुगलं लेलिहानेति कीर्त्तिता ॥

इति मुद्राप्रकरणम् ।

अथ नियमाः (कुलार्णवे)

नियमव्यतिरेकेण यद्यत् कर्म करोति यः ।
किं चिदप्यस्य न फलं सिद्ध्यत्यक्रमदोषतः ॥
न्यूनातिरिक्तकर्माणि न फलन्ति कदा चन ।
यथाविधि कृतानीह तत्कर्माणि फलन्ति हि ॥
तद्विधानकृतं कर्म जपहोमार्चनादिकम् ।
देवताप्रीतिदं भूयाद्भुक्तिमुक्तिफलप्रदम् ॥

(यामले)

ब्राह्मे मुहूर्त्ते चोत्थाय संस्मृत्य गुरुपादुकाम् ।
प्रातःकृत्यं विधायाथ कृत्वा शौचादिकं ततः ॥
दन्तान् प्रधाव्य तीर्थादौ गत्वा स्नानं समाचरेत् ।
सन्ध्यामुपास्य विधिवद्देवर्षिपितृतर्पणम् ॥
समाप्य दत्वा दानानि मौनी जपगृहं व्रजेत् ।
नित्यार्चनं ततः कृत्वा नित्यहोमं विधाय च ॥
कृत्वा नैमित्तिकीं पूजां विधिवज्जपमाचरेत् ।

तथा ।

एवं कृत्वा साधकेन्द्राः सिद्ध्यन्ति देवतार्चनात्* ।

(स्वतन्त्रतन्त्रे)

नित्यनैमित्तिकं काम्यं सापेक्षं पूर्वपूर्वतः ।
अन्यथा तु भवेद्व्यर्थं कुर्यादावश्यकं ततः ॥

तन्त्रान्तरे ।

त्रिसन्ध्यमर्चयेद्देवं भक्तिं कृत्वा विधानतः ।

( पुरश्चरणचन्द्रिकायाम् )

संपूज्यैवं जपं कुर्यान्न मन्त्रं केवलं जपेत् ।

---

* एवं कुर्यात् साधकेन्द्रस्त्रिसन्ध्यं देवतार्चनम् ३ पु० पाठः ।

गौतमः ।

शक्त्या त्रिषवणं *स्नानमथ वा द्वे सकृच्च वा ।
त्रिसन्ध्यं प्रजपेन्मन्त्रं पूजनं तत्समं भवेत् ॥
एकदा वा भवेत् पूजा न जपेत् पूजनं विना ।
जपान्ते च भवेत् पूजा पूजान्ते वा जपेन्मनुम् ॥

अन्यत्रापि ।

मन्त्रं साधयमानस्तु त्रिसन्ध्यं देवमर्चयेत् ।
द्विसन्ध्यमेकसन्ध्यं वा न मन्त्रं केवलं जपेत् ॥

( मुण्डमालायाम् )

यदि पूजाद्यशक्तः स्याद्द्रव्याभावेन सुन्दरि ।
केवलं जपमात्रेण पुरश्चर्या विधीयते ॥

स्त्रीणां विशेषमाह ( यामले )

नियमः पुरुषे ज्ञेयो न योषित्सु कदा चन ।

(वीरतन्त्रे)

न न्यासो योषितां चात्र न ध्यानं न च पूजनम् ।
केवलं जपमात्रेण मन्त्राः सिद्ध्यन्ति योषिताम् ॥

(चन्द्रिकायाम्)

देवी चित्तगता कार्या कार्यं च हृदयं स्थिरम् ।
मन्त्रजपान्नपानीयैः कुर्यात् पानादिभोजनम् ॥
नित्यं नैमित्तिकं कुर्यात् सङ्गमं साधुभिः सह ।
स्नायात् तु पञ्चगव्येन केवलामलकेन वा ॥
आज्येन दध्ना क्षीरेण तिलकल्केन वा कृतम् ।
पुरश्चर्याविधौ तद्वत् स्नानं कुर्याद्विशुद्धये ॥
अस्नातस्य फलं नास्ति न चातर्पयतः पितॄन् ।

---

* त्रैकालिकम् ।

(कुम्भसम्भवः)

गुरुदेवात्ममन्त्राणामैकभावेन चिन्तनम् ।

( योगिनीहृदये )

शयीत कुशशय्यायां शुचिवस्त्रधरः सदा ।
प्रत्यहं क्षालयेच्छय्यामेकाकी निर्भयः स्वपेत् ॥

(कुलार्णवे)

भूशय्या ब्रह्मचर्यं च मौनमाचार्यसेवनम् ।
नित्यपूजा नित्यदानं देवतास्तुतिकीर्त्तनम् ॥
नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ।
जपनिष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः ॥

तन्त्रान्तरे ।

मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्ययत्व*मानिर्वेदो जपसम्पत्तिकारकम् ॥

( मेरुतन्त्रे )

मनोनिरोधो मन्त्रार्थचिन्तनं नित्यकर्म च ।
नैमित्तिकं शौचमौने बालस्य दमनं तथा ॥
भूमिशय्या त्रिषवणं स्नानं प्रत्याह्निकार्चनम् ।
नित्यदानं गुरोः पादपुजाऽऽहारनियन्त्रणा ॥
स्नानं च पञ्चगव्येन पवित्रकरधारणम् ।
त्रिसन्ध्यावन्दनं पञ्च यज्ञास्तर्पणकं तथा ॥

(यामले)

एवमुक्तविधानेन विलम्बं त्वरितं विना ।
उक्तसङ्ख्यं जपं कुर्यात् पुरश्चरणसिद्धये ॥
देवतागुरुमन्त्राणामैक्यं संभावयन् धिया ।
जपेदेकमनाः प्रातःकालान्मध्यन्दिनावधि ॥

---

* अव्यग्रत्वम् २-३ पु० पाठः ।

यत्सङ्ख्यया समारब्धं तत्कर्त्तव्यमहर्निशम् ।
यदि न्यूनाधिकं कुर्याद्व्रतभ्रष्टो भवेन्नरः ॥

मध्यन्दिनावधीत्यवधिमात्रबोधकं न तु नियमपरम् । अन्यथा मध्याह्नकाले कदा चिज्जपसङ्ख्याया अपूर्त्तौ नियमभङ्गः स्यादिति तन्त्रसारकृतः ।

(सिद्धान्तसारे)

वशीकृतेन्द्रियग्रामो भक्तियुक्तः प्रसन्नधीः ।
अधःशायी ब्रह्मचारी निशाशी प्रजपेन्मनुम् ॥

अथ वर्ज्यानि ।

आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ।
नीचसंस्पर्शनं कोपं जपकाले विवर्जयेत् ॥

( मेरुतन्त्रे )

त्यजेद्विंशतिकर्माणि सिद्धिविघ्नकराणि च ।
लोभं क्रोधं च मात्सर्यं कामं द्वेषं च ताडनम् ॥
दम्भमुच्चाटनाभ्यङ्गाप्रियमिथ्यावचस्तथा ।
गीतं वाद्यं मधु च्छायां विभीतककरञ्जयोः ॥
मांसं प्रतिग्रहं माल्यं ताम्बूलं पापिभाषणम् ।
एतानि वर्जयेद्विद्वान् .... .... .... इति ॥

(कुलार्णवे)

स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् ।
असत्यभाषणं जिह्मभाषणं परिवर्जयेत् ॥
सत्येनापि न भाषेत जपहोमार्चनादिषु ।
अन्यथाऽनुष्ठितं सर्वं भवत्येव निरर्थकम् ॥
नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत् ।
दिवसातिक्रमात् पुंसां मन्त्रसिद्धिर्भवेन्न हि ॥

(पुरश्चरणचन्द्रिकायाम्)

त्यजेदुष्णोदकस्नानमनिवेदितभोजनम् ।

तन्त्रान्तरे ।

भोजनं कांस्यपात्रे च दिवाभोजनमेव च ।

(योगिनीतन्त्रे)

कौटिल्यं क्षीरमभ्यङ्गमनिवेदितभोजनम् ।
असंकल्पितकृत्यं तु वर्जयेन्मर्दनादिकम् ॥

(पुरश्चरणचन्द्रिकायाम)

वर्जयेद्गीतवाद्यादि श्रवणं नृत्यदर्शनम् ।
अभ्यङ्गं गन्धलेपं च पुष्पधारणमेव च ॥
मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्जयेत् ।
अस्नातांश्च द्विजान् शूद्रान् स्त्रियो नैव स्पृशेत् तथा ॥
प्राणिहिंसां न कुर्वीत पुरश्चरणकृद्द्विजः ।
गोशुश्रूषादिकं तत्तत्कल्पोक्तं विधिवच्चरेत् ॥

विहाय वह्निं न हि वस्तु किंचिद्-
ग्राह्यं परेभ्यः सति संभवे च ।
असंभवे तीर्थबहिर्विशुद्धात्
पर्वातिरिक्ते प्रतिगृह्य जप्यात् ॥
तत्रासमुत्थानुदिनं विशुद्धा-
द्याचेत यावद्दिनमात्रभक्ष्यम् ।
गृह्णाति रागादधिकं न सिद्धिः
प्रजायते कल्पशतैरमुष्य ॥

अत्र तिलतैलाभ्यङ्गस्तु गृहस्थानां न निषिद्धः ।

तिलतैलं मन्त्रपूतं पावनं देवदुर्लभम् ।
मर्दयित्वा गृहस्थेन स्नानं कार्यं हि सर्वदा ॥

इति (मेरुतन्त्र) वचनात् ।
ऋतुकाले निजस्त्रीसंभोगोऽपि न निषिद्धः ।

ऋतुकालं विना मन्त्री न स्वस्त्रियमपि स्पृशेत् ।

इति (गौतमीयतन्त्र) वचनात् ।

(यामले)

अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा ॥

प्रलपन् प्रजपेद्यावत् तावन्निष्फलमुच्यते ।

विड्मूत्रोत्सर्गशङ्कादियुक्तः कर्म करोति यः ॥

जपार्चनादिकं सर्वमपवित्रकरं प्रिये ।

मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः ॥

यो जपेत् तं दहत्याशु देवता गुप्तिसंस्थिता ।

तथा ।

नैकवासा जपेन्मन्त्रं बहुवासाकुलोऽपि वा ॥

उष्णीषी कञ्चुकी नग्नो मुक्तकेशोऽङ्गनावृतः ।

अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित् ॥

अनासनः शयानो वा गच्छन् भुञ्जान एव वा ।

रथ्यायामशिवस्थाने न जपेत् तिमिरालये ॥

उपानद्गूढयानो वा यानशय्यागतस्तथा ।

प्रसार्य न जपेत् पादावुत्कटासन एव च ॥

व्यग्रतां मनसश्चैव साधकः परिवर्जयेत् ।

अथ प्रायश्चित्तानि ।

(मेरुतन्त्रे)

सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ॥

प्रोक्ते पामरशब्देऽपि प्राणायामं सकृच्चरेत् ।

बहुप्रलापे चावश्यं न्यस्याङ्गानि ततो जपेत् ॥

क्षुतेऽप्येवं तथाऽस्पृश्यस्थानानां स्पर्शने तथा ।

मौनत्यागे जपेन्मन्त्रं वैष्णवं वा स्मरेद्धरिम् ॥

पतितान्त्यजसंदर्शे तेजोवन्तं निरीक्षयेत्।

तेजोवन्तश्च।

सूर्योऽग्निश्चन्द्रमाश्चैव मुनयो भानि तारकाः॥

विद्वान् गौर्ब्राह्मणश्चेति .... .... इति तत्रैवोक्ताः।

अन्यत्रापि।

पतितानामन्त्यजानां दर्शने भाषणे श्रुते।

क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत्॥

तथा तस्य च तत्प्राप्तौ प्राणायामं षडङ्गकम्।

कृत्वा सम्यग्जपेच्छेषं यद्वा सूर्यादिदर्शनम्॥

मार्जारं कुक्कुटं क्रौञ्चं श्वानं शूद्रं खरं कपिम्॥

दृष्ट्वाऽऽचम्याचरेत् कर्म स्पृष्ट्वा स्नानं विधीयते।

(साधनसमुच्चये)

जपकाले यदाऽकस्मान्म्लेच्छानां दर्शनं भवेत्।

तदाऽऽचम्य हरिं स्मृत्वा तेजोवन्तं विलोक्य च॥

गायत्रीं विष्णुमन्त्रं वा शतमष्टोत्तरं जपेत्।

स्वप्नेऽपि यदि जायेत म्लेच्छादीनां च दर्शनम्॥

कामिन्या सह सङ्गम्य रेतसो वा च्युतिर्भवेत्।

दीपं दत्वा विष्णुगेहे गायत्रीं शतधा जपेत्॥

तथा।

शुचिर्भूत्वा जपेन्मत्रं नाशुचिर्जपमाचरेत्।

मानसजपे तु नायं नियमः।

तदुक्तं तन्त्रान्तरे।

अशुचिर्वा शुचिर्वाऽपि गच्छँस्तिष्ठन् स्वपन्नपि।

मन्त्रैकशरणो विद्वान् मनसैवं सदाऽभ्यसेत्॥

न दोषो मानसे जाप्ये सर्वदेशेऽपि सर्वदा।

जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत्—इति ।

(मेरुतन्त्रे)

दैवादसत्यभाषी चेत् स रौद्रं पौरुषं जपेत् ।
बहुवस्त्रैकवस्त्रो वा मुक्तकेशोऽङ्गनावृतः ॥
उष्णीषी कञ्चुकी नग्नः शिरसि प्रावृतोऽपि वा ।
चिन्ताव्याकुलचित्तो वा क्रुद्धो भ्रान्तः क्षुधान्वितः ॥
उपानद्गूढपादो वा यानशय्यागतस्तथा ।
शयानो वाऽधौतपादः पश्चाद्वा दक्षिणामुखः ॥
म्लानवस्त्रोऽर्धवस्त्रश्च तथा द्विगुणवस्त्रकः ।
च्युतवस्त्रो रक्तवस्त्रः स्निग्धवस्त्रो द्विकच्छकः ॥
बहिःकच्छोऽनुत्तरीयो विकच्छोऽनेककच्छकः ।
कौपिनी प्रौढपादश्च तथाऽऽसी पीतवस्त्रवान् ॥
जपाशक्तः प्रमादाच्चेद्राक्षसैर्गृह्यते फलम् ।
तत्कारणं परित्यज्य तज्जपं पुनराचरेत् ॥
स्वभार्यायां प्रमादेन चलितश्चेत् तदोषसि ।
स्नात्वाऽऽर्द्रवासा मौनेन दशकुम्भमितं जलम् ॥
श्रोत्रियस्य गृहे दद्यात् परनार्यां सहस्रकम् ।

(सिद्धान्तसंग्रहे)

अज्ञानात् स्वस्त्रियं गत्वा धेनुमेकां पयस्विनीम् ॥
दद्याद्विप्राय धेनूनां परस्त्रीगमने शतम् ।

अथपुरश्चरणार्थं भूमिपरिग्रहः ।

( मेरुतन्त्रे ) पूर्वोक्तस्थानान्युक्त्वा—

एवं विचार्य मतिमान् कुर्याद्भूमिपरिग्रहम् ॥
पृथ्वीं वराहं संपूज्य भूसुतस्य बलेन च ।
ब्रूयादमुकमन्त्रस्य पुरश्चरणसिद्धये ॥

मयेयं गृह्यते भूमिर्मन्त्रोऽयं सिद्ध्यतामिति ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षान्यतरवृक्षजान् ॥
वितस्तिप्रमितान् वृत्तान् गृह्णीयात् कीलकान् दश ।
अष्टौ निखातयेदष्टदिशास्वीशानपूर्वयोः ॥
मध्ये निखन्यान्नवममूर्ध्वबुद्ध्या तथाऽप्यधः ।
पश्चान्नैर्ऋत्ययोर्मध्ये त्वस्त्रमन्त्रेण कीलयेत् ॥
पूजां तथाऽस्त्रमन्त्रेण तेष्वस्त्रं च प्रपूजयेत् ।
क्षेत्रे च कीलिते मन्त्री न विघ्नैः परिभूयते ॥
दिक्पालेभ्यो माषभक्तबलिं दिक्षु प्रकल्पयेत् ।
क्षेत्रमध्ये क्षेत्रपालं पूजयेच्च गणेश्वरम् ॥
तृतीयं वास्तुपुरुषं तेभ्यो दद्याद्बलित्रयम् ।

( यामले )

पुण्यक्षेत्रादिकं गत्वा कुर्याद्भूमिपरिग्रहम् ।

तथा ।

भूमेः परिग्रहं कृत्वा परिमाणाच्च सर्वतः ।
ग्रामे क्रोशमितं स्थानं नगरे तद्द्वयं स्मृतम् ॥
नदीपर्वततीर्थादौ परिमाणेन वर्जितम् ।
आहारादिविहारार्थं तावतीं भूमिमाक्रमेत् ॥
क्षीरवृक्षमयान् कीलानस्त्रमन्त्राभिमन्त्रितान् ।
निखनेद्दशदिग्भागे तेष्वस्त्रं च प्रपूजयेत् ॥

(माहेश्वरीये)

ये चात्र विघ्नकर्त्तारो दिवि भुव्यन्तरिक्षगाः ।
विघ्नभूताश्च ये चान्ये मम मन्त्रस्य सिद्धिषु ॥

मयैतत् कीलितं क्षेत्रं परित्यज्य विदूरतः ।
अपसर्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे ॥
पठित्वेत्येवमस्त्रेण निखनेत् कीलकान् सुधीः ।
कीलेषु तेषु विधिवत् पूजयेदस्त्रदेवताम् ॥
क्षेत्रपालादिकान् मध्ये पूजयेद्विधिवित्तमः ।
दिक्पतिभ्यो वलिं दत्वा ततः क्षेत्रं समाश्रयेत् ॥

तथा ।

स्वबीजं पूर्वमुच्चार्य सम्बुद्ध्यन्तं सुरं ततः ।
इमं पदं माषभक्तवलिं गृह्णपदद्वयम् ॥
ठद्वयान्तो दशानां च दिक्पालानां वलेर्मनुः ।

दिक्पालवीजानि तु ।

लँ रँ मँ क्षँ वँ यँ सँ हँ आँ अँ—इति ।

( मेरुतन्त्रे )

जपस्थाने ततः कुर्यात् त्रिकोणं वर्तुलं बहिः ।
तद्बहिश्चतुरस्रं च तत्र क्षेत्रे समर्चयेत् ॥
इहागच्छेत्यादिवाक्यैस्त्रिकोणादग्रतः पुनः ।
अन्नोदकादिसंपूर्णां वलिपात्रं निधापयेत् ॥
वामिभिर्माहिषो देयः कौलिकैर्वर्करस्तथा ।
अविः सिद्धान्तिभिस्तत्र निवेद्यो मनुनाऽमुना ॥

वर्करश्छागः । अविर्मेषः ।
क्षेत्रपालवलिदानमन्त्र उक्तः ( प्रथमतन्त्रे )

क्षेत्रपालं च संपूज्य वलिं दद्याद्यथाविधि ।
पूर्वमेहि द्वयं पश्चाद्विदुषि स्यान्मुरुद्वयम् ॥
भञ्जयद्वितयं भूयो नर्त्तयद्वितयं पुनः ।
ततो विघ्नपदद्वन्द्वं महाभैरवतत्परम् ॥

क्षेत्रपालवलिं गृह्णद्वयं पावकसुन्दरी ।
वलिमन्त्रोऽयमाख्यातः सर्वसिद्धिफलप्रदः ॥

गणेशवलिदानमन्त्रस्तु दीक्षाप्रकरणोक्त एव ग्राह्यः ।
वास्तुवलिदानमन्त्रो यथा ।

तारो वास्तोष्पते चेमं माषभक्तवलिं ततः ।
गृह्णद्वयान्ते स्वाहा च वास्तोर्वलिमनुः स्मृतः ॥

( वीरचूणामणौ ) तु वीरकल्पे विशेष उक्तः ।

ऋषिच्छन्दा*दि विन्यस्य दिग्देवेभ्यो वलिं हरेत् ।
असिताङ्गभैरवब्राह्मीपदं ङेन्तं समालिखेत् ॥
वलिं गृह्ण द्विधा कुर्याद्द्विठान्तो दिग्वलेर्मनुः ।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तभैरवः ॥
कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः ।
ब्राह्मी माहेश्वरी पश्चात् कौमारी वैष्णवी तथा ॥
वाराही च तथेन्द्राणी चामुण्डा तदनन्तरम् ।
महालक्ष्मीः समाख्याता स्वस्वबीजाद्यनुक्रमात् ॥
धूपदीपैः समभ्यर्च्य पश्चात् कीलं निवेशयेत् ।
प्रणवं पूर्वमुच्चार्य माया लक्ष्मीश्च मन्मथः ॥
इन्द्राण्यै पदमुच्चार्य चामुण्डे च पदं ततः ।
विच्चे इति पदं पश्चादिदं क्षेत्रं च कीलय ॥
रक्तरक्षपदं पश्चात् कालिकेति समालिखेत् ।
वह्निजायान्तमन्त्रोऽयं पूर्वादिक्रमशो न्यसेत् ॥
मूलमन्त्रं समुच्चार्य आग्नेय्यै पदमुच्चरेत् ।
याम्यै इति पदं पश्चान्नैर्ऋत्यै च मनुं पुनः ॥

---

* तान्त्रिकोऽयं प्रयोगः ।

वारुण्यै वायवी चेति कौवेरीशानभैरवी ।
आदौ मन्त्रं समुच्चार्य पुनर्देवीं वदेत् प्रिये ॥
वलिं दद्यात् क्रमेणैव दिग्विदिक्षु वलिं हरेत् ।
प्रणवं पूर्वमुद्धृत्य हृल्लेखाबीजमुद्धरेत् ॥
वटुकाय पदं पश्चादापदुद्धारणाय च ।
कुरुद्वयं समुच्चार्य मायां तारं समुद्धरेत् ॥
वह्निजायान्वितो मन्त्रो वटुकस्य वलिं हरेत् ।
आग्नेय्यां वलिमुत्सृज्य माया लक्ष्मीश्च मन्मथः ॥
वाराही बीजमद्धृत्य बीजं पश्चान्तकं पुनः ।
गणपतये पदं पश्चाद्वरवरदं तथा पुनः ॥
सर्वजनं वदेच्चैव वदेन्मे वशमानय ।
अन्ते वह्निवधूं दद्याद्गणनाथमहामनुः ॥

वाराहीबीजं ग्लौँ ।

रौद्रं त्रिगुणमुद्धृत्य नारायणं तथोद्धरेत् ।
बीजं सूक्ष्मेशमुद्धृत्यामरेशं बीजमुद्धरेत् ॥
ङेन्तं तु क्षेत्रपालं तु वलिं गृह्णद्वयं ततः ।
वह्निजायान्वितो मन्त्रः क्षेत्रपालस्य कीर्त्तितः ॥
वायुबीजं त्रिधाऽऽलिख्य अनन्तो माधवस्तथा ।
वर्णर्त्तुलाक्षीमथोद्धृत्य योगिनीभ्यस्तथैव च ॥
वह्निजायान्वितो मन्त्रो वायव्यां योगिनीवलिः ।

रौद्र शकारः* । त्रिगुणम त्रिवारम । नारायणं आँ । सूक्ष्मेशः ईँ । अमरेश उँ ।
वायुबीजं यकारः । अनन्त आकारः । माधव इकारः । वर्त्तुलाक्षी उकारः ।

क्षकारं कालमारूढं तदन्ते माऽनलाक्षरम् ।
सर्वविघ्नपदं कृद्वयः सर्वेभ्यो भूत उद्धरेत् ॥

---

* रौद्रं सकारः २-४ पु. पा.

भ्यो वर्म फट् समुद्धृत्य वलिं गृह्णद्वयं ततः ।
द्विठान्तः सिद्धिदः प्रोक्तः सर्वभूतवलिं हरेत् ॥

कालो मकारः । मा ईकारः । अनलाक्षरं रेफः । तेन क्ष्मीँ ।

ओदनं पायसं क्षीरं मत्स्यमांसं तथैव च ।
मोदकं पूलिकापूपं वटकं त्रिविधा सुरा ॥
दध्योदनादि पक्वान्नमाज्यं मधु सशर्करम् ।
सर्वत्र विधिवत् कुर्याद्दुग्धेनोत्सर्गमाचरेत्—इति ॥

( यामले )

क्षेत्रं समाश्रयेद्यस्तु क्षेत्रपालार्चनं विना ।
वाध्यते स महाविघ्नैस्तस्मात् क्षेत्रेशमर्चयेत् ॥

अत्रायं विशेषः । यस्य क्षेत्रस्य नामाद्यवर्णो यस्य क्षेत्रपालस्य नामाद्यः स एव क्षेत्रपालस्तस्मिन् क्षेत्रे पूज्यः । क्षेत्रपाला उक्तास्तन्त्रान्तरे ।

अजरश्चापकुम्भश्च इडारम्भस्तथैव च ।
ईन्द्रमूर्त्तिश्च उल्कास्य ऊष्माद ऋपुसूदनः ॥
ॠमुक्तो लृप्तकायश्च लॄपाद एकदंष्ट्रकः ।
ऐरावतश्च ओघाम्बुरौषधीशोऽन्तवाहकः ॥
अस्तकोऽप्यर्थवाहश्च कमलश्च खराननः ।
गोमुखश्चैव घण्टालो ङणामश्चन्द्रधारकः ॥
छटाटोपो जटालाख्यो झङ्कारो ञमटेश्वरः ।
टङ्कपाणिस्तथा चान्यष्ठाणडबन्धश्च डामरः ॥
ढेढकर्णो णवीकान्तस्तन्त्रीजिह्वस्तु थाविरः ।
दन्तुरो धनदश्चैव नागकर्णः प्रचण्डकः ॥
फेत्कारो वीरसिद्धिश्च भ्रुकुटिर्मेघभासुरः ।
युगान्तो रौरवश्चैव लम्बोष्ठश्च वसन्तकः ॥

शुकमुण्डः षडालास्यः सुमनो हूनकस्तथा ।
क्षपान्तकश्च पञ्चाशद्वर्णास्थाः क्षेत्रपालकाः ॥
एकलिङ्गादौ क्षेत्रपालविशेषास्तत्रैवोक्ताः ।
शेषा वर्णविहीनास्तु क्षेत्रपालास्तथैव च ।
एकलिङ्गे च हुँकारः श्मशाने च भयावहः ॥
महालक्ष्मीवने घोरो ज्वालामुखो वनोत्सवे ।
एकवृक्षवने वाऽथ विडालवदनो वसेत् ॥
घण्टारवो गुहावासः पद्मखण्डे जरामरः ।
सङ्गमे भूरिधारौघः पर्वते मारुतस्तथा ॥
निर्जरे श्रवणे वह्नौ निधाने मणिभद्रकः ।
रसक्षेत्रे धनाध्यक्षो यज्ञवाटेषु क्रोष्टकः ॥
अरण्ये शम्बरं विद्यादुद्याने मकरस्तथा ।
चतुःषष्टिर्महाविद्याः पालयित्वा जगत् स्थिताः ॥
तत्तत्क्षेत्रे सदा काले बलिपूजां निवेदयेत् ।

अथ कूर्मचक्रम् ।



( यामले )

क्षेत्रमध्यं समाश्रित्य कूर्मचक्रं विचिन्तयेत् ।
कूर्मचक्रमविज्ञाय यः कुर्याज्जपयज्ञकम् ॥
तज्जपस्य फलं नास्ति सर्वानर्थाय कल्पते ।

( मेरुतन्त्रे )

कूर्मचक्रमविज्ञातुर्महाविघ्नोऽभिजायते ।

(सारसंग्रहे)

तच्चतुर्धा स्थितं लोके तत्प्रकारस्तथोच्यते ।
प्रथमस्तु परः कूर्मचक्रो देशगतस्तथा ॥
ग्रामगो गृहगश्चेति चतुर्धा स व्यवस्थितः ।

(तन्त्रराजे)

व्यञ्जनं देशकूर्मे स्याद्गृहकूर्मे स्वरास्तथा ।
ग्रामकूर्मे तद्द्वितयं परकूर्मे न तद्द्वयम् ॥

(गौतमीये)

देशं ग्रामं गृहं वाऽपि नवधा विभजेन्नरः ।
प्रागादिपश्चिमान्तं तु कादिमान्तानि विन्यसेत् ॥
अक्षराण्यय यादीनि तथाऽष्टौ कोष्ठयोर्न्यसेत् ।
ईशद्वयमधो मध्ये स्वरान् प्रागादि विन्यसेत् ॥
शसान्तास्तु दिशः पश्चान्नामाद्यक्षरतो भवेत् ।
तन्मुखं पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः ॥
पुच्छमेकमथो मध्यं पृष्ठमेवं षडङ्गवान् ।

( मेरुतन्त्रे )

परदेशग्रामगृहभेदात् कूर्मश्चतुर्विधः ।
वृत्तद्वयं प्रकुर्वीत नवकोष्ठकभेदितम् ॥
कवर्गाद्याः सप्त लेख्याः पूर्वाशादिषु लक्षकौ ।

ऐशान्यां विलिखेन्मध्ये वृत्तकोष्ठे द्वयं द्वयम् ॥
स्वराणां पूर्वतो लेख्यं श्रीबीजं मध्यकोष्ठके ।
प्राङ्मुखः परकूर्मस्तु सर्वदैव प्रजायते ॥
देशनामादिमो वर्णो यस्यां दिशि व्यवस्थितः ।
देशकूर्ममुखं तस्यां दिशि स्याद्ग्रामकूर्मके ॥
मुखद्वयं तु विज्ञेयं स्वराद्व्यञ्जनतस्तथा ।
गृहकूर्मस्य वदनमुदग्द्वारमुखं भवेत् ॥
मुखस्य पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः ।
पुच्छमेकमथो मध्ये पृष्ठमेवं षडङ्गवान् ॥

(यामले)

दीपस्थानं समाश्रित्य कृतं कर्म शुभावहम् ।
चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत् ॥
पूर्वादिकोष्ठे विलिखेत् सप्त वर्गाननुक्रमात् ।
लक्ष्मीशस्वरान् युग्मक्रमाच्चैव लिखेत् ततः ॥
दिक्षु पूर्वादितो यत्र क्षेत्राख्याद्यक्षरं स्थितम् ।
मुखं तस्य तु जानीयाद्धस्तावुभयतः स्थितौ ॥
कोष्ठे कुक्षी उभे पादौ द्वौ शिष्टं पुच्छमीरितम् ।
क्रमेणानेन विभजेन्मध्यस्थमपि साधकः ॥
मुखस्थो लभते सिद्धिं करस्थः स्वल्पजीवनः ।
उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात् ॥
पुच्छस्थः पीड्यते मन्त्री बन्धनोच्चाटनादिभिः ।

गौतमः ।

मुखे सर्वार्थसिद्धिः स्यात् करयोरल्पसिद्धयः ।
कुक्षौ तु नित्यं नैष्फल्यं पादयोर्नैव सिद्धयः ॥

पुच्छे मृत्युस्तु नियतः पृष्ठे सर्वार्थसिद्धयः ।
तस्मात् तत् साधु विज्ञाय कुर्यात् सर्वजयादिकम् ॥

गृहकूर्मे गृहनामज्ञानप्रकारस्तु ज्योतिःशास्त्रे ।

विस्तार आयामगुणैश्च भक्ते
यच्छेषमायः स भवेद्ध्वजादिः ।
ध्वजो धूम्रश्च सिंहः श्वा सारमेयः खरो गजः ॥
ध्वाङ्क्षश्चेति क्रमेणैव दायाष्टकमुदाहृतम् ।

प्रकारान्तरमपि ।

विस्तारं च तथाऽऽयाममेकीकृत्य त्रिधा पुनः ।
मन्त्रसाधकगेहानामेकं चेत् प्रथमाक्षरम् ॥
किं तदा पुण्यतीर्थेन पुण्यक्षेत्राटनेन वा ।

प्रयोजनमिति शेषः
( मेरुतन्त्रे )

क्षेत्रसाधकमन्त्राणामेकमेवाद्यमक्षरम् ।
यदि स्यात् स ध्रुवं मन्त्रः सर्वसिद्धिफलप्रदः ॥

(गौतमीये)

मन्त्राक्षरेण मैत्रश्च दीपनाम्नो भवेद्यदि ।
साधकस्य च नाम्ना च किं न सिद्ध्यति मन्त्रिणः ॥
पञ्चाशद्वर्णरूपेण क्षेत्रेशा विभुविग्रहाः ।
तस्मात् तत् सगुणं क्षेत्रं सिद्धये स्यान्न चान्यथा ॥
विगुणश्चेन्मुखस्थोऽपि न तेन सिद्धिमाप्नुयात् ।
तस्माच्चक्रं विचार्यैव मित्रं च सर्वसिद्धिदम् ॥
यस्मिन् देशे द्वीपपतिः सगुणं नाममन्त्रयोः ।
तत्र यत्नेन गन्तव्यं सपीठो दुर्लभो मतः ॥

(कालिकोद्भवे)

स्थानसाधकयोर्नाम्नोर्मैत्रं यत्र विद्यते ।
तदक्षशास्त्रतो ज्ञात्वा तत्तत् स्थानं परित्यजेत् ॥

मैत्रामैत्रमुक्तं तन्त्रान्तरे ।

अरित्वमद्वयस्योक्तं गकारेण परस्परम् ।
ऋद्वयस्य चकारेण मकारस्य खकारतः ॥
लृद्वयस्य यकारेण पकारस्य च लृद्वये ।
ओद्वयस्य षकारेण षकारस्यौयुगेन तु ॥
जकारस्य ढकारेण ऊकारस्य खकारतः ।
उकारस्य तकारेण फकारस्य धकारतः ॥
मकारस्य च रेफेण यकारस्य सकारतः ।
अरित्वमेषां वर्णानामन्येषां मित्रभावना ॥
स्थानसाधकयोर्नाम्नोरारित्वं यत्र विद्यते ।
तदक्षशास्त्रतो ज्ञात्वा साधको यत्नतस्त्यजेत् ॥
यथा गर्गस्य वैरी स्यादट्टहासं महापुरम् ।
औड्डियानं षण्मुखस्य ऋजुभट्टस्य चक्रकम् ॥
जयन्ती ढक्कणस्यारिः खधार ऊझकस्य च ।
उकदेवस्य ताराख्यं फजेर्घूमाख्यमेव च ॥
भद्रस्य रम्यकं सोमनगरं यज्ञशर्मणः ।
एवं क्रमेण विज्ञाय रिपुस्थानं त्यजेद्बुधः ॥

(मेरुतन्त्रे)

महारित्वे जीवनाशो वैरे स्याद्धननाशनम् ।
किञ्चिद्वैरे सुखाल्पत्वं तदिदानीं निगद्यते ॥
अगौ ऋचौ ऋपौ जहौ मखौ जयौ इवौ उतौ ।

फधौ भरौ यसौ चेति महारी परिकीर्त्तितौ ॥
ऋच्छौ ओढ्यषौ तद्वज्झटौ ऊषौ वधौ ढलौ ।
वैरं तु पञ्चमे वर्गे तत्किञ्चित् कटयोर्भवेत् ॥
चटयोः पचयोश्चापि तढयोर्ढशयोरपि ।
एकवर्गे यदा प्रीतिः स्ववर्गं द्विगुणं कुरु ॥
स्थानवर्गयुतं तष्टमष्टाभिश्चाय उच्यते ।
स्थानवर्गो द्विगुणितः स्ववर्गश्चाष्टशेषितः ॥
स्थानाय उभयोः कार्यमन्तरं यस्य शेषकम् ।
यावत् स्थितं सोऽर्थदः स्यात् साधकोऽर्थप्रदो न सः ॥
वैरं तु पञ्चमे .... .... .... .... इति ।

तदुक्तं ज्योतिःशास्त्रेऽपि ।

अकचटतपयशवर्गाः खगेशमार्जारसिंहशुनाम् ।
सर्पाखुगजावीनां निजपञ्चमवैरिणामष्टौ ॥

स्ववर्गादेर्द्विगुणीकरणादौ स्वरज्ञानप्रकारोऽपि तत्रैवोक्तः ।

गजशरर्त्तुयुगाश्वमहीगुणा
द्विसहिता मघवादिदिशः क्रमात् ।
गृहपतेरभिधापुरदिङ्मिता नवहृता
भवनस्य दशा च सा—इति ॥

तन्त्रान्तरे ।

रिपुत्वे निश्चिते तस्य द्वितीयार्णादि शोधयेत् ।
इत्थं स्थानगृहं कृत्वा तत्र मन्त्री वलिं हरेत् ॥

(गौतमीये)

द्वीपनाथं लिखेन्मध्ये पूजयेत् तं विभावयेत् ।

तन्त्रे ।

पूर्वादिनवकोष्ठेषु क्षेत्रेशाँस्तत्र पूजयेत् ।

अमृतः प्रथमे प्रोक्तो द्वितीये वृषभस्तथा ॥
शैलराजस्तृतीये स्याच्चतुर्थे वासुकिः स्मृतः ।
अर्थकृत् पञ्चमे प्रोक्तः शक्तिकृत् षष्ठ ईरितः ॥
पद्मयोनिः सप्तमे स्यान्महाशङ्खोऽष्टमे स्मृतः ।
छायाछत्रगणः प्रोक्तो नवमे मन्त्रिनायकैः ॥

(मेरुतन्त्रे)

अमृतो वृषभः शैलराजो वासुकिरेव च ।
अर्थकृच्छक्तिकृत् पूर्वकाष्ठादौ वलिनाऽर्चयेत् ॥
पद्मयोनिं महाशङ्खं छायाख्यं चापि मध्यमे ।
कूर्मपृष्ठे गृहं कृत्वा गृहस्थो जपमाचरेत् ॥

(यामले)

महापीठेषु शाक्तेषु कामरूपादिकेषु च ।
यदि कुर्यात् पुरश्चर्यां तदा कूर्मं न चिन्तयेत् ॥

कामरूपादिपीठान्युक्तानि ( योगिनीहृदयादौ ) ।

कामरूपं* च काशी च नैपालं पौण्ड्रवर्धनम् ।
काश्मीरं कान्यकुब्जं च पूर्णशैलं तथाऽर्बुदम्† ॥
आम्रातकेश्वरैकाम्र त्रिस्रोतः‡ कामकोटकम् ।
कैलासं भृगुनगरं केदारश्चन्द्रपूरकम् ॥
श्रीपीठमोङ्कारपीठं जालन्धरं च मालवम् ।
कुलान्तकं देवीकोटं गोकर्णं मारुतेश्वरम् ॥
अट्टहासं च विरजं राजगृहं महापथम् ।
कोलागिरिर्मेलापुरं कालेश्वरं जयन्तिका ॥

---

* कापुरस्थितमिति पाठ ।
† अर्बुदं शैलविशेषः ।
‡ त्रिस्रोता गङ्गा ।

उज्जयिनी विचित्रं* च क्षीरकं हस्तिनापुरम् ।
उड्डीशं च प्रयागाख्यं षष्ठीमाया जलेश्वरम् ॥
मलयश्चैव श्रीशैलो मेरुर्गिरिवरस्तथा ।
माहेन्द्रं वामनं चैव हिरण्यपुरमेव च ॥
महालक्ष्मीरुड्डियानं छायाछत्रमतः परम् ।
एते पीठाः समुद्दिष्टा मातृकारूपमास्थिताः ॥

तन्त्रान्तरे । दाक्षायिण्या इत्यधिकृत्य—

योनेर्हृदो गुदाद्वामनेत्राद्वामश्रुतेरथ ।
दक्षकर्णात् तथा घ्राणाद्वामवक्षोरुहादपि ॥
दक्षगण्डान्नखेभ्यश्च बलीपरिसरादथ ।
नाभेस्तथाऽङ्गुलीभ्यश्च दन्तेभ्यो दक्षपाणितः ॥
वामगण्डान्मस्तकाच्च बाहोर्दक्षस्तनादपि ।
स्कन्धाच्च दक्षिणात् कक्षाद्वामकक्षात् तथोदरात् ॥
तत ऊर्ध्वं बलेर्मध्यबलेस्तलबलेरथ ।
ततो वस्तेर्नितम्बाच्च जघनाद्दक्षिणोरुतः ॥
वामोरुतो दक्षिणाच्च जानुतो वामजानुतः ।
जङ्घाकाण्डात् ततो दक्षाद्वामाच्च दक्षगुल्फतः ॥
वामगुल्फाद्दक्षनेत्राद्दक्षाद्वामाच्च पार्ष्णितः ।
रक्तात् पित्तात् तथा मेदोजिह्वामज्जाभ्य एव च ॥
दक्षिणात् पादुकाङ्गुष्ठाद्वामादपि च तेजसः ।
नाडीततेश्च छायायाः केशपाशादिति क्रमात् ॥
तत्तत्स्थानेषु पतितात् सर्वसिद्धिकराणि वै ।

---

* योगिनीति पाठः ।

पीठानि चैकपञ्चाशत् कामरूपादिकानि च ॥
अकारादिक्षकारान्तवर्णारूपाणि जज्ञिरे ।
अङ्गान्तरास्थिलोमभ्यो भूषणानां च संहतेः ॥
उपपीठान्यसंख्यानि प्रादुर्भूतानि सर्वतः ।

( मेरुतन्त्रे )

कुरुक्षेत्रे प्रयागे च गङ्गासागरसङ्गमे ।
महाकाले च काश्यां च कूर्मस्थानं न चिन्तयेत् ॥

(गौतमीये)

पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे ।
यदि कुर्यात् पुरश्चर्यां तत्र कूर्मं न चिन्तयेत् ॥

(यामले)

अट्टाट्टके शक्तिपीठे तीर्थे क्षेत्रेषु वा पुनः ।
अरण्ये पर्वते पुण्ये कूर्मचक्रं न चिन्तयेत् ॥

(पुरश्चरणचन्द्रिकायाम्)

कूर्मचक्रमिति प्रोक्तं मन्त्राणां सिद्धिसाधनम् ।
मुखं तस्य समाश्रित्य वातालयसहां कुटीम् ॥
चतुरस्रां चतुर्हस्तां हस्तोन्नतसुवेदिकाम् ।
चन्द्रातपपताकाद्यैस्तोरणैरप्यलङ्कृताम् ॥
विविक्तामभिलिप्तां च प्राकारेणाभिवेष्टिताम् ।
निर्ममेच्च ततः कुर्यादेकभक्तं शुभे दिने ॥
प्रातः स्नात्वा च गायत्र्या अयुतं प्रयतो जपेत् ।
ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं ततः ॥

गायत्री स्वेष्टदेवस्य ( मेरुतन्त्रे )

शुभे मुहूर्ते नक्षत्रे तिथौ स्नात्वा यथाविधि ।
विप्रान् सन्तर्प्य यत्नेन भोजनाच्छादनादिभिः ॥

भूवित्तवस्त्रभूषाद्यैः संतोष्य गुरुमात्मनः ।
आरभेत पुरश्चर्यां तदनुज्ञापुरःसरम् ॥

(सिद्धान्तसारे)

प्रातःकृत्यादिपूजान्तं कृत्वा तु जपमारभेत् ।

(यामले)

प्रातःकृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयते ।
विफला तस्य पूजा तु शौचहीना यथा क्रिया ॥

तत्रादौ प्रातःकृत्यं कुर्यात् । तदुक्तं (सिद्धान्तसारे)

मुहूर्ते ब्रह्मणो विद्वान् मुक्तस्वापो निराकुलः ।
तल्पादुत्थाय शुक्लेऽब्जे शिरःस्थे श्रीगुरुं स्मरेत् ॥

(मेरुतन्त्रे)

निशायाः पश्चिमे यामे स्मरेदिष्टां च देवताम् ।
उत्थाय दक्षिणाङ्गेन वामपादं न्यसेद्भुवि ॥
ततो गृहाद्बहिर्गत्वा कृत्वाऽवश्यकमादरात् ।
रात्रिवासः परित्यज्य वाससी परिधाय च ॥
आचम्य शुद्धदेहः सन् .... .... इति ।

(पुरश्चरणचन्द्रिकायाम्)

कृत्वाऽवश्यक्रियां धीर उपविश्यासने शुभे ।

(यामले)

बद्धपद्मासनो मन्त्री समकायशिरोधरः ।

(मेरुतन्त्रे)

ततः स्वमस्तके चिन्त्यं सहस्रदलपद्मकम् ।
कर्पूराभं स्मरेत् तत्र श्रीगुरुं निजरूपिणम् ॥
सुप्रसन्नं लसद्भूषामण्डितश्वेतचन्दनम् ।
वराभयज्ञानमुद्रापुस्तकव्याप्तैः करैः ॥

युक्तं श्वेताम्बरं शान्तं श्वेतपुष्पविभूषितम् ।
वामाङ्कगतया शक्त्याऽऽलिङ्गितं रक्तवर्णया ॥
रक्तवस्त्राभरणया रक्तचन्दनमालया ।
वामे लीलाकमलयाऽऽलिङ्गन्त्या दक्षिणेन च ॥
ध्यायेदन्तर्मुखं शान्तं योगिनं शिवरूपिणम् ।

(कालानलतन्त्रे)

शुद्धस्फटिकसंकाशमज्ञानतिमिरापहम् ।
शुभांशुशुद्धसंकासं क्षौमद्वयविराजितम् ॥
गन्धानुलेपनं शान्तं वराभयकरद्वयम् ।
वामोरुशक्तिसंयुक्तं रक्ताम्बरविभूषया ॥
स्वशक्त्या दक्षहस्तेन धृतचारुकलेवरम् ।
वामे धृतोत्पलया च रक्तया च सुशोभितम् ॥
परानन्दरसोल्लासलोचनद्वयपङ्कजम् ।

(मेरुतन्त्रे)

तत्पादपद्मयुगलश्रुतपीयूषधारया ।
अभिषिक्तः स्वस्य देह एवं शिष्यो विचिन्तयेत् ॥
अर्चयेद्गन्धपुष्पाद्यैर्बाह्यस्थैर्मानसैश्च वा ।
नामभिस्तस्य संकेतसंसिद्धैर्गुरुकीर्त्तकैः ॥
प्रणम्येत्थं हृन्मनुना भावयेत् तल्लयं हृदि ।

तन्त्रान्तरे ।

तदाज्ञां च समादाय संस्मरेदिष्टदेवताम् ।
मूलादिब्रह्मरन्ध्रान्तं कुण्डलीरूपतः स्थिताम् ॥
तडित्कोटिप्रभादीप्तां विशतन्तुतनीयसीम् ।
सार्धं त्रिवलयाकारां प्रसुप्तभुजगाकृतिम् ॥

(श्यामापद्धतौ)

प्रसुप्तभुजगाकारां मूलाधारनिवासिनीम् ।
सुषुम्णावर्त्मनोत्थाप्य परदेवीस्वरूपिणीम् ॥
आनीय ब्रह्मरन्ध्रान्तं योजयेच्छम्भुना सह ।
सामरस्यं ततस्तस्या विभाव्य च विचक्षणः ॥
सुधावृष्टिं ततः कृत्वा पूर्वस्थाने नियोजयेत् ।

( मेरुतन्त्रे )

ततस्तु मूलाधारादि ब्रह्मरन्ध्रान्तमुद्यतम् ।
तेजोदण्डं सुषुम्णान्तः सहस्ररविसन्निभम् ॥
तदात्मकं मूलमन्त्रं ध्यात्वा तं तेजसा वृतम् ।
स्वशरीरं विचिन्त्येति प्राणायामत्रयं चरेत् ॥
मूलमन्त्रेण मन्त्रस्य ऋष्यादिन्यासमाचरेत् ।
अङ्गन्यासान् विधायाथ हृदि देवं विचिन्तयेत् ॥
मानसैरुपचारैस्तु पूजयित्वा मनुं जपेत् ।
यथाशक्त्याऽथ देवाय तं जपं च समर्पयेत् ॥
स्तुत्वा प्रणम्य देवाज्ञां श्लोकैरेभिश्च याचयेत् ।

त्रैलोक्यचैतन्यमयादिदेव
श्रीशङ्कर त्वच्चरणाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं
संसारयात्रामनुवर्त्तयिष्ये ॥
संसारयात्रामनुवर्त्तमानं
त्वदाज्ञया शङ्कर देवदेव ।
स्पर्द्धातिरस्कारकलिप्रमादा-
भयानि मां माऽभिभवन्तु नाथ ॥

२२

इति संप्रार्थ्य देवेशम् .... .... .... .... इति ।

अथाजपाविधिः । तदुक्तं (वीरचूडामणौ)

हंसाख्याराधनं वक्ष्ये मन्त्रिणां हितकाम्यया ।
यस्य विज्ञानमात्रेण सर्वज्ञो भुवि जायते ॥
हंसात्मिकां भगवतीं जीवो जपति सर्वदा ।
अस्याः स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ॥
ऋषिर्हंसः समाख्यातः परहंसश्च देवता ।
अव्यक्ता छन्दो गायत्री विनियोगश्च सिद्धिदः ॥

(सुरेन्द्रसंहितायाम्)

ऋषिर्हंसोऽव्यक्तपूर्वा गायत्री छन्द उच्यते ।
देवता परमादिस्तु हंसो हँ बीज उच्यते ॥
अः शक्तिः कीलकः सोऽहं प्रणवस्तत्त्वमेव हि ।
उदात्तः स्वर इत्येवं मनोरस्य प्रकीर्त्तितः ॥
मोक्षार्थे विनियोगः स्यादेवं कुर्यात् सदा नरः ।

(वीरचूडामणौ)

सूर्यात्मने च हृद्देवि सोमात्मने शिरस्तथा ।
निरञ्जने शिखा ज्योतिर्निराभासा तथा परे ॥
अव्यक्तं नेत्रयोर्न्यस्य अनन्तोऽस्त्रे फडं यजेत् ।
एवं न्यासविधिं कृत्वा गणेशादौ समर्पयेत् ॥

(सुरेन्द्रसंहितायाम्)

हंसात्मिकां भगवतीं जीवो जपति सर्वदा ।
हकारेण बहिर्याति सकारेण विशेत् पुनः ॥
अस्याः संबोधमात्रेण जीवन्मुक्तो भवेन्नरः ।
प्राणायामप्रभावेण जीवन्मुक्तस्तु जायते ॥
एकविंशतिसाहस्रं षट्शताधिकमेव च ।

प्रजपेत् प्रत्यहं जीवो ब्रह्मानन्दमयीं पराम् ॥
उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम् ।
विना जपेन सततं जपो भवति सर्वदा ॥
एवं जपस्तु विज्ञातो गणेशादौ निवेदयेत् ।

(योगशास्त्रे)

कुण्डलिन्याः समुद्भूता गायत्री प्राणधारिणी ।
प्राणविद्या महाविद्या यस्तां वेत्ति स योगवित् ॥
हकारेण बहिर्याति शकारेण विशेत् पुनः ।
हंसो हंस इमं मन्त्रं जीवो जपति सर्वदा ॥
षट्शतानि दिवा रात्रौ सहस्राण्येकविंशतिः ।
एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा ॥
अजपानामगायत्री योगिनां मोक्षदायिनी ।
अस्याः संकल्पमात्रेण सर्वपापैः प्रमुच्यते ॥
अनया सदृशी विद्या अनया सदृशो जपः ।
अनया सदृशं ज्ञानं न भूतं न भविष्यति ॥

हंसध्यानमुक्तं ( बालापद्धतौ )

अग्नीषोमगरुद्वयं प्रणवकं विन्दुत्रिनेत्रोज्ज्वलं
भास्वदुद्रमुखं शिवाङ्घ्रियुगलं पार्श्वस्थकालानलम् ।
उद्यद्भास्करकोटिकान्तिसदृशं हंसं जगद्व्यापिनं
नित्यानन्दमयं हृदम्बुजकुटीनीडे सदा भावयेत् ॥

तत्रैव ।

गणेश्वरो विधिर्विष्णुः शिवो जीवो गुरुस्तथा ।
षडेते हंसतामेत्य मूलाधारादिषु स्थिताः ॥

हंसतामेत्येति। सहस्रदलकमलकर्णिकावस्थितहंसरूपपरमात्मभेदरूपं प्राप्येत्यर्थः। एषा हंसैक्यभावना तत्रैवोक्ता।

हंसो गणेशो विधिरेव हंसो हंसो हरिर्हंसमयश्च शम्भुः ।
हंसो हि जीवो गुरुरेव हंसो हंसोऽहमात्मा परमार्थरूपः ॥

हंसावस्थायामेषां स्थानभूतानि षड्चक्राण्युक्तानि ( योगसारे )

गुदाच्च द्व्यङ्गुलादूर्ध्वं मेढ्राच्च द्व्यङ्गुलादधः ।
मूलाधारमिदं प्रोक्तं पीतवर्णं चतुर्दलम् ॥
तोयवर्णादिभिर्वर्णैश्चतुर्भिः समलङ्कृतम् ।
गुदमेढ्रान्तरालस्थं मूलाधारं त्रिकोणकम् ॥

तथा ।

तदेव कामरूपाख्यं पीठं कामफलप्रदम् ।
स्वाधिष्ठानाह्वयं चक्रं लिङ्गमूले षडारकम् ॥
बालार्कवर्णपृष्ठादिषडक्षरसमन्वितम् ।
नाभिदेशे स्थितं चक्रं दशारमणिपूरकम् ॥
नीलप्रभाण्डादिवर्णैर्दशभिः समलङ्कृतम् ।
द्वादशारं महाचक्रं हृदयेनाहताह्वयम् ॥
क्रोधीशाद्यक्षरोपेतमिन्द्रगोपसमप्रभम् ।
तदेतत् पूर्णगिर्याख्यं पीठं तव वरानने ॥
कण्ठदेशे विशुद्धाख्यं यच्चक्रं षोडशारकम् ।
धूम्रप्रभं षोडशभिः श्रीकठादिस्वरैर्युतम् ॥
पीठं जालन्धरं नाम तिष्ठत्यत्रामरेश्वरि ।
आज्ञा नाम भ्रुवोर्मध्ये द्विदलं *चक्रकेशरम् ॥
अन्त्यवर्णद्वयोपेतं शरच्चन्द्रसमद्युतिम् ।
उद्यानाख्यं महापीठमुपरिष्टात् प्रतिष्ठितम् ॥
सहस्रारं महापद्मं विसर्गाधः प्रतिष्ठितम् ।

* चक्रमुत्तममिति ४ पु० पा० ।

अधोमुखं सर्ववर्णयुक्तमारक्तकेशरम् ॥
एतदेव हि कैलाशसंज्ञकं चक्रमुच्यते ।
यत्र नित्योदितश्चन्द्रस्त्रिशृङ्गोऽमृतवर्षणः ॥

तथा ।

सहस्रारे तु देवेशि हंसरूपी परः शिवः ।
स्थानान्येतानि देवेशि शक्तिर्येषु प्रकाश्यते ॥

मूलाधारादौ गणेशादिध्यानमुक्तम् ( बालार्चनपद्धतौ )

वशषसदलयुक्ते सम्यगाधारपद्मे
तरुणमरुणगात्रं वारणास्यं त्रिनेत्रम् ।
अभयवरदहस्तं* चारुपाशाङ्कुशोद्यत्-
कररुचिरसमन्यं चिन्तयेदादिमूर्तिम् ॥

स्वाधिष्ठाने ब्रह्मध्यानं यथा ।

बभमयरल†संज्ञैरक्षरैः क्लृप्तपद्मे
सुरुचिरमुपदिष्टे पङ्कजैः सन्निधानम् ।
अभयवरदहस्तं कुण्डिकां चाक्षमालां
दधतममलमूर्त्तिं चिन्तयेद्विश्वयोनिम् ॥

मणिपूरचक्रे विष्णुध्यानं यथा ।

डाद्यैः फान्तगतैः प्रकल्पितदले पद्मे निविष्टं हरिं
मार्त्तण्डद्युतिमादिपूरुषमजं नारायणं चिन्मयम् ।
हस्तन्यस्तगदारिशङ्खकमलं पीताम्बरं कौस्तुभं
श्रीवत्साङ्कितमिन्द्रनीलसदृशं ध्यायेज्जगन्मोहनम् ॥

अनाहतचक्रे शिवध्यानं यथा ।

---

* सिद्धिलक्ष्म्या समेतं दधत वरदमूर्त्तिं भावयेच्छ्रीगणेशम् इति ४ पु. पा. ।
† युक्तं लिङ्गमूलस्थपद्मे इति ४ पु. पा० ।

कार्येष्टान्तगतैः प्रकल्पितदले पङ्केरुहे पार्वती-
कान्तं पूर्णशशाङ्ककोटिसदृशं प्रख्यं कपर्दोज्ज्वलम् ।
शान्तं टङ्कमृगाभयास्पदकरं नागादिभूषोज्ज्वलं
ग्रैवेयाङ्गदहारकुण्डलधरं चर्माम्बरं चिन्तयेत् ॥

विशुद्धचक्रे जीवात्मध्यानं यथा ।

मूर्त्यङ्केषु निविष्टमङ्गरहितं शान्तं रुचा भासुरं
व्याप्ताशेषचराचरं गुणमयं भावेन सच्चिन्मयम् ।
मूर्त्तामूर्त्तममूर्त्तमेकममलं ज्योतिःप्रदीपोपमं
साक्षात्षोडशपत्रवर्णकमले जीवं परं चिन्तयेत् ॥

आज्ञाचक्रे गुरुध्यानं यथा ।

हक्षार्णद्वयचारुपत्रकमले दिव्ये जगत्कारणे
विश्वोत्तीर्णमनेकदेहनिलयं स्वच्छन्दमात्मेच्छया ।
तत्तद्योग्यतया स्वदेशिकतनुं भावैकसच्चिन्मयं
प्रत्यक्षाक्षरविग्रहं गुरुवरं ध्यायेत् परं दैवतम् ॥

सहस्रदलकमले परमात्मध्यानं यथा ।

विश्वव्यापिनमादिदेवममलं नित्यं परं निष्कलं
नित्योद्बुद्धसहस्रपत्रकमले लिप्यक्षरैर्मण्डिते ।
नित्यानन्दमनन्तपूर्णपरचित्सत्तास्फुरत्तात्मकं
स्मृत्वाऽऽत्मानमनुप्रविश्य कुहरे स्वच्छन्दतः सर्वतः ॥

एषां शक्तयोऽपि तत्रैवोक्ताः ।

शक्तिः सिद्धिर्गणेशस्य ब्रह्मणश्च सरस्वती ।
लक्ष्मीर्नारायणस्यापि पार्वती च पिनाकिनः ॥
अविद्या चैव जीवस्य गुरोर्ज्ञानं परापरम् ।
मोक्षबीजात्मिका विद्या शक्तिश्च परमात्मनः ॥

तत्रैव ।

एवं ध्यात्वा परात्मानमिष्टदेवीस्वरूपिणम् ।
निवेदयेद्यथासंख्यं क्रमेणैवाजपाजपम् ॥
षट्शतानि गणेशाय ब्रह्मणे षट्सहस्रकम् ।
विष्णवे षट्सहस्रं च षट्सहस्रं पिनाकिने ॥
सहस्रमात्मने चैव गुरवे च सहस्रकम् ।
परात्मने सहस्रं च यथाविधि निवेदयेत् ॥

यथाविधि इति मानसैरुपचारैरभ्यर्च्य—

सिद्धिशक्तिसहिताय गणेशाय षट्शतसंख्याकमजपाजपमहं निवेदयामि नमः ।

एवम्—

सरस्वतीशक्तिसहिताय ब्रह्मणे षट्सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।

एवम्—

लक्ष्मीशक्तिसहिताय*विष्णवे षट्सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।

एवम्—

पार्वतीशक्तिसहिताय महेश्वराय षट्सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।

एवम्—

अविद्याशक्तिसहिताय जीवात्मने सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।

एवम्—

परापरज्ञानशक्तिसहिताय गुरवे सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।

---

* नारायणाय-इति २-३ पु. पा.

एवम्—

सूर्यकोटिप्रकाशाय चन्द्रकोटिसुशीतलाय विद्याशक्तिसहिताय परमात्मने सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।

इत्येवं निवेदयेदित्यर्थः ।

ताराविषये तु ( वीरचूडामणौ )

आज्ञायां विद्युदाभायां शुभ्रौ दत्तौ नियोजयेत् ।
परमात्मनि पराशक्तौ सहस्रं च समर्पयेत् ॥
कर्पूरद्युतिसंराजत्सहस्रदलपङ्कजे ।
नीलात्मकं गुरुं ध्यायेत् सहस्रं च समर्पयेत् ॥

इति विशेष उक्तः ।

तथा ।

ततः स्तुत्वा च नत्वा च संकल्प्य च विधानतः ।
तदाज्ञां च समादाय कुर्यादावश्यकीः क्रियाः ॥

संकल्प्येति ।

अद्यतनसूर्योदयादारभ्य श्वस्तनसूर्योदयपर्यन्तं श्वासोच्छ्वासरूपेण षट्शताधिकैकविंशतिसहस्रसंख्याकमजपागायत्रीजपमहं करिष्ये ।

इति संकल्प्येत्यर्थः ।

( मेरुतन्त्रे )

प्रार्थतित्वा वरान् श्वासयुक्तं पादं निधापयेत् ।
समुद्रमेखले देवि पर्वतस्तनमण्डले ॥
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।

अथ शौचविधिस्तत्रैव ।

ततो गृहाद्बहिर्याम्यां नैरृतीं वा दिशं व्रजेत् ।
पदे पदे स्मरेदस्त्रं दूरं यायान्निजालयात् ॥

अतीत्य बाणमात्रां तु भुवं ग्रामाद्विलोक्य च ।
कीटतोयादिरहितं शौचस्थानमिदं पठेत् ॥
उत्तिष्ठन्त्वृषयो देवा गन्धर्वा यक्षराक्षसाः ।
परितस्त्यज्यतां स्थानं विण्मूत्रोत्सर्जनाय मे ॥
अनेन मनुना लोष्टतृणैरुद्वास्य देवताः ।
कुर्यान्मलच्युतिं तत्र वाससा कं प्रवेष्ट्य च ॥
खं दिशश्च न पश्येत शौचमुद्धृत्य वारिभिः ।
एका लिङ्गे गुदे सप्त दश वामकरे तथा ॥
उभयोः सप्त दातव्यास्तिस्रोऽङ्घ्र्योश्चापि मृत्तिकाः ।
मूत्रोत्सर्गे वामहस्ते लिङ्गे पञ्च च मृत्तिकाः ॥
त्रिः करद्वितये चैका पादयोरथ वाऽऽचरेत् ।
गन्धलेपक्षयकरं मनोग्लानिहरं परम् ॥
कुर्याद्द्वादशगण्डूषान् पुरीषोत्सर्जनोत्तरम् ।
मूत्रत्यागे तु चतुर आचमेत् त्रिस्ततः परम् ॥

अथ दन्तधावनविधिस्तत्रैव ।

अर्कन्यग्रोधखदिरकरम्भककुभादिजम् ।
कनिष्ठाग्रसमस्थौल्यं प्रगुणं द्वादशाङ्गुलम् ॥
क्लीमुक्त्वा कामदेवाय सर्वजनप्रियाय च ।
नमोऽन्तस्थितिवर्णोऽयं मन्त्रो दन्तविशोधने ॥
प्रक्षाल्य दन्तकाष्ठं च शुद्धदेशे पुरस्त्यजेत् ।
वक्त्रं मूलाणुना नित्यं क्षालयेत् सिद्धिहेतवे ॥

तन्त्रान्तरे ।

मन्त्रार्थं संस्मरँस्तीर्थं गत्वा स्नानं समाचरेत् ।

अथ स्नानविधिः । तदुक्तं (मेरुतन्त्रे)

अथ पूजाहोमकर्मसिद्धये स्नानमुच्यते ।
शङ्कुनास्त्राभिजप्तेन शुचिस्थानात् तु मृत्तिकाम् ॥
गृहीत्वाऽस्त्रेण संसिच्य यायाज्जलनिकेतनम् ।

तन्त्रान्तरे ।

दर्भाँस्तिलान् गोमयं च समादाय व्रजेत् ततः ।
तर्जन्या रजतं धार्यं स्वर्णं धार्यमनामया ॥
एष एव कुशः प्रोक्तो न दर्भा वनसंभवाः ।

(रुद्रयामले)

त्रयो दर्भाः समुद्दिष्टाः सुवर्णै रजतैः कुशैः ।
तत्र शाक्ते द्वयं वाद्यमन्येषां तु त्रयो मताः ॥
सुवर्णं रजतं चैव जपपूजादिकर्मसु ।
कुशकार्यकरं प्रोक्तं न तु वन्यकुशाः कुशाः ॥

(मेरौ)

तत्रादौ जलकूलं तु क्षालयेदस्त्रवारिणा ।
मृदं कृत्वा त्रिधा तत्र एकभागोपगं ततः ॥
निधाय गोमयं दर्भाँस्तिलाँश्चाप्यभिमन्त्रितान् ।
मृत्तिकागोमयाभ्यां च कद्यन्तं स्नानमाचरेत् ॥
वहिरुद्धृततोयेन मलस्नानं ततः परम् ।
विधाय वैदिकं स्नानं तदङ्गतर्पणं तथा ॥
ततस्तान्त्रिकस्नानस्य विधिरस्त्रेण मृत्तिकाम् ।
समादायास्त्रमन्त्रेण मन्त्रयित्वा तृणादिकम् ॥
शिखामन्त्रेणापहृत्य त्रिर्मूलेनाभिमन्त्रयेत् ।
मूर्धादिपादपर्यन्तं विलिप्य प्रणमेज्जलम् ॥

आधारः सर्वभूतस्य विष्णोरतुलतेजसः ।
तद्रूपाश्च ततो जातास्ता आपः प्रणमाम्यहम् ॥
संमुखीकरणीं मुद्रां बद्ध्वा प्राणं निरुद्ध्य च ।
निमज्ज्य तूष्णीमुत्थाय नाभिमात्रे जले स्थितः ॥
तान्त्रिकस्नानसंकल्पं मासोल्लेखादिपूर्वकम् ।
कृत्वा तु मूलमन्त्रेण प्राणायामत्रयं चरेत् ॥
विन्यस्य च षडङ्गानि कल्पयेत् तीर्थमग्रतः ।
चतुरस्रे हस्तमात्रे तज्जले परिकल्पिते ॥
ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।
तेन सत्येन देवेश तीर्थं देहि दिवाकर ॥
इति सूर्यं प्रार्थयित्वा क्रोमित्यङ्कुशमुद्रया ।
भित्वाऽर्कमण्डलं तस्मात् तीर्थान्यावाहयेदिह ॥
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥
एवमुक्त्वा तु तीर्थानि तस्मिँस्तोये नियोजयेत् ।
मूलमन्त्रेणाथ तीर्थशक्तिं तत्र समाह्वयेत् ॥
अर्कस्य मण्डलं धात्वा तन्मन्त्रेण च पूजयेत् ।
सर्वानन्दमयीमशेषदुरितध्वंसां मृगाङ्कप्रभां
त्र्यक्षामूर्ध्वकरद्वयेन दधतीं पाशं शृणिं वामतः ।
अन्तश्चामृतपूर्णहेमकलशौ मुक्ताक्षमालां वरं
गङ्गां सिन्धुसरिद्द्वयादिसहितां श्रीतीर्थशक्तिं भजे ॥

तीर्थशक्तिमन्त्रस्तन्त्रान्तरे ।

आकाशा वह्निमारूढा विन्दुनादविभूषिताः ।
षड्दीर्घस्वरसंभिन्ना सर्वानन्दमये पदम् ॥

संबुद्ध्यन्तां तीर्थशक्तिमेह्येहि वह्निगेहिनी ।
एकविंशाक्षरः प्रोक्तस्तीर्थशक्तेर्महामनुः ॥

( मेरुतन्त्रे )

तज्जलं गाङ्गमन्त्रेण मन्त्रयेदष्टवारकम् ।
तारो नमो भगवति ब्रूयादम्बे ततोऽम्बिके ॥
अम्बालिके महामालिन्येह्येहि भगवत्यथ ।
अशेषतीर्थालवाले मायाश्रीबीजमुच्चरेत् ॥
शिवजटाधिरूढे च गङ्गे गङ्गाम्बिके द्विठः ।
गङ्गाविद्येयमाख्याता त्रिपञ्चाशद्भिरक्षरैः ॥
भुवनेश्या समालोड्यामृतीकृत्य सुधाणुना ।
कवचेनावगुण्ठ्याथ संरक्ष्यास्त्रेण मन्त्रवित् ॥
मूलेन देवतां तत्र साङ्गां सावरणां तथा ।
समावाह्य जले ध्यात्वा तत्पादद्वयनिर्गतम् ॥
ध्यात्वा तीर्थं स्मरन्मूलमन्त्रं स्नायाज्जले त्रिशः ।
हृदि देवं स्मरन् पश्चात् सिञ्चेत् कं कुम्भमुद्रया ॥
त्रिभिः श्लोकैर्मूलमन्त्रं तारकं बीजपूर्वकैः ।
सिसृक्षोर्निखिलं विश्वं मुहुः शुक्रं प्रजापते ॥
मातरः सर्वभूतानामापो देव्यः पुनन्तु माम् ।
अलक्ष्मीर्मलरूपा याः सर्वभूतेषु संस्थिताः ॥
क्षालयन्ति निजं स्पर्शादापो देव्यः पुनन्तु माम् ।
यन्मे केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ॥
ललाटे कर्णयोरक्ष्णोस्तमापो घ्नन्तु वो नमः ।
ततः स्वाहात्ममूलेन त्रिराचमनमाचरेत् ॥

(गन्धर्वतन्त्रे)

मूलं पठन्मूर्ध्नि तोयं मुद्रया कुम्भसंज्ञया ।
क्षिप्त्वा वारत्रयं पश्चादाचामेत् साधकाग्रणीः ॥
आत्मविद्याशिवैस्तत्त्वैः .... .... इति ।

कुम्भमुद्रा वक्ष्यते (मेरुतन्त्रे)

त्रिधा देवं च संतर्प्य तोयमध्यात् तटे व्रजेत् ।
धौतं वस्त्रयुगं धृत्वा प्रक्षाल्योरू करौ तथा ॥
मृदद्भिस्तत आचामेदेवं स्नानविधिः स्मृतः ।

अथ मन्त्रस्नानविधिस्तत्रैव ।

मन्त्रस्नानं प्रकर्त्तव्यं शीतयोर्देशकालयोः ।
तोयाभावेऽगमे दुर्गे कार्येऽस्वास्थ्ये च वार्द्धके ॥
प्रक्षाल्य पादावाचम्य प्रोक्षितेन तु वारिणा ।
स्थानं दश दिशः प्राग्वत् संशोध्योपविशेत् ततः ॥
अस्त्रं हस्ततले न्यस्य क्रमान्न्यासाँस्ततश्चरेत् ।
मातृकादीँस्तथा मूलमन्त्रन्यासानशेषतः ॥
न्यासान्ते संस्पृशेत् तोयं मन्त्रस्नानमिदं वरम् ।
केवलादुदकस्नानात् संस्कारपरिवर्जितात् ॥
प्रभासादिषु तीर्थेषु यत् फलं स्नातकस्य तु ।
ज्ञेयं दशगुणं तस्मान्मन्त्रस्नानस्य निश्चयात् ॥

अथ ध्यानस्नानं तत्रैव ।

ध्यानस्नानमथो वक्ष्ये द्वाभ्यामपि परं च यत् ।
खस्थितं पुण्डरीकाक्षं मन्त्रमूर्त्तिं प्रभुं स्मरेत् ॥
तत्पादोदकजां धारां निपतन्तीं स्वमूर्धनि ।
चिन्तयेत् सूक्ष्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ॥

तया संक्षालयेत् सर्वमेतद्देहगतं मलम् ।
तत्क्षणाद्विरजा मन्त्री जायते स्फटिकोपमः ॥
इदं स्नानवरं मन्त्रस्नानाच्छतगुणं मतम् ।
मनसा यस्तु संशुद्धः स शुद्धः सर्वकर्मसु ॥

पुण्डरीकाक्षमित्युपलक्षणम् । यस्य या देवता स तां स्मरेदिति वदन्ति ।
अथ मानसस्नानं तत्रैव ।

अथ मानसिकं स्नानं मनसा मूलमन्त्रतः ।
प्राणायामं प्रकुर्वीत दृष्टतीर्थेषु भावतः ॥

(शैवागमेऽपि)

मनसा मूलमन्त्रेण प्राणायामपुरस्सरम् ।
कुर्वीत मानसं स्नानं सर्वत्र विहितं च यत् ॥

( मेरुतन्त्रे )

यद्वा शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम् ।
मार्जनं संहितामन्त्रैः शिवस्नानमितीरितम् ॥
स्नानपूर्वाः क्रियाः सर्वाः शुद्धाः सिद्धिं प्रयान्ति च ।
तस्मात् स्नानं पुरा कुर्यादेष्वेकं देहशक्तितः ॥

अथ तिलकधारणविधिस्तत्रैव ।

ततस्तु तिलकं कुर्याज्जातेर्वा दैवतस्य वा ।
यद्यत्कुम्भफलं तीर्थं मृद्भिर्वा भक्तिभावतः ॥
ब्राह्मणस्योर्ध्वपुण्ड्रः स्यात् क्षत्रियस्य त्रिपुण्ड्रकम् ।
अर्धचन्द्रं तु वैश्यस्य शूद्राणां वर्त्तुलाकृतिः ॥
ऊर्ध्वपुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं चापि भस्मना ।
केशरेण च कस्तूर्या शेषे शीतं यथारुचि ॥
वैष्णवस्योर्ध्वपुण्ड्रं स्यात् त्रिपुण्ड्रं शिवसेवितुः ।
अर्धचन्द्रो गणेशस्य देवीभक्तस्य वर्त्तुलम् ॥

नारायणपरो यस्तु चन्दनस्य त्रिशूलकम् ।
भाले बिभर्त्ति वन्द्योऽसौ ब्रह्मविष्णुशिवात्मकम् ॥

अथ विभूतिधारणविधिस्तत्रैवोक्तः ।

भूतिदातुर्विभूतिः स्याद्विधिना विधृता यदि ।
यथाकथञ्चिद्विधृता भस्मसात्कुरुते जनम् ॥
शिवाग्ने भस्म संग्राह्यमग्निहोमोद्भवं तु यत् ।
वैवाह्यग्न्युद्भवं वाऽपि पक्वं शुचि सुगन्धि च ॥
कपिलायां सकृच्छ्रेष्ठं गृहीतं गगने पतत् ।
न क्लिन्नं नापि कठिनं न दुर्गन्धि न चोषितम् ॥
उपर्यधः परित्यज्य गृह्णीयात् पतितं यदि ।
पिण्डीकृत्य शिवाग्नौ तु तत् क्षिपेन्मूलमन्त्रतः ॥
अपक्वमपि पक्वं च संत्याज्यमसितं सितम् ।
आदाय वाससाऽऽलोड्य भस्माधारे विनिःक्षिपेत् ॥
भस्मसंग्रहणं कुर्याद्देवेऽनुद्वासिते सति ।
उद्वासने कृते यस्माच्चण्डभस्म प्रजापते ॥
यद्वा द्विजा भस्म कुर्युः सद्येनानीय गोमयम् ।
वामेन पात्रे संयोज्याघोरमन्त्रेण निर्दहेत् ॥
पुरुषेण समुद्धृत्य ईशानेन विशोधयेत् ।
इत्थं तु संस्कृतं भस्म अग्निरित्यादिमन्त्रितः ॥
तद्रुद्रायेति यजुषा मन्त्रयेद्रुद्रसंख्यया ।
प्रणवाद्यैश्चतुर्थ्यन्तैर्हृदन्तैर्नामभिरंशकैः ॥
पञ्चवर्णाद्यक्षराद्यैः भालांसोदरहृत्सु च ।
त्रिपुण्ड्रधारणं कुर्यात् मूर्ध्नि पञ्चाक्षरेण च ॥

एभिश्च नामभिर्धार्यं पुनर्भस्म द्विजादिभिः ।
ब्रह्मा ललाटे विज्ञेयो हृदये हव्यवाहनः ॥
नाभौ स्कन्दो गले पूषा रुद्रो दक्षिणबाहुके ।
आदित्यो बाहुमध्ये च शशी च मणिबन्धके ॥
वामदेवो वामबाहौ बाहुमध्ये प्रभञ्जनः ।
मणिबन्धे च वसवः पृष्ठदेशे हरिः स्मृतः ॥
शम्भुः ककुदि संप्रोक्तः परमात्मा शिरःस्मृतः ।
कस्तूर्यादिकसंयुक्तं भस्म शाक्तस्तु धारयेत् ॥
अद्भिर्जैर्मूलमन्त्रेण शिवपञ्चाक्षरेण च ।
त्रिपुण्ड्रं कारयेद्भाले ब्रह्मविष्णुशिवात्मकम् ॥
मध्याङ्गुलिभिरादाय तिसृभिर्मूलमन्त्रितम् ।
अनामामध्यमाङ्गुष्ठैरथ वा स्यात् त्रिपुण्ड्रकम् ॥

अथ सन्ध्याविधिः ( भैरवीतन्त्रे )

आचम्य प्राङ्मुखो भूत्वा उपविश्य च मन्त्रवित् ।
वैदिकीं तान्त्रिकीं कुर्यात् ततः सन्ध्यां समाहितः ॥

(मेरुतन्त्रे )

वक्ष्येऽथ तान्त्रिकीं सन्ध्यां मूलेनाचमनत्रयम् ।
शिखां बध्वा च मूलेन प्राणायामत्रयं चरेत् ॥
अङ्गानि विन्यसेद्देहे करन्यासपुरःसरम् ।
अमृतीकृत्य पुरतो जलं च धेनुमुद्रया ॥
अभिमन्त्र्य च मूलेन सप्तवारं ततः परम् ।
अकारादिक्षकारान्तैर्मातृकार्णैः सविन्दुभिः ॥
प्रत्यर्णं प्रोक्षयेन्मूर्ध्नि कुशैर्मूलेन च त्रिधा ।
देवं ध्यात्वाऽथ मनुविद्वानुमण्डलसंस्थितम् ॥

आदाय तोयमामन्त्र्य बीजैर्भूतात्मकैस्तथा ।
लँ वँ रँ यँ हँ इति च तान्येतैः सप्तधा जलम् ॥
मन्त्रयित्वा पुनः सप्तवारं मूलेन मन्त्रयेत् ।
तज्जलं वामहस्तेन धार्यं तत्स्रुतविन्दुभिः ॥
दक्षहस्तेन संप्रोक्ष्य कं पठन्मूलमन्त्रकम् ।
हस्तव्यत्यासतो वामाचारी सेचनमाचरेत् ॥
नासामाश्लिष्य शिष्टेन तेजोरूपेण तेन तु ।
प्रविश्यान्तर्गतं सर्वं मलं संशोध्य निर्गतम् ॥
दक्षनासापुटेनैतत् स्मृत्वा दक्षिणहस्तकम् ।
वामभागे वज्रशिलां ध्यात्वाऽस्त्रेण च तत् क्षिपेत् ॥
प्रक्षाल्य हस्तावाचम्य मूलमन्त्रेण मन्त्रवित् ।
गायत्र्या वाऽथ मूलेन दद्यादर्घत्रयं ततः ॥
रविमण्डलसंस्थाय स्वेष्टदेवाय तर्पयेत् ।
जलेन मूलमन्त्रान्ते ह्यमुकं तर्पयामि च ॥
उक्त्वा त्रिधा तर्पणीयं वामकैः कारणेन तु ।
इष्टदेवस्य गायत्रीमष्टाविंशतिसंख्यकाम् ॥
जपेदभावे ब्राह्मीं तु वैदिकं मतमाश्रितः ।
तान्त्रिकः शिवगायत्रीं जपेत् साऽथ निरूप्यते ॥

ॐ तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि तन्नः शिवः प्रचोदयात् ।

तन्त्रान्तरे ।

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्—इति शिवगायत्री उक्ता ।

अथ गणेशगायत्री (यामले)

ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात् ।

अथ सूर्यगायत्री (मेरुतन्त्रे)

ॐ सप्ततुरगाय विद्महे सहस्रकिरणाय धीमहि तन्नो रविः प्रचोदयात् ।

इयं तु सूर्यगायत्री जपतामिष्टदायिनी ।
भग्नानां राजपुत्राणां क्षत्रतेजोविधायिनी ॥

अथ विष्णुगायत्री तत्रैव ।

ॐ नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् ।

अथ नृसिंहगायत्री (तच्चरणार्चनपद्धतौ)

ॐ नृसिंहाय विद्महे तीक्ष्णदंष्ट्राय धीमहि तन्नः सिंहः प्रचोदयात् ।

रामगायत्री पूर्वमुक्ता ।

अथ गोपालगायत्री ( मेरुतन्त्रे )

ॐ दामोदराय विद्महे वासुदेवाय धीमहि तन्नः कृष्णः प्रचोदयात् ।

अथ सुदर्शनगायत्री तत्रैव ।

ॐ सुदर्शनाय विद्महे महाज्वालाय धीमहि तन्नश्चक्रः प्रचोदयात् ।

अथ हयग्रीवगायत्री तत्रैव ।

ॐ वागीश्वराय विद्महे हयग्रीवाय धीमहि तन्नो हंसः प्रचोदयात् ।

अथ श्यामागायत्री (कुमारीतन्त्रे)

कालिकायै पदं चोक्त्वा विद्महे तदनन्तरम् ।
श्मशानवासिनी ङेन्ता धीमहीति ततो वदेत् ॥

तन्नो घोरे पदं प्रोच्य प्रवदेच्च प्रचोदयात् ।
अस्याः प्रसादमात्रेण महापातककोटयः ॥
सद्यः प्रलयमायान्ति साधकस्य च नान्यथा ।

तथा ।

महापातकयुक्तोऽपि प्रजपेद्दशधा यदि ।
सत्यं सत्यं महादेवि मुक्तो भवति तत्क्षणात् ॥

(भैरवतन्त्रे तु)

कामोपरात्तिणादान्तो दक्षिणा ङेयुता पुनः ।
विद्महे कूर्चबीजं च चामुण्डा ङेयुता ततः ॥
धीमहीति वदेत् तन्नः काली प्रचोदयात् ततः ।
गायत्र्येषा मया प्रोक्ता सर्वतन्त्रेषु गोपिता ॥
यां विना सकला विद्या न सिद्ध्यन्ति कदा चन—इत्युक्तम्।

अथ नक्षत्रविद्यायाः (कालिकार्णवे)

ऐँ भगवत्येकजटे विद्महे च पदं ततः ।
विकटदंष्ट्रे धीमहि तन्नस्तारे प्रचोदयात् ॥

(मालिनीतन्त्रे)

महोग्रायै च विद्महे तारायै धीमहि प्रिये ।
तन्नो देवी च शब्दान्ते धियो यो नः प्रचोदयात् ॥

(वीरचूडामणौ)

वाग्भवं च समुच्चार्य एकजटायै विद्महे ।
देवीं स्त्रीँ च समुच्चार्य नीलसरस्वत्यै धीमहि ॥
हृल्लेखां च समुच्चार्य ततस्तारे प्रचोदयात् ।

त्रिपुरसुन्दर्या (ज्ञानार्णवे)

वाग्भवं त्रिपुरादेव्यै विद्महे तदनन्तरम् ।
कामबीजं समुच्चार्य कामेश्वर्यै च धीमहि ॥

तन्नः क्लिन्ने पदं चोक्त्वा वदेत् पश्चात् प्रचोदयात् ।

भैरव्यास्तत्रैव ।

त्रिपुरां च तथा ङेन्तां विद्महे पदमुद्धरेत् ।
भैरव्यै च ततश्चोक्त्वा धीमहीति ततो वदेत् ॥
ततो देवीपदं चोक्त्वा प्रचोदयादुदीरयेत् ।
गायत्री त्रैपुरा ख्याता वाग्भवाद्यं समुद्धरेत् ॥

भुवनेश्वर्यास्तन्त्रान्तरे ।

मायाबीजं समुच्चार्य भुवनेश्वर्यै च विद्महे ।
आद्यायै पदमुच्चार्य धीमहि तदनन्तरम् ॥
तन्नो देवीपदं प्रोच्य ततो देयं प्रचोदयात् ।

अथ छिन्नमस्तायास्तत्रान्तरे ।

वैरोचन्यै विद्महे च छिन्नमस्तायै च धीमहि ।
तन्नो देवीपदं चोक्त्वा योजनीयं प्रचोदयात् ॥

अथ धूमावत्याः ।

धूमिति बीजमुच्चार्य धूमावतीति विद्महे ।
विवर्णा देवीपदतो धीमहि पदमुद्धरेत् ॥
धूमादेव्यास्तु गायत्री तन्नो घोरे प्रचोदयात् ।

अथ मातङ्ग्याः ।

ॐ शुकप्रियायै विद्महे श्रीकामेश्वर्यै धीमहि तन्नः श्यामा प्रचोदयात् ।

अथ वगलामुख्याः ।

स्थिरमायां समुच्चार्य वगलापदतो मुखी ।
विद्महे दुष्टपदतः स्तम्भनीपदमुच्चरेत् ॥
धीमहीति पदस्यान्ते तन्नो देवी प्रचोदयात् ।

अथ लक्ष्मीगायत्री ।

महालक्ष्मीपदं प्रोच्य विद्महे तदनन्तरम् ।
महाश्रियै पदं चोक्त्वा धीमहीति पदं वदेत् ॥
तन्नः शब्दाच्छ्रीपदं च ततो दद्यात् प्रचोदयात् ।

गौरीगायत्री (मेरुतन्त्रे)

ॐ सुभगायै विद्महे काममालिन्यै धीमहि तन्नो गौरी प्रचोदयात् ।

अथ गुह्यकालीगायत्री (महाकालसंहितायाम्)

क्रमेण वक्ष्ये गायत्रीं तत्तन्मन्त्रजपाय हि ।
त्रिपदा सा च विज्ञेया त्रिका त्रिपदिकाऽपि च ॥
पदद्वयं ङेन्तमादौ शेषे चैव सुवन्तकम् ।
त्रिकत्रिपादिकस्यापि विशेषं वच्मि किं चन ॥
सर्वादौ विद्महे ह्येवं मध्ये धीमहि चेत्यपि ।
सुवन्तीयपदस्यान्ते पदमेकं प्रचोदयात् ॥
तत्पूर्वं तत इत्येवमित्युद्धारो मयोदितः ।

तथा ।

रावात् कापालिनी सिद्धिः कराली तदनन्तरम् ।
शेषे गुह्या भारतीयषोडशार्णस्य वै मनोः ॥
करालिनी वधूवीजान्मुण्डमालिन्यतः परम् ।
देवी भवेत् सर्वशेषे गायत्री च्यावनी त्वियम् ॥
फेत्कारिण्युग्रचण्डा च विकटदंष्ट्रा ततः परम् ।
शेषे चण्डी च हारीतोपासिता त्रिपदा त्वियम् ॥

तथा ।

अट्टाट्टहासिनी ह्यादौ घोरदंष्ट्रा ततः परम् ।
शेषे घोरा रामचन्द्रोपासिता त्रिपदा स्मृता ॥

अथ कामकलागायत्री तत्रैव ।

ॐ अनङ्गाकुलायै विद्महे मदनातुरायै धीमहि तन्नः कामकलाकाली प्रचोदयात् ।

दुर्गागायत्री तन्त्रान्तरे ।

ॐ कात्यायन्यै विद्महे कन्याकुमारी धीमहि तन्नो दुर्गा प्रचोदयात् ।

अथ कामगायत्री (मेरुतन्त्रे)

ॐ कामदेवाय विद्महे पुष्पबाणाय धीमहि तन्नोऽनङ्गः प्रचोदयात् ।

अथ गरुडगायत्री तत्रैव ।

सर्पभीतिहरीं वक्ष्ये गायत्रीं सर्वकामदाम् ।

ॐ सुपर्णाय विद्महे पक्षिराजाय धीमहि तन्नो गरुडः प्रचोदयात् ।

अथ हनुमद्गायत्री तन्त्रान्तरे ।

हँ हनुमते विद्महे आञ्जनेयाय धीमहि तन्नो वीरः प्रचोदयात् ।

(मेरुतन्त्रे)

.... .... .... मूलमष्टोत्तरं शतम् ।
जपित्वा चार्पयेद्देवे स्तुत्वा नत्वेष्टदेवताम् ॥
सूर्यमण्डलतो देवं विन्यसेद्धृदये स्वके ।
ततो गुरुं च प्रणमेदिति सन्ध्या तु तान्त्रिकी ॥
त्रिकालमेवं कर्त्तव्या सन्ध्यालोपात् फलं न हि ।
दैवतो यदि लोपश्चेत् तदा मूलं शतं जपेत् ॥
प्रायश्चित्ताय तां कृत्वा कुर्वीत समयागताम् ।

(शैवागमेऽपि)

सन्ध्यालोपो न कर्त्तव्यः शम्भोराज्ञैवमेव हि ।

दीक्षितः सन्ध्यया हीनो न दीक्षाफलमाप्नुयात् ॥

(गौतमीये)

संक्षेपसन्ध्यामथ वा कुर्यान्मन्त्री ह्यशक्तितः ।

सायं प्रातश्च मध्याह्ने कृष्णं ध्यात्वा जपेन्मनुम् ॥

कृष्णमित्युपलक्षणं स्वेष्टदेवतां ध्यात्वेत्यर्थः ।

सन्ध्यायां पतितायां वा गायत्रीं दशधा जपेत् ।

अथ तर्पणं (मेरौ)

वैदिकं तर्पणं कृत्वा ततस्तान्त्रिकमाचरेत् ।

प्राणायामत्रयं कृत्वा मूलेन न्यासमाचरेत् ॥

ऋष्यादित्रितयस्याथ पुरतो धेनुमुद्रया ।

वँ जपन्नमृतीकृत्य जलं तत्र सचक्रकम् ॥

साङ्गं सावरणं देवं ध्यात्वा मूलं समुच्चरेत् ।

अमुकं तर्पयामीति प्रोच्य चाष्टोत्तरं शतम् ॥

तदर्धमथवा विंशदष्टयुक्तं मुखाब्जके ।

देवस्यामृतबुद्ध्या तत्तीर्थतोयैः प्रतर्पयेत् ॥

तदावरणदेवांश्च तद्वदेकैकवारकम् ।

सन्तर्प्य देवं स्वहृदि तीर्थं सूर्ये विसर्जयेत् ॥

(नन्दिकेश्वरसंहितायाम्)

यावन्न दीयते चार्घं भास्कराय निवेदनम् ।

तावन्न पूजयेद्विष्णुं शङ्करं वा सुरेश्वरि ॥

(माहेश्वरीये)

संस्मृत्य भैरवं देवं मार्त्तण्डाख्यमुमापतिम् ।

मूलेन मनुना देवि सूर्यस्य मनुनाऽथ वा ॥

मायाबीजं समुद्धृत्य सोऽहं तु विपरीतकम् ।

मार्त्तण्डभैरवं ङेन्तं प्रकाशशक्तिसंयुतम् ॥

एष तेऽर्घो ऽग्निजायेति दद्यादर्घत्रयं सुधीः ।

(मेरौ) तु पूजागृहं गत्वा सूर्यार्घदानमुक्तं यथा ।

गुरुं दिगीशांश्च खगान् नत्वा भाण्डकरं दधत् ।
जलपूर्णं व्रजेन्मौनी स्वेष्टदेवं हृदि स्मरन् ॥
एकान्तं निर्जनं यायान्मनोज्ञं दोषवर्जितम् ।
दिगन्तरं न वीक्षेत यावत् प्राप्नोति वै गृहम् ॥
प्रदक्षिणं यज्ञवाटं कृत्वा पादौ च हस्तकौ ।
प्रक्षाल्याचम्य पूजाया गृहाद्दण्डान्तरे स्थितः ॥
गृहे च द्वारदेशस्थः प्रणम्य मनसा गुरुम् ।
मणमेदिष्टदेवं स्वं दिक्पालानपि चेतसा ॥
यत् पूर्वमर्जितं पापं तद्दिनेऽन्यदिनेऽपि वा ।
तत्पापस्यापनोदार्थं मन्त्रद्वयमुदीरयेत् ॥
हे देव प्राकृतं चित्तं पापाक्रान्तमिदं मम ।
तन्निःसारय चित्तान्मे पापं फट् फट् च ते नमः ॥
सूर्यः सोमो यमः कालो महाभूतानि पञ्च च ।
एते शुभाशुभस्येह कर्मणो नव साक्षिणः ॥
हुँ फडिति ब्रुवन् क्रोधदृष्ट्या पश्येच्च पार्श्वयोः ।
एवं कृते प्रथमतः पापोत्सादनकर्मणि ॥
यत् स्याद्दृढतरं पापं तद्दूरे वाऽवतिष्ठते ।
अतीते पूजनस्थाने स्वं प्रयाति पुनश्च तत् ॥
यत् स्यादल्पतरं पापं तन्नाशमुपगच्छति ।
पूजने त्यक्तपापस्य काममिष्टं क्षणाद्भवेत् ॥
ततः प्रक्षाल्य पादौ च हस्तावाचम्य यत्नतः ।

दद्यादर्घं दिनेशाय तत्प्रकार इहोच्यते ॥
गोमयेनोपलिप्तायां भूमौ कृत्वा तु मण्डलम् ।
सिन्दूरेण ततः पश्चादुपविश्य निजासने ॥
प्राङ्मुखः प्रणमेदिष्टदेवतां भक्तितत्परः ।
प्राणायामत्रयं कृत्वा सूर्यमन्त्रेण मन्त्रवित् ॥
ह्राँ ह्रीँ स इति सूर्यस्य त्र्यक्षरो मन्त्र उच्यते ।
विन्यस्य च तथेन्द्रादीन् ध्यात्वा सूर्यमनन्यधीः ॥
पद्मद्वयाभयवरान् दधतं कराब्जै-
मर्णिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ।
रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्तजगतामधिपं भजामि ॥
तत्कल्पोक्तविधानेन पूजयेदुपचारकैः ।
पुरतो मण्डलं कृत्वा जलेन चतुरस्रकम् ॥
निधाय तत्र साधारं सजलं ताम्रपात्रकम् ।
गन्धपुष्पाक्षतान् दर्भान् दूर्वासर्षपसंयुतान् ॥
सतिलान्रक्तपुष्पाणि यवाँश्चापि प्रविन्यसेत् ।
सूर्यमन्त्रेण तत्पात्रं स्पृशन्नष्टोत्तरं शतम् ॥
अभिमन्त्र्य च तत्पात्रं समुत्थाय करद्वयात् ।
मूर्धान्तं सूर्यमन्त्रेण दद्यादर्घं विचक्षणः ॥
ह्राँ ह्रीँ सः सग्रहराशिनक्षत्रपदमुच्चरेत् ।
ततश्च योगकरणपरिवृत्तासनेति च ॥
संस्थित श्रीसूर्यायैष तेऽर्घः स्वाहा मनुः स्मृतः ।
चतुस्त्रिंशदक्षरोऽयं सूर्यस्यार्घनिवेदने ॥

जपेत् ततो यथाशक्त्या सर्वमन्त्रमनन्यधीः ।
तदर्घाम्बुप्लुतं सूर्यं ध्यायेद्देशिकसत्तमः ॥
स्तुत्वा प्रणाम्य विसृजेन्मण्डलान्तं दिवाकरम् ।
तत उत्थाय विधिवद्द्वारपूजां समारभेत् ॥

द्वारपूजाविधिस्तु दीक्षातरङ्गे उक्तः ।

अथ नित्यपूजाविधिः ।

( क्रियासंग्रहे )

नित्यपूजामथो वक्ष्ये संक्षेपेण यथोदिताम् ।
पूजास्थानं समागम्य कुर्यादाचमनत्रयम् ॥
उपविश्यासने मन्त्री कुर्यात् संकल्पमादरात् ।

संकल्पस्तु—

अमुकदेवताप्रीतये तन्नित्यार्चनमहं करिष्ये—इत्येवंरूपः ।

तथा ।

दद्यादर्घं दिनेशाय साक्षिणे सर्वकर्मणः ।
गुरुं गणपतिं नत्वा प्रणमेदिष्टदेवताम् ॥
तालत्रयं पुरस्कृत्य बध्नीयाच्च दिशो दश ।
भूतशुद्ध्यादिकं कृत्वा प्राणायामं समाचरेत् ॥
कुर्याच्च मातृकान्यासं मूलन्यासं तथैव च ।
हृदये देवतां ध्यात्वा मानसैरुपचारकैः ॥
पूजयेद्देवतारूपमात्मानं मन्त्रवित्तमः ।
वाह्यस्थैरुपचारैश्च यजेन्नैवेद्यवर्जितैः ॥
ततः कल्पोदिता मुद्रा दर्शयित्वा विधानवित् ।
अर्घादिकं च संस्थाप्य पूजाद्रव्याणि शोधयेत् ॥
यथोक्तां देवतां ध्यात्वाऽऽवाहयेन्मूलमन्त्रतः ।

(मेरुतन्त्रे)

संस्थापनं सन्निधानं सन्निरोधं ततश्चरेत् ।
संमुखीकरणं चापि सकलीकरणं ततः ॥
ततोऽवगुण्ठनं कार्यममृतीकरणं ततः ।
परमीकरणं कुर्यात् क्रमतः स्वस्वमुद्रया ॥

(क्रियासंग्रहे)

आवाहनादिका मुद्राः प्रदर्श्य स्थापयेदसून् ।
कल्पयेदुपचाराँश्च यथासंभवमादरात् ॥
संपूज्य मूलमन्त्रेण प्रसूनाञ्जलिभिस्त्रिभिः ।
पूजयेद्विधिवन्मन्त्री यथोक्तावृतिदेवताः ॥
साङ्गां सवाहनां सालङ्करणां च समुद्रिकाम् ।
सायुधां सपरीवारां देवतामर्चयेत् ततः ॥
ततो जपेन्मूलमन्त्रमष्टोत्तरशतं सुधीः ।
तं जपं भक्तितो मन्त्री देवतायै निवेदयेत् ॥
स्तुत्वा च विविधैः स्तोत्रैः साष्टाङ्गं प्रणमेद्भुवि ।
ततो वरान् प्रार्थयित्वा देवमुद्वासयेद्धृदि ॥
निर्माल्यं शिरसि धार्यं देवतोच्छिष्टभोजिने ।
दत्वा भुञ्जीत नैवेद्यमेतन्नित्यार्चनं स्मृतम् ॥

पूजायाः क्रममात्रमिदं दर्शितम् । अत्र यद्यत् कर्त्तव्यमुक्तं तत्तत् सर्वं दीक्षातरङ्गे द्रष्टव्यम् ।

## अथ नित्यहोमविधिः ।

तदुक्तं (सोमभुजगावल्याम्)

नाजप्तः सिद्ध्यते मन्त्रो नाहुतश्च फलप्रदः ।
नानिष्टो यच्छते कामान् तस्मात् त्रितयमाचरेत् ।

पूजया लभते पूजां जपात् सिद्धिर्न संशयः ॥
विभूतिं चाग्निकार्येण सर्वासिद्धिं च विन्दति ।

( ज्ञानार्णवे )

संकल्प्य परमेशानि नित्यहोमविधिं चरेत् ।

संकल्पस्तु—

अमुकदेवताप्रीतये एतावदाहुतीर्होष्यामि—इत्येवंरूपः ।

( नीलतन्त्रे )

नित्यहोमं प्रवक्ष्यामि सर्वार्थं येन विन्दति ।
सपर्यां सम्यगापाद्य वलिं पूर्ववदाचरेत् ॥
ततो जपं तर्पणं च स्मरेत् साधकसत्तमः ।
वलिं वैश्वादिकं चैव ब्राह्मणः समुपाचरेत् ॥
विधिवदग्निमादाय क्रव्यादेभ्यो नमस्तथा ।
मूलमन्त्रं समुच्चार्य कुण्डे वा स्थण्डिलेऽपि वा ॥
भूमौ वा संस्तरेद्वह्निं व्याहृतित्रितयेन तु ।
स्वाहान्तेन त्रिधा हुत्वा षडङ्गहवनं ततः ॥
ततो देवीं समावाह्य मूलेन षोडशाहुतिम् ।
हुत्वा स्तुत्वा नमस्कृत्य विसृजेदिन्दुमण्डले ॥

(सारसंग्रहे)

इत्थं तु संहृते वह्नौ देवमावाह्य मन्त्रवित् ।
संपूज्य मूलमनुना पञ्चविंशतिमाहुतिम् ॥
हुनेदाज्येन हविषा तिलैर्वा पायसैः शुभैः ।
तण्डुलैस्तिलसंमिश्रैः केवलैर्वाऽथ पुष्पकैः ॥
अङ्गावरणदेवानामेकैकामाहुतिं हुनेत् ।
उद्वास्य देवं वह्निं च पूजास्थानं व्रजेत् ततः ॥

अयं होमो नैवेद्यदानान्तरं पूजासमाप्त्यनन्तरं वा कार्यः ।

तदुक्तं (माहेश्वरीये)

निवेदयित्वा नैवेद्यं वैश्वदेवं समाचरेत् ।
अर्चायां वा समाप्तायां होमं कुर्याद्विधानतः ॥
नित्ये नैमित्तिके काम्ये चैतदग्निमुखं स्मृतम्—इति ।

(अगस्त्यसंहितायाम्)

पूर्ववत् संस्कृते वह्नौ देवमावाह्य मन्त्रवित् ।

इति (मेरुतन्त्रे) चोक्तत्वादत्र वह्निसंस्कारः कर्त्तव्य एवेति श्रीविद्यापद्धतिकृतः ।

अग्न्याधानादिकं कर्म नित्यहोमे न विद्यते ।

इति (वसिष्ठसंहिताया) वचनेन निषेधान्नित्यहोमे एवाग्निसंस्कारो नास्तीत्यन्ये । विधिनिषेधयोः श्रवणादैच्छिको विकल्पो यथा षोडशपञ्चविंशाहुत्योर्विकल्प इति के चित् ।

सुधार्णवकृतस्तु-(नीलतन्त्रोक्त) एवात्र वह्नेः संस्कारः कर्त्तव्यो नाधिको विशेषवचनेन निषेधादित्याहुः ।

इति नित्यहोमाविधिः ।

कुम्भसंभवः ।

ततः संकल्प्य कुर्वीत पुरश्चरणमादरात् ।

( मेरुतन्त्रे )

प्रारभेत पुरश्चर्यां दीक्षोक्तदिवसे शुभे ।
प्रणम्यादौ गुरून् विप्रान् गणेशं परिपूज्य च ॥
पुण्याहवाचनं कृत्वा कुशहस्तो वदेदिति ।
सूर्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा ॥
पवनो दिक्पतिर्भूमिराकाशं खेचरामराः ।
ब्राह्मयशासनमाधाय कल्पन्तामिह सन्निधिम् ॥
वदित्वेत्थं ताम्रपात्रे कृत्वा कुशतिलाक्षतान् ।
उदङ्मुखस्तु संकल्पं कुर्यात् संवत्सरादिकान् ॥

कामनान्तानुच्चरेत् तु त्रयोविंशतिसंख्यकान् ।
संवत्सरायने मासपक्षपञ्चाङ्गमेव च ॥
नवग्रहस्थितिं घस्रभागं मौहूर्त्तिकं त्विति ।
स्वदेशभेदाँस्तत्तुल्यान् कामनासहितान् वदेत् ॥
द्वीपेऽमुकेऽमुके खण्डेऽमुके वर्षे च नीवृति ।
अमुके चामुके क्षेत्रे गोत्रप्रवरमुच्चरेत् ॥
स्वनामजातिनामान्तं द्विजाच्छर्म च वर्म च ।
गुप्तो दासोऽथामुकस्य मन्त्रस्य सिद्धिकामुकः ॥
करिष्येऽहं पुरश्चर्यामेतत्संख्यजपात्मिकाम् ।
अद्यारभ्य दिनैरेतैरसति प्रतिबन्धके ॥
करिष्ये इति संकल्पं मनसैव प्रकल्पयेत् ।
वदेद्वाचाऽभिलाषं च कर्मणा चोपपादयेत् ॥

(सनत्कुमारसंहितायाम)

प्रणवं तत्सदद्येति मासपक्षतिथीरपि ।
अमुकगोत्रोऽमुकोऽहं मूलमुच्चार्य तत्परम् ॥
सिद्धिकामोऽस्य मन्त्रस्य इयत्संख्याजपं ततः ।
दशांशं हवनं होमाद्दशांशं तर्पणं ततः ॥
दशांशं मार्जनं तस्माद्दशांशं विप्रभोजनम् ।
पुरश्चरणमेवं हि करिष्ये प्रागुदङ्मुखः ।

(नारदपञ्चरात्रे)

संपूज्याथ जपं कुर्याद्यावद्वै प्रहरद्वयम् ।

(तन्त्रदीपे)

विधाय विधिवद्विद्वान् मण्डपं सुमनोहरम् ।
तस्मिन् कलशमारोप्य तीर्थतोयैः प्रपूजयेत् ॥

निःक्षिप्य नवरत्नानि तत्र गन्धाष्टकं पुनः ।
आवाह्य पूजयेत् तत्र देवमावरणैः सह ॥
कलशाग्रे जपेन्मन्त्री यावत् संख्या न पूर्यते ।
ततः पूर्णे समागत्य गुरुर्देवो विधानतः ॥
अभिषिञ्चेच्छिष्यमूर्ध्नि कलशोदकवारिभिः ।
ततः शिष्यः प्रयत्नेन धनाद्यैस्तोषयेद्गुरुम् ॥

दीक्षोक्तक्रमेण कलशं संस्थाप्य तत्र देवतामावाह्य यथाशक्ति संपूज्य जपं कुर्यादित्यर्थः ।

(पुरश्चरणचन्द्रिकायाम्)

एतान्यन्यानि पूजायां साधनानि बहून्यपि ।
उत्तमानि च मध्यानि न्यूनानि त्रिविधानि च ॥
स्वस्थः समर्थः कुर्वीत उत्तमैरेव साधनैः ।
मध्यमो मध्यमैरेव न्यूनो न्यूनैस्तु साधनैः ॥
आपन्नश्चेत् समर्थोऽपि न्यूनैरेव समाचरेत् ।
पूजाकर्मविशेषेण देशकालानुसारतः ॥
यथाशक्ति यथान्यायं यथालोकावगर्हितम् ।
पूजां विस्तरतः कर्त्तुं यो न शक्नोति साधकः ॥
यदि वाह्येन्द्रवज्राद्यैः पूजयेदिष्टदेवताम् ।
अथ वा देवतामन्त्रं ध्यात्वा सम्यक् प्रपूजयेत् ॥
अथ वा मानसीं कुर्यादात्मपूजामथापि वा ।
अथ वा केवलां पूजां वाह्यां कुर्याद्विचक्षणः ॥

तथा ।

पूर्वपूर्वस्य चाशक्त्या उत्तरोत्तरमाचरेत् ।
यद्येतदन्यथा कुर्यात् तदाऽनिष्टफलं स्मृतम् ॥

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तयेत् ।
न सांपरायिकं तस्य दुर्मतेर्जायते फलम् ॥
इति विज्ञाय सामर्थ्यमेकं पन्थानमाचरेत् ।

कलशस्थापनाशक्तस्तु यन्त्रादौ पूजां कुर्यात् ।
तदुक्तं (सिद्धान्तसारे)

कलशस्थापनाशक्तो यन्त्रादौ पूजनं चरेत् ।

आदिशब्देन प्रतिमाशिवलिङ्गशालग्रामादयः संगृह्यन्ते ।
तदुक्तं (मेरुतन्त्रे)

गणेशसूर्यविष्णवीशदेवीनां पूजनं क्रमात् ।
दशस्थानानि देवानां पूजार्थं कल्पितानि च ॥
शिवलिङ्गे मणौ यन्त्रे शालग्रामे घटे रवौ ।
स्थण्डिलेऽग्नौ मूर्ध्नि हृदि स्थानेष्वेतेषु पूजयेत् ॥
भूमावेव कृता पूजा पुत्रायुर्धननाशिनी ।

तत्रैव ।

ततः प्रणम्य च गुरुं पूजाचक्रं समुद्धरेत् ।
सुवर्णरचिते पीठे भूपाला वशवर्त्तिनः ॥
रजतेन कृतं यन्त्रमायुरारोग्यकामदम् ।
ताम्रेण रचितं यन्त्रं सर्वैश्वर्यप्रदं मतम् ॥
यन्त्रं तु स्फाटिकं स्वच्छं मनोभिलषितप्रदम् ।
माणिक्यरचितं यन्त्रं राज्यदं भुक्तिमुक्तिदम् ॥
कृतं मरकतैर्यन्त्रं सर्वशत्रुविनाशनम् ।
लोहत्रयोद्भवं यन्त्रं सर्वशक्तिकरं मतम् ॥
श्रीखण्डं शान्तिदं ज्ञेयं पुष्टिदं रक्तचन्दनम् ।
श्रीपर्णीपीठमुद्दिष्टं पूजार्थं धनराज्यदम् ॥
वैद्रमे बहुला संपद्भूर्यपत्रे चतुष्पदाः ।

गण्डकीभवपाषाणे भुक्तिर्मुक्तिरदूरतः ॥
भूमौ सिन्दूररजसा रचितं सर्वकामदम् ।
सीसकांस्यादिषु कृते सम्पत्तिं सन्ततिं हरेत् ॥
फलकायां पटे भित्तौ स्थापयेन्न कदाचन ।
स्थापितं यदि मोहेन नाशयेत् तद्धनं कुलम् ॥
अर्ध्यङ्गुलसुविस्तारं प्राक्प्रत्यग्दक्षिणोत्तरम् ।
पलप्रमाणं कर्त्तव्यमर्चापीठं मनोहरम् ॥
यवार्धोच्चं प्रकुर्वीत चतुरस्रं समन्ततः ।
तस्मिन् पीठे तु निर्माणं पूजाचक्रस्य कारयेत् ॥

(रत्नसागरे)

अर्ध्यङ्गुलेन स्वर्णस्य रजतस्य तथैव च ।
ताम्रस्य पूर्णसंख्यैव माणिक्यादौ यथेच्छया ॥

(मेरुतन्त्रे)

माणिक्यादिकपीठे तु मानन्यूनं न दोषकृत् ।
श्रीपर्णीचन्दनादीनामधिकं चेन्न दोषकृत् ॥

एतद्भिन्ने तु (रुद्रयामले) ।

एकतोलं द्वितोलं वा त्रितोलं वेदतोलकम् ।
स्वेच्छातोलं नरः कृत्वा प्रत्यवायं समश्नुते ॥

स्वेच्छातोलमिति । तोलकचतुष्टयपरिमितेन स्वर्णादिना यन्त्रस्य निर्माणासंभवे स्वेच्छया तदधिकं न कुर्यादित्यर्थः ।

प्रसङ्गात् स्थिररेखयन्त्रप्रतिष्ठाविधिमाह (मेरौ)

लग्ने शुभग्रहोपेतेऽनुकूलगुणशालिनि ।
प्रतिष्ठां कारयेदेषां स्वर्क्षतिथ्यादिके क्षणे ॥

तथा ।

आदौ वेदोदितैर्मन्त्रैर्विप्रोऽग्न्युत्तारणं चरेत् ।

धातुनिर्मितयन्त्राणां मूर्त्तीनां च विशेषतः ॥
अग्निः सप्तिं वाजमिति सप्तर्चा सप्तिरुच्यते ।
मुनिस्त्रिष्टुप् छन्द उक्तं देवताऽग्निः प्रकीर्त्तितः ॥
अग्निशब्देन रहितं सूक्तमेतच्छतं पठेत् ।
अभिषिञ्चेच्छुद्धतोयैस्ततः संपूर्णसूक्तकैः ॥
अभिषिञ्चेच्छतावृत्त्याऽग्न्युत्तारणमिदं स्मृतम् ।

तथा ।

क्षौद्राज्यदुग्धैः प्रथमं नारिकेलाम्भसा ततः ।
अभिषिञ्च्याथ तोयेन कथितेनाक्तरौषधैः ॥
आवाह्याभ्यर्च्य तल्लग्ने चक्रं संस्थाप्य पूजयेत् ।
गन्धपुष्पैर्नवैर्धूपैर्दीपैर्नैवेद्यतर्पणैः ॥
त्रिरात्रं पूजयेद्देवीं त्रिसन्ध्यं च यथाविधि ।

(वामकेश्वरतन्त्रे)

भैरव्युवाच ।

चक्रभेदं महादेव त्वत्प्रसादान्मया श्रुतम् ।
इदानीं श्रोतुमिच्छामि प्रतिष्ठाकर्मनिर्णयम् ॥

श्रीशङ्कर उवाच ।

शृणु देवि महाभागे जगत्कारिणि कौलिनि ।
यन्त्रप्रतिष्ठाकर्माङ्गसर्ववर्णविनिर्णयम् ॥
स्नात्वा संकल्पयेन्मन्त्री गुरोरर्चनमाचरेत् ।
पञ्चगव्यं ततः कुर्याच्छिवमन्त्रेण मन्त्रितम् ॥
तत्र चक्रं क्षिपेन्मन्त्री प्रणवेन समाकुलम् ।
तदुद्धृत्य ततश्चक्रं स्थापयेत् स्वर्णपीठके ॥
स्पृष्ट्वा यन्त्रं कुशाग्रेण गायत्र्या चाभिमन्त्रयेत् ।

अष्टोत्तरशतं देवि देवताभावसिद्धये ॥
आत्मशुद्धिं ततः कृत्वा षडङ्गैर्देवतां यजेत् ।
तत्रावाह्य महादेवीं जीवन्यासं च कारयेत् ॥
उपचारैः षोडशभिर्महामुद्रादिभिस्तथा ।
फलैर्नैवेद्यताम्बूलैर्देवीं तत्र समर्चयेत् ॥
पट्टसूत्रादिकं दद्याद्वस्त्रालङ्करणादिभिः ।
मुकुरं चामरं घण्टां यथायोग्यं महेश्वरि ॥
सर्वमेतत् प्रयत्नेन दद्यादात्महिते रतः ।
ततो जपेत् सहस्रं च सकलेप्सितसिद्धये ॥
वल्ल्यादिकं प्रदत्वा च प्रणमेच्चक्रराजकम् ।
अष्टोत्तरशतं हुत्वा संपाताज्यं विनिःक्षिपेत् ॥
अष्टोत्तरशतं हुत्वा साज्यधान्यतिलेन च ।
मूलमन्त्रं समुच्चार्य मन्त्री यन्त्राङ्गमाचरेत् ॥
होमकर्मण्यशक्तश्चेद्द्विगुणं जपमाचरेत् ।
धेनुमेकां समानीय स्वर्णश्रृङ्गाद्यलङ्कृताम् ॥
गुरवे दक्षिणां दद्यात् ततो देव्या विसर्जनम् ।

शिवमन्त्रः प्रसादः ।
(सिद्धान्तसंग्रहे)

पञ्चगव्येन संशोध्य स्नाप्य पञ्चामृतैः पृथक् ।
अष्टाभिस्तीर्थकलशैः स्नापयेन्मूलमन्त्रतः ॥
ततोऽभिमन्त्रयेद्यन्त्रं गायत्र्या वक्ष्यमाणया ।
अष्टोत्तरशतं मन्त्री मूलेनापि तथैव च ॥
यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रं प्रचोदयात् ।

ततो देवं समावाह्य प्राणान् संस्थाप्य मन्त्रवित् ।
उपचारैः षोडशभिः पूजयेदिष्टदेवताम् ॥
अष्टोत्तरसहस्रं च संस्कृते हव्यवाहने ।
घृतेन जुहुयात् तत्र संपाताज्यं विनिःक्षिपेत् ॥
ब्राह्मणान् भोजयेत् पश्चात् साधको देवताधिया ।
एवंसंसाधिते यन्त्रे देवः सन्निहितो भवेत् ॥

(मेरुतन्त्रे) ।

आवाह्याऽभ्यर्च्य तल्लग्ने चक्रं संस्थाप्य पूजयेत् ।
गन्धपुष्पैर्नवैधूपैर्दीपैर्नैवेद्यदर्पणैः ॥
त्रिरात्रं पूजयेद्देवीं त्रिसन्ध्यं च तथा निशि ।

वामाचारे कुलाचारे च यो विशेषस्तमाह ।

मकारैः पञ्चभिर्युक्तं चरेयुर्वामिनोऽर्चनम् ।
निशायां शक्तिपूजां च दूतीयागं च कौलिकाः ॥
एवं दिनत्रयं कृत्वा ततो नित्यक्रमं भजेत् ।
एवं देवीप्रतिष्ठायां क्रमः सान्निध्यकारकः ॥
स्त्रीशूद्राणां वामिनां च कौलिकानामयं विधिः ।

तथा ।

महापापं न कुर्वन्ति पशुवद्वेदमार्गगाः ।
अग्निः शुचिव्रततमः शुचिर्विप्रः शुचीरितम् ॥
अज्ञानतश्च लघुभिः सन्ध्यावन्दननाशितैः ।
पातकैस्तैर्न लिप्यन्ते तस्मात् ते पशवः स्मृताः ॥
वामेनोपासितं यन्त्रं तेषां दृष्टिपथे गतम् ।
तद्देवताक्षोभकरं विक्षिप्तः साधको भवेत् ॥
दक्षिणोपासितं यन्त्रं सूर्याग्निसमतेजसम् ।

पापिनां दृष्टिदहनमुलूकानां यथा रविः ॥
यथा नृभिर्दिनकरोदये सर्वं निरीक्ष्यते ।
दृढसंस्थापितं यन्त्रं तथा पुण्यात्मनां मतम् ॥
सान्निध्यं सर्वदेवानामवश्यं मन्त्रतो भवेत् ।
मन्त्रस्तु बीजवत् प्रोक्तः प्रतिमाद्यं शरीरवत् ॥
सिद्धायामपि सामग्र्यां विना मन्त्रं फलं न हि ।

तथा ।

दशाङ्गुलप्रमाणा वा तिथ्यङ्गुलमिताऽपि वा ।
अभ्यर्च्य प्रतिमां विष्णोर्गृहेषु गृहमेधिभिः ॥
पञ्चसूत्रसमायुक्तं शिवलिङ्गं समर्चयेत् ।
गृहस्थानां भुक्तिमुक्तिधनारोग्यप्रदं तु तत् ॥
लिङ्गमस्तकविस्तारो यावांस्तावच्च दीर्घता ।
लिङ्गस्य लिङ्गनालक्या जलहर्यास्तथैव च ॥
लिङ्गपीठस्य पञ्चानां समता पञ्चसूत्रिका ।

तत्रैव ।

एकपीठे पृथक् पूजां विना यन्त्रं करोति यः ।
तन्त्रेण पूजयेद्यन्त्रं स दैवं शापमाप्नुयात् ॥
आवाह्य देवतामेकामर्चयेच्चान्यदेवताम् ।
अन्ययन्त्रेण पूजां वा देवता शापकारिणी ॥
पूजनं बहुमूर्त्तीनामेकपीठे भवेद्यदि ।
पृथक् चन्दनपुष्पाणि धूपदीपादि तन्त्रतः ॥

तन्त्रमपार्थक्यम् ।

खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते ।
व्यङ्गेऽनर्हपशुस्पृष्टे पतिते दुष्टभूमिषु ॥

अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते ।
दशस्वेतेषु नो कुर्युः सन्निधानं दिवौकसः ॥

तत्रैव ।

देवस्य मन्त्ररूपस्य यन्त्रव्याप्तिमजानताम् ।
कृतार्चनादिकं सर्वं व्यर्थं भवति शाम्भवि ॥

यन्त्रपदार्थ उक्तस्तत्रैव ।

कामक्रोधादिदोषोत्थसर्वदोषनियन्त्रणात् ।
यन्त्रमित्याहुरेतस्मिन् देवस्तुष्यति पूजितः ॥

(पुरश्चरणचन्द्रिकायाम्)

तत्तत्कल्पोक्तद्रव्येण विलिखेद्यन्त्रमुत्तमम् ।
सौवर्णे राजते ताम्रे पीठे भूर्जे परे भुवि ॥
विना यन्त्रेण चेत् पूजा देवता न प्रसीदति ।

यन्त्रलिखनद्रव्यमुक्तम् (मेरुतन्त्रे)

पूजायन्त्रं दक्षमार्गे तत्तद्गन्धाष्टकेन च ।
लिखेद्वा केशरहिमरोचनाभिः समालिखेत् ॥
वाममार्गे लिखेदाद्यपुष्पेण यदि यन्त्रकम् ।
षण्मासं पूजनात् तत्र त्वरितं सिद्धिमाप्नुयात् ॥
तदभावे तु रुधिरं महिषस्य प्रशस्यते ।
तदभावे तु कुसुमं ग्राह्यं चैवापराजिताम् ॥
तस्योर्ध्वभागे निःक्षिप्य घर्षितं रक्तचन्दनम् ।

( स्वतन्त्रतन्त्रे )

स्वर्णे वा राजते ताम्रे पाषाणे चाष्टधातुषु ।
स्वयम्भूकुसुमं कुण्डगोलोत्थरोचनागुरुः ॥
काश्मीरं मृगनाभिश्च कुलं च मलयोद्भवम् ।
एष गन्धः समाख्यातः सर्वदा चण्डिकाप्रियः ॥

एतेन गन्धयोगेन योनिचक्रं समालिखेत् ।

वीरपरमिदम् ।

(रुद्रयामले)

ततः कुङ्कुमसिन्दूरैः कार्यं यन्त्रं तु योगिना ।
सौवर्णे राजते ताम्रे स्फाटिके वैद्रुमे तथा ॥
चक्रे यथोक्तविधिना पूज्या देवी नरोत्तमैः ।

(सारसंग्रहे)

ताम्रे द्वादशकं वर्षं स्फाटिकादौ तु सर्वदा ।
तेषां मध्ये स्फाटिकं तु सर्वसिद्धिप्रदं भवेत् ॥
यावज्जीवं सुवर्णे स्याद्रौप्यं द्वाविंशतिः प्रिये ।
ताम्रे द्वादशकं वर्षं तदर्धं भूर्जपत्रके ॥

इदं च स्थिररेखारूपयन्त्रपरम् ।

(रुद्रयामलेऽपि)

ताम्रे लक्षगुणं प्रोक्तं रौप्ये कोटिगुणं भवेत् ।
सौवर्णेऽनन्तफलदं मण्यादौ किं वदामि ते ॥
विद्रुमे रचिते यन्त्रे पद्मरागेऽथ वा प्रिये ।
इन्द्रनीलेऽथ वैदूर्ये स्फाटिके मरकते तथा ॥
धनं पुत्रं तथा दारान् यशांसि लभते ध्रुवम् ।

(गौरीयामले)

चातुर्विध्यं हि चक्रस्य प्रस्ताराश्च भवन्ति हि ।
भूकूर्मपद्मप्रस्तारा मेरुश्चापि तथाविधः ॥
निम्नरेखासमायोगो भूप्रस्तारो मयोदितः ।
कूर्मपद्मकप्रस्तार ऊर्ध्वरेखं मयोदितम् ॥

(सौत्रामणीतन्त्रे)

ऋजुलेखे भवेल्लक्ष्मीर्वक्ररेखे दरिद्रता ।

(कुलार्णवे)

आदिरूपाच्च विम्बस्य पूजायां च विशेषतः ।
साधकस्य च विश्वासाद्देवतासन्निधिर्भवेत् ॥

(यामले)

एवं यन्त्रं विनिर्माय तत्र देवीं प्रपूजयेत् ।

देवीमित्युपलक्षणम् । स्वेष्टदेवतामित्यर्थः ।
पूजाप्रकारस्तु दीक्षातरङ्गे एवोक्तः ।

(कुलार्णवे)

मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः ।
न सिद्ध्यति वरारोहे कल्पकोटिशतैरपि ॥
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ॥
लुप्तबीजाश्च ये मन्त्रा न दास्यन्ति फलं प्रिये ।
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥
चैतन्यरहिता मन्त्राः प्रोक्ता नैव फलप्रदाः ।
सूतकद्वयसंयुक्ता न च मन्त्राः फलप्रदाः ॥

मन्त्रार्थो गुरुमुखाद्बोध्यः ।
मन्त्रचैतन्यं वक्ष्यते । योनिमुद्रा द्वितीयतरङ्गे उक्ता । सूतकादिज्ञानप्रकारस्तत्रैव ।

जातसूतकमादौ स्यादन्ते च मृतसूतकम् ।
सूतकद्वयसंयुक्तो यो मन्त्रः स न सिद्ध्यति ॥
गुरुकुण्डलिनीध्यानं विवाहः परिकीर्त्तितः ।
द्विरागमो भवेत् स्नानं संयोगः सन्ध्यया भवेत् ॥
अर्घदानं भवेद्गर्भो गायत्री त्वष्टमासिकम् ।
भूतशुद्ध्यादिप्राणान्तं तत्रावयवकल्पनम् ॥
देही भवेन्मातृकायाः प्राणायामस्तु संस्क्रिया ।

ध्यानोच्चारे महेशानि बालकोत्पत्तिरीरिता ॥
मन्त्रोच्चारणतो देवि जातसूतकमीरितम् ।
जातसूतकदोषस्य शमनार्थं महेश्वरि ॥
दशविंशति पञ्चाशद्यथाशक्त्या जपेच्छिवे ।
इदमादौ समादिष्टं मृतिं संशृणु सादरम् ॥
अङ्गज्ञानं च तादात्म्यं तदनन्तरमीरितम् ।
विसर्जनं महेशानि मृतसूतकमीरितम् ॥
मृतसूतकशान्त्यर्थं दशविंशति वा जपेत् ।
तेन तस्य निवृत्तिर्हि भवत्येव न संशयः ॥

यद्वा ।

ब्रह्मबीजं मनोर्दत्वा आद्यन्ते परमेश्वरि ।
सप्तवारं जपेन्मन्त्रं सूतकद्वयमुक्तये ॥

ब्रह्मबीजं प्रणवः ।

अथ मन्त्राणां स्वापप्रबोधकालौ (पञ्चरात्रे)

स्वापकाले तु मन्त्रस्य जपो न च फलप्रदः ।
स्वापकालो वामवहो जागरो दक्षिणावहः ॥
आग्नेयस्य मनोः सौम्यमन्त्रस्यैतद्विपर्ययः ।
प्रबोधकालं जानीयादुभयोरुभयोरपि ॥
ज्ञेया मन्त्रास्तु आग्नेया विद्याः सौम्याः प्रकीर्त्तिताः ।

मन्त्रविद्ययोर्भेदस्तु प्रथमतरङ्गे उक्तः ।

अथ मन्त्रशिखाज्ञानं तन्त्रान्तरे ।

शृणु देवि परं तत्त्वं सर्वज्ञानोत्तमोत्तमम् ।
येन विज्ञातमात्रेण क्षिप्रं विद्या प्रसीदति ॥
मूलकुण्डे तु या शक्तिर्भुजङ्गाकाररूपिणी ।

तद्भ्रमावर्त्तवातोऽयं प्राण इत्यभिधीयते ॥
तं त्यक्त्वाऽव्यक्तमधुरं कूजन्ती सहसोत्थिता ।
गच्छन्ती ब्रह्मरन्ध्रेण प्रविशन्ती पुनस्तनुम् ॥
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ।
तेन मन्त्रशिखा जाता सर्वमन्त्रप्रदीपिनी ॥
तमःपूर्णे गृहे यद्वन्न किञ्चित् प्रतिभासते ।
शिखाहीनास्तथा मन्त्रा न सिद्ध्यन्ति कदा चन ॥
शिखोपदेशः सर्वत्र गोपितः परमेश्वरि ।
विना येन न सिद्धिः स्याद्वर्षकोटिशतैरपि ॥
तस्माद्यत्नेन कर्त्तव्यं शिखाया भावनं मनोः ।

अथ मन्त्रचैतन्यं तत्रैव ।

मन्त्ररूपी भवेद्देवो देवरूपी गुरुर्भवेत् ।
गुरुरूपी भवेदात्मा आत्मरूपी मनुर्भवेत् ॥
इति ते कथितं देवि मन्त्रचैतन्यमुत्तमम् ।
यस्य विज्ञानमात्रेण अद्वैतं ज्ञानमुत्तमम् ॥

अथ कुल्लुका (यामले) ।

श्रीदेव्युवाच ।
अथ वै कुल्लुकोत्पत्तिं कथयस्व ममाधुना ।
कुल्लुका कीदृशी नाथ सेतुर्वा देव कीदृशः ॥
कीदृशो वा महासेतुर्निर्वाणं त्वथ कीदृशम् ।
अन्यद्वा कथितं यन्मे कीदृशं तद्वद प्रभो ॥
श्रीशिव उवाच ।
रहस्यमपि ते देवि कथ्यते शृणु साम्प्रतम् ।

विना येन महेशानि निष्फलं तु जपादिकम् ॥
कुल्लुका च तथा सेतुर्महासेतुस्तथैव च ।
निर्वाणं कुण्डलीषष्ठीसर्वोत्पत्तिं शृणु प्रिये ॥
विद्यानां कुलपूज्यत्वात् कुल्लुका तेन कीर्त्तिता ।
विद्यासम्बन्धिदोषाणां भक्षयन्ती यतः शिवे ॥
तेनेयं कुल्लुकानाम्नी सर्वतन्त्रेषु गोपिता ।
विद्यासिद्ध्यर्णवे देवि येन पारं प्रगच्छति ॥
तेन सेतुर्महेशानि विद्यामार्गः प्रकीर्त्तितः ।
महाविद्याप्तिसंदर्शो महासेतुर्महेश्वरि ॥
महाविद्यार्णवस्याथ चैतन्यस्य प्रदर्शकः ।
महासेतुर्महादेवि महाविद्यास्वरूपधृक् ॥
देवतायास्तु निर्वाणं चैतन्यं यच्च कीर्त्तितम् ।
निर्वाणं कथितं भद्रे विद्यावाङ्मातृकार्णकैः ॥
निर्वाणं परमेशानि चतुश्चरणरूपधृक् ।
निर्वाणं च महेशानि परब्रह्मात्मिका मता ॥
चतुर्थं कथितं भद्रे विद्याचरणमीरितम् ।
पञ्चमी कुण्डली देवी यथावदवधारय ॥
मूलाधारादाविलान्तं विसतन्तुतनीयसीम् ।
सर्वदेवस्वरूपां च सर्ववर्णप्रदीपिनीम् ॥
महाकुण्डलिनीं देवीं समलीं कुण्डलीं पराम् ।

श्रीदेव्युवाच ।

क्रमेण दशविद्यायाः कुल्लुकाया विधिं वद ।

ततो देवं समावाह्य प्राणान् संस्थाप्य मन्त्रवित् ।
उपचारैः षोडशभिः पूजयेदिष्टदेवताम् ॥
अष्टोत्तरसहस्रं च संस्कृते हव्यवाहने ।
घृतेन जुहुयात् तत्र संपाताज्यं विनिःक्षिपेत् ॥
ब्राह्मणान् भोजयेत् पश्चात् साधको देवताधिया ।
एवंसंसाधिते यन्त्रे देवः सन्निहितो भवेत् ॥

(मेरुतन्त्रे) ।

आवाह्याभ्यर्च्य तल्लग्ने चक्रं संस्थाप्य पूजयेत् ।
गन्धपुष्पैर्नवैर्धूपैर्दीपैर्नैवेद्यदर्पणैः ॥
त्रिरात्रं पूजयेद्देवीं त्रिसन्ध्यं च तथा निशि ।

वामाचारे कुलाचारे च यो विशेषस्तमाह ।

मकारैः पञ्चभिर्युक्तं चरेयुर्वामिनोऽर्चनम् ।
निशायां शक्तिपूजां च दूतीयागं च कौलिकाः ॥
एवं दिनत्रयं कृत्वा ततो नित्यक्रमं भजेत् ।
एवं देवीप्रतिष्ठायां क्रमः सान्निध्यकारकः ॥
स्त्रीशूद्राणां वामिनां च कौलिकानामयं विधिः ।

तथा ।

महापापं न कुर्वन्ति पशुवद्वेदमार्गगाः ।
अग्निः शुचिव्रततमः शुचिर्विप्रः शुचीरितम् ॥
अज्ञानतश्च लघुभिः सन्ध्यावन्दननाशितैः ।
पातकैस्तैर्न लिप्यन्ते तस्मात् ते पशवः स्मृताः ॥
वामेनोपासितं यन्त्रं तेषां दृष्टिपथे गतम् ।
तद्देवताक्षोभकरं विक्षिप्तः साधको भवेत् ॥
दक्षिणोपासितं यन्त्रं सूर्याग्निसमतेजसम् ।

पापिनां दृष्टिदहनमुलूकानां यथा रविः ॥
यथा नृभिर्दिनकरोदये सर्वं निरीक्ष्यते ।
दक्षसंस्थापितं यन्त्रं तथा पुण्यात्मनां मतम् ॥
सान्निध्यं सर्वदेवानामवश्यं मन्त्रतो भवेत् ।
मन्त्रस्तु बीजवत् प्रोक्तः प्रतिमाद्यं शरीरवत् ॥
सिद्धायामपि सामग्र्यां विना मन्त्रं फलं न हि ।

तथा ।

दशाङ्गुलप्रमाणा वा तिथ्यङ्गुलमिताऽपि वा ।
अभ्यर्च्य प्रतिमां विष्णोर्गृहेषु गृहमेधिभिः ॥
पञ्चसूत्रसमायुक्तं शिवलिङ्गं समर्चयेत् ।
गृहस्थानां भुक्तिमुक्तिधनारोग्यप्रदं तु तत् ॥
लिङ्गमस्तकविस्तारो यावांस्तावच्च दीर्घता ।
लिङ्गस्य लिङ्गनालक्या जलहर्यास्तथैव च ॥
लिङ्गपीठस्य पञ्चानां समता पञ्चसूत्रिका ।

तत्रैव ।

एकपीठे पृथक् पूजां विना यन्त्रं करोति यः ।
तन्त्रेण पूजयेद्यन्त्रं स दैवं शापमाप्नुयात् ॥
आवाह्य देवतामेकामर्चयेच्चान्यदेवताम् ।
अन्ययन्त्रेण पूजां वा देवता शापकारिणी ॥
पूजनं बहुमूर्त्तीनामेकपीठे भवेद्यदि ।
पृथक् चन्दनपुष्पाणि धूपदीपादि तन्त्रतः ॥

तन्त्रमपार्थक्यम् ।

खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते ।
व्यङ्गेऽनर्हपशुस्पृष्टे पतिते दुष्टभूमिषु ॥

अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते ।
दशस्वेतेषु नो कुर्युः सन्निधानं दिवौकसः ॥

तत्रैव ।

देवस्य मन्त्ररूपस्य यन्त्रव्याप्तिमजानताम् ।
कृतार्चनादिकं सर्वं व्यर्थं भवति शाम्भवि ॥

यन्त्रपदार्थ उक्तस्तत्रैव ।

कामक्रोधादिदोषोत्थसर्वदोषनियन्त्रणात् ।
यन्त्रमित्याहुरेतस्मिन् देवस्तुष्यति पूजितः ॥

(पुरश्चरणचन्द्रिकायाम्)

तत्तत्कल्पोक्तद्रव्येण विलिखेद्यन्त्रमुत्तमम् ।
सौवर्णे राजते ताम्रे पीठे भूर्जे परे भुवि ॥
विना यन्त्रेण चेत् पूजा देवता न प्रसीदति ।

यन्त्रलिखनद्रव्यमुक्तम् (मेरुतन्त्रे)

पूजायन्त्रं दक्षमार्गे तत्तद्गन्धाष्टकेन च ।
लिखेद्वा केशरहिमरोचनाभिः समालिखेत् ॥
वाममार्गे लिखेदाद्यपुष्पेण यदि यन्त्रकम् ।
षण्मासं पूजनात् तत्र त्वरितं सिद्धिमाप्नुयात् ॥
तदभावे तु रुधिरं महिषस्य प्रशस्यते ।
तदभावे तु कुसुमं ग्राह्यं चैवापराजिताम् ॥
तस्योर्ध्वभागे निःक्षिप्य घर्षितं रक्तचन्दनम् ।

( स्वतन्त्रतन्त्रे )

स्वर्णे वा राजते ताम्रे पाषाणे चाष्टधातुषु ।
स्वयम्भूकुसुमं कुण्डगोलोत्थरोचनागुरुः ॥
काश्मीरं मृगनाभिश्च कुलं च मलयोद्भवम् ।
एष गन्धः समाख्यातः सर्वदा चण्डिकाप्रियः ॥

एतेन गन्धयोगेन योनिचक्रं समालिखेत् ।

वीरपरमिदम् ।

(रुद्रयामले)

ततः कुङ्कुमसिन्दूरैः कार्यं यन्त्रं तु योगिना ।
सौवर्णे राजते ताम्रे स्फाटिके वैद्रुमे तथा ॥
चक्रे यथोक्तविधिना पूज्या देवी नरोत्तमैः ।

(सारसंग्रहे)

ताम्रे द्वादशकं वर्षं स्फाटिकादौ तु सर्वदा ।
तेषां मध्ये स्फाटिकं तु सर्वसिद्धिप्रदं भवेत् ॥
यावज्जीवं सुवर्णं स्याद्रौप्यं द्वाविंशतिः प्रिये ।
ताम्रे द्वादशकं वर्षं तदर्धं भूर्जपत्रके ॥

इदं च स्थिररेखारूपयन्त्रपरम् ।

(रुद्रयामलेऽपि)

ताम्रे लक्षगुणं प्रोक्तं रौप्ये कोटिगुणं भवेत् ।
सौवर्णेऽनन्तफलदं मण्यादौ किं वदामि ते ॥
विद्रुमे रचिते यन्त्रे पद्मरागेऽथ वा प्रिये ।
इन्द्रनीलेऽथ वैदूर्ये स्फाटिके मरकते तथा ॥
धनं पुत्रं तथा दारान् यशांसि लभते ध्रुवम् ।

(गौरीयामले)

चातुर्विध्यं हि चक्रस्य प्रस्ताराश्च भवन्ति हि ।
भूकूर्मपद्मप्रस्तारा मेरुश्चापि तथाविधः ॥
निम्नरेखासमायोगो भूप्रस्तारो मयोदितः ।
कूर्मपद्मकप्रस्तार ऊर्ध्वरेखं मयोदितम् ॥

(सौत्रामणीतन्त्रे)

ऋजुलेखे भवेल्लक्ष्मीर्वक्ररेखे दरिद्रता ।

(कुलार्णवे)

आदिरूपाच्च विम्बस्य पूजायां च विशेषतः ।
साधकस्य च विश्वासाद्देवतासन्निधिर्भवेत् ॥

(यामले)

एवं यन्त्रं विनिर्माय तत्र देवीं प्रपूजयेत् ।

देवीमित्युपलक्षणम् । स्वेष्टदेवतामित्यर्थः ।
पूजाप्रकारस्तु दीक्षातरङ्गे एवोक्तः ।

(कुलार्णवे)

मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः ।
न सिद्ध्यति वरारोहे कल्पकोटिशतैरपि ॥
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ॥
लुप्तबीजाश्च ये मन्त्रा न दास्यन्ति फलं प्रिये ।
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥
चैतन्यरहिता मन्त्राः प्रोक्ता नैव फलप्रदाः ।
सूतकद्वयसंयुक्ता न च मन्त्राः फलप्रदाः ॥

मन्त्रार्थो गुरुमुखाद्बोध्यः ।
मन्त्रचैतन्यं वक्ष्यते । योनिमुद्रा द्वितीयतरङ्गे उक्ता । सूतकादिज्ञानप्रकारस्तत्रैव ।

जातसूतकमादौ स्यादन्ते च मृतसूतकम् ।
सूतकद्वयसंयुक्तो यो मन्त्रः स न सिद्ध्यति ॥
गुरुकुण्डलिनीध्यानं विवाहः परिकीर्त्तितः ।
द्विरागमो भवेत् स्नानं संयोगः सन्ध्यया भवेत् ॥
अर्घदानं भवेद्गर्भो गायत्री त्वष्टमासिकम् ।
भूतशुद्ध्यादिप्राणान्तं तत्रावयवकल्पनम् ॥
देही भवेन्मातृकायाः प्राणायामस्तु संस्क्रिया ।

ध्यानोच्चारे महेशानि बालकोत्पत्तिरीरिता ॥
मन्त्रोच्चारणतो देवि जातसूतकमीरितम् ।
जातसूतकदोषस्य शमनार्थं महेश्वरि ॥
दशविंशति पञ्चाशद्यथाशक्त्या जपेच्छिवे ।
इदमादौ समादिष्टं मृतिं संश्रृणु सादरम् ॥
अङ्गज्ञानं च तादात्म्यं तदनन्तरमीरितम् ।
विसर्जनं महेशानि मृतसूतकमीरितम् ॥
मृतसूतकशान्त्यर्थं दशविंशति वा जपेत् ।
तेन तस्य निवृत्तिर्हि भवत्येव न संशयः ॥

यद्वा ।

ब्रह्मबीजं मनोर्दत्वा आद्यन्ते परमेश्वरि ।
सप्तवारं जपेन्मन्त्रं सूतकद्वयमुक्तये ॥

ब्रह्मबीजं प्रणवः ।

अथ मन्त्राणां स्वापप्रबोधकालौ (पञ्चरात्रे)

स्वापकाले तु मन्त्रस्य जपो न च फलप्रदः ।
स्वापकालो वामवहो जागरो दक्षिणावहः ॥
आग्नेयस्य मनोः सौम्यमन्त्रस्यैतद्विपर्ययः ।
प्रबोधकालं जानीयादुभयोरुभयोरपि ॥
ज्ञेया मन्त्रास्तु आग्नेया विद्याः सौम्याः प्रकीर्त्तिताः ।

मन्त्रविद्ययोर्भेदस्तु प्रथमतरङ्गे उक्तः ।

अथ मन्त्रशिखाज्ञानं तन्त्रान्तरे ।

शृणु देवि परं तत्त्वं सर्वज्ञानोत्तमोत्तमम् ।
येन विज्ञातमात्रेण क्षिप्रं विद्या प्रसीदति ॥
मूलकुण्डे तु या शक्तिर्भुजङ्गाकाररूपिणी ।

तद्भ्रमावर्त्तवातोऽयं प्राण इत्याभिधीयते ॥
तं त्यक्त्वाऽव्यक्तमधुरं कूजन्ती सहसोत्थिता ।
गच्छन्ती ब्रह्मरन्ध्रेण प्रविशन्ती पुनस्तनुम् ॥
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ।
तेन मन्त्रशिखा जाता सर्वमन्त्रप्रदीपिनी ॥
तमःपूर्णे गृहे यद्वन्न किञ्चित् प्रतिभासते ।
शिखाहीनास्तथा मन्त्रा न सिद्ध्यन्ति कदा चन ॥
शिखोपदेशः सर्वत्र गोपितः परमेश्वरि ।
विना येन न सिद्धिः स्याद्वर्षकोटिशतैरपि ॥
तस्माद्यत्नेन कर्त्तव्यं शिखाया भावनं मनोः ।

अथ मन्त्रचैतन्यं तत्रैव ।

मन्त्ररूपी भवेद्देवो देवरूपी गुरुर्भवेत् ।
गुरुरूपी भवेदात्मा आत्मरूपी मनुर्भवेत् ॥
इति ते कथितं देवि मन्त्रचैतन्यमुत्तमम् ।
यस्य विज्ञानमात्रेण अद्वैतं ज्ञानमुत्तमम् ॥

अथ कुल्लुका (यामले) ।

श्रीदेव्युवाच ।
अथ वै कुल्लुकोत्पत्तिं कथयस्व ममाधुना ।
कुल्लुका कीदृशी नाथ सेतुर्वा देव कीदृशः ॥
कीदृशो वा महासेतुर्निर्वाणं त्वथ कीदृशम् ।
अन्यदा कथितं यन्मे कीदृशं तद्वद प्रभो ॥
श्रीशिव उवाच ।
रहस्यमपि ते देवि कथ्यते शृणु साम्प्रतम् ।

विना येन महेशानि निष्फलं तु जपादिकम् ॥
कुल्लुका च तथा सेतुर्महासेतुस्तथैव च ।
निर्वाणं कुण्डलीषष्टीसर्वोत्पत्तिं शृणु प्रिये ॥
विद्यानां कुलपूज्यत्वात् कुल्लुका तेन कीर्त्तिता ।
विद्यासम्बन्धिदोषाणां भक्षयन्ती यतः शिवे ॥
तेनेयं कुल्लुकानाम्नी सर्वतन्त्रेषु गोपिता ।
विद्यासिद्ध्यर्णवे देवि येन पारं प्रगच्छति ॥
तेन सेतुर्महेशानि विद्यामार्गः प्रकीर्त्तितः ।
महाविद्याप्तिसंदर्शी महासेतुर्महेश्वरि ॥
महाविद्यार्णवस्याथ चैतन्यस्य प्रदर्शकः ।
महासेतुर्महादेवि महाविद्यास्वरूपधृक् ॥
देवतायास्तु निर्वाणं चैतन्यं यच्च कीर्त्तितम् ।
निर्वाणं कथितं भद्रे विद्यावाङ्मातृकार्णकैः ॥
निर्वाणं परमेशानि चतुश्चरणरूपधृक् ।
निर्वाणं च महेशानि परब्रह्मात्मिका मता ॥
चतुर्थं कथितं भद्रे विद्याचरणमीरितम् ।
पञ्चमी कुण्डली देवी यथावदवधारय ॥
मूलाधारादाविलान्तं विसतन्तुतनीयसीम् ।
सर्वदेवस्वरूपां च सर्ववर्णप्रदीपिनीम् ॥
महाकुण्डलिनीं देवीं समलीं कुण्डलीं पराम् ।

श्रीदेव्युवाच ।

क्रमेण दशविद्यायाः कुल्लुकाया विधिं वद ।

श्रीशिव उवाच ।

पञ्चाक्षरी कालिकायाः कुल्लुका परिकथ्यते ।
कालीकूर्चं च धूमायाः फडन्ताः परमेश्वरि ॥
अघोराख्य ऋषिः प्रोक्तो विराट्छन्दः प्रकीर्त्तितम् ।
देवता कुल्लुका काली बीजं मायाभिधं मतम् ॥
कामशक्तिस्तथा कूर्चं कीलकं परिकीर्त्तितम् ।
षड्दीर्घाढ्येन कामेन षडङ्गन्यास ईरितः ॥
ध्यानपूजादिकं सर्वं कालिकावत् समाचरेत् ।
मायावधूस्तथा कूर्चं तारिणीकुल्लुका मता ॥
तारिणीकुल्लुकायाश्च विरूपाक्ष ऋषिः स्मृतः ।
उष्णिक्छन्दः समाख्यातं देवता नीलतारिणी ॥
कूर्चबीजं तथा माया शक्तिर्वधूश्च कीलकम् ।
मायया तु षडङ्गानि सर्वं नीलसरस्वती ॥

( त्रिशक्तिरत्ने )

अजप्त्वा कुल्लुकामन्त्रमस्मृत्वा श्रीपतिं हरिम् ।
यो जपेत् तारिणीमन्त्रं नरके स विलीयते ॥
जपित्वा कुल्लुकामन्त्रमष्टोत्तरशतं सुधीः ।
प्रजपेत् तारिणीं पश्चान्नान्यथा सिद्धिमाप्नुयात् ॥

कुलसर्वस्वनामसहस्रनामस्तोत्रकथनान्तरम् ।

हरेर्नाम न गृह्णीयान्न स्पृशेत् तुलसीदलम् ।

इति वचनं तु वीरपरमिति ज्ञेयम् ।
उक्तस्तोत्रोपात्तहरेर्नामग्रहणं तु वीरकल्पेऽपि न निषिद्धम् ।

यानि नामानि सन्त्यत्र प्रसङ्गान्मुरवैरिणः ।
ग्राह्याणि तानि कल्याणि नान्यानि तु कदा चन ॥

इति तत्रैवोक्तत्वात् ।

(यामले)

छिन्नायाश्च महेशानि कुल्लुकाऽष्टाक्षरी भवेत् ।
वज्रवैरोचनीये च अन्ते वर्म प्रकीर्त्तयेत् ॥
अतिकाल ऋषिः प्रोक्तो गायत्रीछन्द ईरितम् ।
हुँबीजं हुँ तथा शक्तिः कीलकं रोचनी मता ॥
शिवषड्दीर्घयुक्तेन षडङ्गन्यासमाचरेत् ।
ध्यानपूजादिकं सर्वं छिन्नावत् समुपाचरेत् ॥
सुन्दर्याः कुल्लुका देवि संप्रोक्ता द्वादशाक्षरी ।
वाग्भवं कामराजं च लज्जा च त्रिपुरेपदम् ॥
भगवतीति पदं प्रोच्य तदन्ते ठद्वयं वदेत् ।
सुन्दरीकुल्लुकायास्तु ऋषिरानन्दभैरवः ॥
गायत्रीछन्द आदिष्टं वाग्भवं बीजमीरितम् ।
लज्जा शक्तिर्महेशानि कामबीजं च कीलकम् ॥
देवता त्रिपुरेशी च षडङ्गं त्रिद्वयेन च ।
ध्यानपूजादिकं सर्वं सुन्दरीवत् समाचरेत् ॥
संपत्प्रदाया प्रथमं बीजं श्रीभैरवीमनौ ।
विकराल ऋषिः प्रोक्तः पङ्क्तिच्छन्दः प्रकीर्त्तितम् ॥
देवता भैरवीनाम्ना कुल्लुका परिकीर्त्तिता ।
हँ बीजं सँ महाशक्तिरमत्र कीलकं मतम् ॥
षड्दीर्घाढ्येन बीजेन षडङ्गन्यासमाचरेत् ।
मातङ्गीवगलालक्ष्मीधूमोच्छिष्टाक्रमे शृणु ॥
तारकूर्चनारसिंहैः पञ्चानां कुल्लुका मता ।

ऋषिर्भैरवनामा च यावच्छन्दांसि पार्वति ॥
देवतासर्वबीजादिस्वस्वदेवक्रमेण च ।
ध्यानपूजादिकं सर्वं स्वदैवतवदाचरेत् ॥
इयं ते कथिता देवि संक्षेपात् कुल्लुका मया ।
अज्ञात्वा कुल्लुकामेतां जपते योऽधमः कुधीः ॥
पञ्चत्वमाशु लभते सिद्धिहानिः प्रजायते ।
मन्त्राः पराङ्मुखा यान्ति मन्त्रहानिश्च जायते ॥
तथा जपादिकं सर्वं निष्फलं नात्र संशयः ।
तस्मात् सर्वप्रयत्नेन यो जपेन्मूर्ध्नि कुल्लुकाम् ॥

(रुद्रयामले)

कुल्लुकां मूर्ध्नि संचिन्त्य हृदि सेतुं विचिन्तयेत् ।
महासेतुं विशुद्धौ च सहस्रारे समुद्धरेत् ॥
मणिपूरे तु निर्वाणं महाकुण्डलिनीमधः ।

अथ सेतुः (मेरुतन्त्रे)

मन्त्राणां प्रणवः सेतुर्द्विजानां परिकीर्त्तितः ।
चतुर्दशस्वरोऽन्येषां चन्द्रानुस्वारसंयुतः ॥

यद्वा (रुद्रयामले) ।

विप्राणां प्रणवः सेतुः क्षत्रियाणां तथैव च ।
वैश्यानां तु फडर्णः स्यान्माया शूद्रस्य कथ्यते ॥
अजप्त्वा हृदि देवेशि यो वै मन्त्रं समुच्चरेत् ।
सर्वेषामेव मन्त्राणामधिकारो न तस्य हि ॥
महासेतुं च देवेशि सुन्दर्या भुवनेश्वरि ।
कालिकायाः स्वबीजं तु तारायाः कूर्चबीजकम् ॥

अन्यासां तु वधूबीजं महासेतुर्वरानने ।
आदौ जप्त्वा महासेतुं जपेन्मन्त्रमनन्यधीः ॥
धनैर्धनेशतुल्योऽसौ वाण्या वागीश्वरोपमः ।
बुद्धौ कृतान्तसदृशो नारीणां मदनोपमः ॥
जपकालो भवेत् तस्य सर्वकालो न संशयः ।
(मेरुतन्त्रे)
निःसेतुकं यथा तोयं क्षणान्निम्नं प्रसर्पति ।
मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति यज्वनाम् ॥
तस्मात् सर्वत्र मन्त्रेषु चतुर्वर्णा द्विजादयः ।
पार्श्वयोः सेतुमादाय जपकर्म समाचरेत् ॥

अथ निर्वाणम् (रुद्रयामले)

अथ वक्ष्यामि निर्वाणं शृणु सावहिताऽनघे ।
प्रणवं पूर्वमुच्चार्य मातृकाद्यं समुच्चरेत् ॥
अथ मूलं महेशानि ततो वाग्भवमुच्चरेत् ।
मातृकां च समस्तां च पुनः प्रणवमुच्चरेत् ॥
एवं पुटितमूलं तु प्रजपेन्मणिपूरके ।
एवं निर्वाणमीशानि यो न जानाति पामरः ॥
वर्षकोटिशतेनापि सिद्धिस्तस्य न जायते ।
तस्मात् सर्वप्रयत्नेन यदुक्तं तन्महेश्वरि ॥
तत्तदाचर्यविधिवज्जपेन्मन्त्रमनुत्तमम् ।
ऋषिश्छन्दो देवता च बीजं शक्तिश्च कीलकम् ॥
भावयेद्यत्नतो देवि ततः स्वेष्टादिकं जपेत् ।
एवं यदि जपेन्मन्त्री मन्त्रराजमनुत्तमम् ॥

षण्मासात् सिद्धिमाप्नोति नात्र कार्या विचारणा ।
साक्षात् स एव जगतामधीशो नात्र संशयः ॥
स धन्यः स च विज्ञानी स एव मन्त्रतत्त्ववित् ।
स एव निर्वृतो भूमौ विहरेत् तु यथासुखम् ॥
तस्य दर्शनमात्रेण पलायन्ते च वैरिणः ।
एवं कृत्वा प्रणवपुटितं यो जपेन्मन्त्रराजं
तन्निर्वाणं भुवनमहिते कुल्लुकानां च जप्त्वा ।
तेषां तद्वन्निखिलभुवनं सिद्धयोऽष्टौ च हस्ते
स्नेहादुक्तं रहसि वचनं जन्मजन्मान्तरेषु ॥

अथ जिह्वाशोधनमन्त्रः (यामले) ।

अपरैकं प्रवक्ष्यामि जिह्वाशोधनमुत्तमम् ।
यन्न कृत्वा महादेवि जपपजा वृथा भवेत् ॥
अशुद्धजिह्वया देवि यो जपेत् स तु पापकृत् ।
तस्मात् सर्वप्रयत्नेनन जिह्वाशोधनमाचरेत् ॥
श्रीदेव्युवाच ।
देवदेव महादेव शूलपाणे पिनाकधृक् ।
पृथक्पृथङ्महादेव कथयस्व दयानिधे ॥
शोधनं सर्वविद्यानां मुखस्य शोधनं शुभम् ।
श्रीशिव उवाच ।
श्रीबीजं प्रणवं लक्ष्मीतारं श्रीप्रणवं तथा ।
इदं षडक्षरी विद्या सुन्दर्या दशधा जपेत् ॥
भैरव्यां श्रृणु चार्वङ्गि मुखशोधनमुत्तमम् ।
प्रणवं च ह्सौँ बीजं प्रणवं सुरवन्दिते ॥

इमं हि त्र्यक्षरं मन्त्रं दशधा प्रथमं जपेत्।
शृणु सुन्दरि श्यामाया मुखशोधनमुत्तमम्॥
निजबीजत्रयं देवि प्रणवत्रितयं पुनः।
कामत्रयं* वह्निविन्दुरतिबीजयुतं त्रिकम्॥
एषा नवाक्षरी विद्या जिह्वाशोधनकारिणी।
ताराया: शृणु चार्वङ्गि अपूर्वं मुखशोधनम्॥
जीविनी भुवना लज्जा भुवनेशी ततः प्रिये।
त्र्यक्षरीयं महाविद्या विज्ञेयाऽमृतवर्षिणी॥
दुर्गायाः शृणु चार्वङ्गि मुखशोधनमुत्तमम्।
द्वादशस्वरमुद्धृत्य विन्दुयुक्तं त्रिकं तथा॥
अपरैकं प्रवक्ष्यामि वगलामुखशोधनम्।
वाग्भवं भुवनेशानि वाग्बीजं सुरवन्दिते॥
मातङ्ग्याः शोधनं देवि अङ्कुशं वाग्भवं तथा।
बीजं चाङ्कुशमेतद्धि विज्ञेयं त्र्यक्षरीयकम्॥
लक्ष्म्याश्च शोधनं देवि श्रीबीजं कमलानने।
प्रणवं दान्तमुद्धृत्य वामकर्णविभूषितम्॥
पुनः प्रणवमुद्धृत्य विज्ञेयं त्र्यक्षरी मता।
वालादीनां च अन्यासां प्रणवं मुखशोधनम्॥
स्त्रीशूद्राणां महेशानि औकारेण तु शोधनम्।
मुखशोधनमात्रेण जिह्वाऽमृतमयी भवेत्॥
अन्यथा मलविद्युक्ता जिह्वा भवति सर्वदा।
भक्षणे दूषिता जिह्वा मिथ्यावाक्येन दूषिता॥

---

* कामाक्षरम् इति-३ पु. पा.।

कलहैर्दूषिता जिह्वा तत्कथं प्रजपेन्मनुम् ।
तच्छोधनमनाचार्य न जपेत् पामरः क्वचित् ॥
शैवशाक्तवैष्णवानां सर्वेषामप्यवश्यकम् ।
अन्यथा प्रजपेन्मन्त्रं मोहेन यदि भाविनि ॥
सर्वं तस्य वृथा देवि मन्त्रसिद्धिर्न जायते ।
अन्ते नरकमाप्नोति भवेत् सोऽपि न चान्यथा ॥
देवो यदि जपेन्मन्त्रमकृत्वा मुखशोधनम् ।
पतनं तस्य वै देवि किं पुनर्मर्त्त्यवासिनाम् ॥

(गौतमीये)

पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः ।
स्वस्वध्वनिप्रोच्चरिताः प्रभुत्वं प्राप्नुवन्ति ते ॥
मन्त्राक्षराणि विण्मूत्रे प्रोतानि परिभावयेत् ।
तामेव परमव्योम्नि परमामृतसंज्ञके ॥
दर्शयेदात्मसद्भावं पूजाहोमादिभिर्विना ।

(रुद्रयामले)

जपं यस्य शृणोत्यन्यः स मन्त्रः शून्य उच्यते ।
ऋषिच्छन्दोदेवताभिः परित्यक्तो भुजङ्गमः ॥

अथ मन्त्राणामवयवज्ञानम् ।

तदुक्तं (विशुद्धेश्वरादौ)

मन्त्रं नीत्वा गुरोः पार्श्वे गुरुभक्तिपरायणः ।
मन्त्रश्रोत्रास्यहृन्नेत्रप्राणान् विज्ञाय तत्त्वतः ॥
यत्नाच्च कीलकं ज्ञात्वा कुर्यान्मन्त्रपुरस्क्रियाम् ।
मन्त्राणां प्रणवः श्रोत्रं मुखं रेफः प्रकीर्त्तितम् ॥
स्वराश्च चक्षुषी ज्ञेया मन्त्रविद्भिरनन्तरम् ।
अतिरिक्ताश्च ये वर्णा हृदयं परिकीर्त्तितम् ॥

(भूतडामरयन्त्रडामरयोर्बीजकोशे)

श्रवणास्यहृदयनेत्रज्ञानान्मोक्षो मनोः सद्यः ।
सिद्धिः सर्वविधोनां स्यात् साक्षाच्छिव एव साधको वन्द्यः ॥
श्रोत्रादीनां ज्ञानाभावे मन्त्रस्य ग्रहणमात्रात् ।
दारिद्र्यं च विपत्तिर्नरकप्राप्तिरयशोवंशः ॥
दीनोऽतिदुःखभागी पराजितः शत्रुपीडितः शोकी ।
कुर्यादवस्थितचित्तो मन्त्री श्रोत्रादिविज्ञानम् ॥
स्वनातिभक्त्या श्रोत्रादीनां ज्ञानं गुरोर्भवति तदा ।
कृतकृत्यो लोकत्रयपूजितोऽनवद्यो मन्त्री ॥

तथा ।

लयश्रोत्रास्तृगास्या हृच्छून्याः सेनदृशस्वराः ।
गर्जिनोधूम्रभैरव्योरभावे तु दृशः स्मृताः ॥
मूलार्णं मुखमादिष्टं हृदयं स्वरशक्तयः ।
आदिमध्यावसानेषु पूर्वाभावे यथोत्तरम् ॥

तथा ।

सौरे तथा गाणपत्ये दौर्गे शैवेऽथ वैष्णवे ।
भौतिके च मनावास्यहृन्नेत्रं द्योतते यथा ॥
मूलाक्षरे विचारोऽयं मूलार्णां बीजमुच्यते ।
विषे विचारः कर्त्तव्यो बीजे सति विषान्विते ॥

तथा ।

एभिरशेषमन्त्राणां हृन्नेत्रवदनानि च ।
असवोऽस्य परिज्ञेयाः सर्वतन्त्रेषु गोपिताः ॥
बीजे रक्तमुखाः सर्वे मूलार्णां हृदयं स्वराः ।
दत्तवामदृशौ चण्डी विकला मध्यमानतः ॥

बीजाभावे मनोविद्युन्नेत्रमास्यं मनोहरा ।
मूलार्णा हृदयं दण्डी प्राणोऽपि स्वरशक्तयः ॥
चिन्तामणिनृसिंहाख्ये नेत्रास्यप्राणहृच्छ्रुती ।
यत्र बीजाक्षरं मन्त्रस्तत्र सर्वं स एव हि ॥
प्रधानपूर्वपरगा विकला यत्र दृश्यते ।
तत्र नेत्रं विजानीयान्मुखं च क्षतजोक्षितम् ॥
रक्तवर्जमनोर्मूलवर्णमास्यं प्रकल्पितम् ।
विद्युन्नेत्रं विनिर्दिष्टं विकला चण्डिवर्जिते ॥
विद्युदेवास्यहृन्नेत्रं हृद्वक्त्रप्राणवर्जिते ।
श्रोत्रहीनो मनुः कायक्लेशदो विघ्नकारकः ॥

तथा ।

हृदये मूर्त्तिमास्थाय दृढचित्तः समाहितः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥
मनो हृत्वेन्द्रियार्थाच्च सर्वभावेन साधकः ।
पश्यतीति लयश्रोत्रं नान्यथा शृणुयात् ततः ॥

असृक् रेफः । शून्यं हकारः । सेनो विसर्गः । गर्जिनी इकारः । धूम्रभैरवी ईकारः विषं प्रणवः । रक्तं रेफः । चण्डी विसर्गः । विकलाऽनुस्वारः । विद्युत् अकारः । मनोहरा स्वाहा । दण्डी यकारः । चिन्तामणिबीजं नृसिंहबीजं चाग्रे वक्ष्यते । क्षतजोक्षितं रेफः ।

देवतामन्त्रयोर्वाच्यवाचकभाव उक्तस्तन्त्रान्तरे ।

वाच्यवाचकभावेन सर्वे मन्त्राः प्रतिष्ठिताः ।
यद्देवताया यो मन्त्रः सा वाच्या स च वाचकः ॥

अथ जपप्रारम्भः ।

( मेरुतन्त्रे )

गुरुं गणपतिं दुर्गां मातॄर्नत्वा च पूजनम् ।
कृत्वा स्वमूलमन्त्रेण प्राणायामत्रयं चरेत् ॥

कृत्वा ऋष्यादिविन्यासं मन्त्रन्यासं तथैव च ।
ध्यायेच्च हृदये देवं पात्रे संस्थाप्य मालिकाम् ॥
(उत्तरतन्त्रे)
जपादौ पूजयेन्मालां तोयैरभ्युक्ष्य यत्नतः ।
विधाय मण्डलस्थां तां सव्यहस्तगतां च वा ॥
इष्टमन्त्रेण मालायाः प्रोक्षणं परिकीर्त्तितम् ।
(मेरुतन्त्रे)
अर्घ्योदकेन संप्रोक्ष्य ततस्तां प्रार्थयेदिति ।
ॐ मां माले महामाये सर्वशक्तिस्वरूपिणि ॥
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।
पूजयित्वा ततो मालां गृह्णीयाद्दक्षिणे करे ॥
बीजं गणपतेः पूर्वमुच्चार्य तदनन्तरम् ।
अविघ्नं कुरु माले त्वां गृह्णीयात् तदनन्तरम् ॥
हस्ते च दक्षिणे पश्चाच्चिन्तयेन्मनसा शिवम् ।
चिन्तयेच्च गुरुं मूर्ध्नि यथा वर्णादिकं भवेत् ॥
मन्त्रं ध्यायेत् कण्ठमध्ये पीतवर्णं हिरण्मम् ।
महामायां च हृदये स्वात्मानं गुरुपादयोः ॥
आज्ञाचक्रे ततः पश्चाद्गुरोर्मन्त्रस्य चात्मनः ।
देव्याश्चाप्येकतां नीत्वा सुषुम्णावर्त्मना ततः ॥
तत्त्वस्वरूपमेकं तद्यच्चक्रं प्रतिलङ्घयेत् ।
षट्चक्रेऽपि महामायां क्षणं ध्यात्वा प्रयत्नतः ॥
लम्बयेन्मूलमन्त्रेण चादिषोडशचक्रकम् ।
आदिषोडशमध्यस्थां साधकानन्ददायिनीम् ॥
चिन्तयेत् साधको देवीं जपकर्म समारभेत् ।

भ्रुवोरुपरि नाडीनां तिसृणां व्रात उच्यते ॥
तद्व्रातं त्रिपथस्थानं षट्कोणं चतुरङ्गुलम् ।
रक्तश्च कुलयोगज्ञैराज्ञाचक्रमितीरितम् ॥
कण्ठे तिसृणां नाडीनां वेष्टनं विद्यते नृणाम् ।
सुषुम्णेडापिङ्गलानां षट्कोणं तत्षडङ्गुलम् ॥
तत्षट्चक्रमिति प्रोक्तं शुक्लं कण्ठस्य मध्यगम् ।
तिसृणामपि नाडीनां हृदये चैकता भवेत् ॥
तत्स्थानं षोडशारं स्यात् सप्ताङ्गुलप्रमाणतः ।
तत् पीतमुक्तं योगज्ञैरादिषोडशचक्रकम् ॥
ध्येयानामथ मन्त्राणां चिन्तितस्य जपस्य च ।
यस्मादाद्यं तु हृदयं तस्मादादि निगद्यते ॥

(क्रियासंग्रहे)

गुरुं च देवतां मन्त्रं तथा स्वात्मानमेव च ।
एकीभूतमिति ध्यायेदादिषोडशचक्रके ॥

(मेरुतन्त्रे)

एवं विचिन्त्य मध्याया मध्यभागे तु मालिकाम् ।
अस्पृशँस्तर्जनीं मालामङ्गुष्ठाग्रेण चालयेत् ॥
पूर्वं मन्त्रं जपन् यस्तु संस्पृशेदपरं मणिम् ।
अङ्गुष्ठेन भवेत् तस्य निष्फलं स जपः सदा ॥
मालां स्वहृदयासन्नां धृत्वा दक्षिणपाणिना ।
देवीं विचिन्तयन् जप्यं कुर्याद्वामेन न स्पृशेत् ॥
एकचित्तः प्रशान्तात्मा ह्यक्षसूत्रकरः शुचिः ।
भुग्नग्रीवोन्नतः शान्तः कण्डून्मीलनवर्जितः ॥
सविसर्गं समात्रं च सबिन्दुं साक्षरं स्फुटम् ।

न द्रुतं वाऽपि विश्रान्तं क्रमान्मन्त्रं जपेत् सुधीः ॥
(यामले)
अतिद्रुतो* व्याधिहेतुरतिदीर्घो वसुक्षयः ।
अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ॥
( मेरुतन्त्रे )
तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्तत्परायणः ।
तत्पदार्थानुसन्धानं कुर्वन्मन्त्रं शनैर्जपेत् ॥
जपाच्छ्रान्तः पुनर्ध्यायेद्ध्यानाच्छ्रान्तः पुनर्जपेत् ।
जपध्यानादियुक्तस्य क्षिप्रं मन्त्रः प्रसिध्यति ॥
सनत्कुमारः ।
मनः संहृत्य विषयान्मन्त्रार्थगतमानसः ।
न द्रुतं न विलम्बित्वं जपेन्मौक्तिकपङ्क्तिवत् ॥
जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ।
धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ॥
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ।
जिह्वौष्ठौ चालयेत् किंचिद्देवतागतमानसः ॥
किंचिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ।
मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः ॥
वाचिकाल्लक्षगुणित उपांशुः परिकीर्त्तितः ।
उपांशोः कोटिगुणितो मानसस्तु प्रशस्यते ॥
तन्त्रान्तरे ।
मनसा यः स्मरेत् स्तोत्रं वचसा च मनुं जपेत् ।
उभयं निष्फलं याति भिन्नभाण्डोदकं यथा ॥

---

* अतिह्रस्वो-इति ३-४—५ पु. पा. ।

(कुलार्णवे)

मानसः सिद्धिकामानां पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैव प्रशस्तो जप ईरितः ॥

(मेरौ)

षट्कर्मकृद्वाचिकः स्यात् कायिकः सर्वसिद्धिकृत् ।
मानसः साधयेन्मोक्षं ततोऽन्यः क्षुद्रकर्मकृत् ॥
जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
जपात् सिद्धिर्जपात् सिद्धिर्जपात् सिद्धिर्न *दूरतः ॥
यथा धनेन सन्तुष्टो जायते क्षुल्लकः प्रभुः ।
तथैव वलिदानेन पूजया क्षुद्रदेवताः ॥
यथा महागुणैर्वश्यो जायते गुणवान् प्रभुः ।
तथाऽहं त्वं च विष्णुश्च जपादेव फलप्रदाः ॥

(पाद्मे)

यक्षरक्षःपिशाचाश्च ग्रहाः सर्पाश्च भीषणाः ।
जापिनं नोपसर्पन्ति भयभीताः समन्ततः ॥

वैशम्पायनः ।

यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं सर्वं तन्निष्फलं भवेत् ॥

(रुद्रयामले)

अत्याहारः प्रयासश्च प्रजल्पो नियमाग्रहः ।
जनसंगौष्ठलौलश्च षड्भिर्मन्त्रो विनश्यति ॥
विश्वासास्तिक्यकरुणाश्रद्धानियमनिश्चयैः ।
सन्तोषैः शुद्धकर्मादिगुणैर्युक्तो जपेत् प्रिये ॥

---

* संशयः—४ पु. पा.

सनत्कुमारः ।

कृत्वा जपं पुरा चैवं तेजोरूपं समर्पयेत् ।
देवस्य दक्षिणे हस्ते कुशपुष्पार्घवारिभिः ॥

शक्तिविषये तु

एवं जपं पुरा कृत्वा गन्धाक्षतकुशोदकैः ।
जपं समर्पयेद्देव्या वामहस्ते विचक्षणः ॥

इति (यामलादौ) प्रोक्तम् ।

तथा ।

न न्यूनं नाधिकं चापि जपं कुर्याद्दिने दिने ।
यदि कुर्यात् प्रमादात् तु नेष्टं फलमवाप्नुयात् ॥

(मेरुतन्त्रे)

जपान्तेऽष्टोत्तरशतं जप्त्वा शिरसि धारयेत् ।
मालामन्त्रस्तु ह्रीँ सिद्ध्यै नमः सम्प्रार्थयेदिति ॥
त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम ।
शिवं कुरुष्व मे भद्रे यशोवीर्यं च वर्द्धय ॥
ग्रहणे स्थापने पूजायां प्रोक्तो मालिकामनुः ।
पञ्चाक्षरस्ततो देवं स्वेष्टं सम्प्रार्थयेदिति ॥
गुह्यातिगुह्यगुप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादाज्जगत्पते ॥
मूलमन्त्रं समुच्चार्य देवहस्ते निवेदयेत् ।
तं जपं चार्घतोयेन मध्याह्ने समये त्विदम् ॥
तदूर्ध्वं पूर्ववत् स्नात्वा विशेषेण विधानवित् ।
न्यासावसानमखिलं कर्म कुर्यात् पुरोदितम् ॥
पूजाग्निहोमपर्यन्तं ततश्च जपमारभेत् ।
यावद्दिनावसानं तु भूयः स्नात्वा ततो द्विज ॥

उपास्य पूर्ववत् सन्ध्यां देवं सम्पूजयेत् पुनः ।
विसृज्य भोजनं कुर्यात् सततं तारकोदये ॥
(यामले)
नक्तं हविष्यं भुञ्जीत पुरश्चरणकृन्नरः ।
नक्तपदार्थ उक्तो (भविष्ये) ।
मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः ।
नक्षत्रदर्शनान्नक्तमहं मन्ये *नराधिप—इति ॥
अत्र सूर्यमन्त्रपुश्चरण एव मुहुर्त्तोनदिने भोजनं कार्यम् ।
आत्मद्विगुणच्छायायां यदा सन्तिष्ठते रविः ।
सौरं नक्तं विजानीयादन्यत्र निशि भोजनम्—इति (मात्स्यात्) ॥
(मेरौ)
द्विजैस्तु भोजनं कार्यमुपस्तीर्याभिधार्य च ।
पावयेद्वैदिकैर्मन्त्रैः प्रोक्षणादिककर्मणा ॥
पुनर्मूलेन संमन्त्र्य भुञ्जीयाद्धृदयाणुना ।
मूलाभिमन्त्रितं तोयं भोजने तृषितः पिवेत् ॥
पलाशपत्रे भुञ्जीयान्नमध्यपत्रविवर्जिते ।
तदभावे कदल्यां वा मधूके सर्जकेऽपि च ॥
भुक्त्वा शयीत शयने संशुद्धे वसुधातले ।
अहतास्तरणास्तीर्णे सदर्भशयने शुचौ ॥
मन्त्रिते मूलमन्त्रेण जितक्रोधो जितेन्द्रियः ।
अभीष्टदेवतां ध्यायन् प्राक्शिरस्को निशि स्वपेत् ॥
अर्धरात्रे समुत्थाय पादशौचं विधाय च ।
आचम्य देवं संस्मृत्य शीघ्रं सम्पूज्य पूर्ववत् ॥
जपं कुर्याद्यथाशक्तिरर्पयेच्च तथेश्वरे ।

* गणाधिप इति २ पु पा. ।

स्वपेत् ततस्तु यद्दृष्टं स्वप्नं तं गुरवे वदेत् ॥
जपश्चायं वनस्थानां प्रोक्तोऽयं ब्रह्मचारिणाम् ।
देशाद्युपद्रवत्रासात् त्वरया चेत् समापनम् ॥
कर्त्तव्यं चेदयं कालः प्रोक्तोऽस्यावश्यकेऽपि च ।
आमध्याह्नं जपः श्रेष्ठो मध्यमः प्रहरत्रयम् ॥
सार्धं यामत्रयं हीनोऽवश्यके प्रोक्तलक्षणः ।

वैशम्पायनः ।

कल्पोक्तैव कृते सङ्ख्या त्रेतायां द्विगुणा भवेत् ।
द्वापरे त्रिगुणा प्रोक्ता कलौ सङ्ख्या चतुर्गुणा ॥

(एकवीराकल्पे)

भावनारहितानां च शूद्राणां क्षुद्रचेतसाम् ।
चतुर्गुणो जपः प्रोक्तः सिद्धये नान्यथा भवेत् ॥

(धाराहीतन्त्रे)

एषां जपे च होमे च सङ्ख्या नोक्ता मनीषिभिः ।
तेषामष्टसहस्राणि सङ्ख्या स्याज्जपहोमयोः ॥

(क्रियासंग्रहे)

पूर्णायां जपसङ्ख्यायां विधिवत्संस्कृतानले ।
तैस्तैः कल्पोदितैर्द्रव्यैर्दशांशं हवनं चरेत् ॥
होमद्रव्येण विहिते सर्पिषा होममाचरेत् ।
होमव्यवस्या संप्रोक्ता पुरश्चरणसिद्धये ॥

होमार्थमग्निसंस्कारो होमविधिश्च दीक्षाविधौ विशदीकृत एवेति नेह वितन्यते ।

अथ तर्पणम् ।

(कुलार्णवे)

तर्पणं तु ततः कुर्यात् तीर्थाद्यैश्चन्द्रमिश्रितैः ।
जले देवं समावाह्य पादाद्यैरुदकात्मकैः ॥

संपूज्य विधिवद्भक्त्या परिवारसमन्वितम् ।
एकैकमञ्जलिं तोयं परिवारान् प्रतर्पयेत् ॥
ततो होमदशांशेन तर्पयेत् परदेवतम् ।

(पुरश्चरणचन्द्रिकायाम्)

मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तामहं पश्चात् तर्पयामि नमोऽन्तकः ॥
तर्पणस्य मनुः प्रोक्तस्त्वङ्गादीनां च कल्पयेत् ।

शक्तिविषये तु (यामलादौ)

मन्त्रान्ते नाम चोच्चार्य तर्पयामि ततः परम् ।
वह्निजायान्तमन्त्रेण तर्पयेत् परदेवताम् ॥

तथा ।

मूलमन्त्रं समुच्चार्य मन्त्रान्ते देवताभिधाम् ।
तर्पयामि नमः प्रोच्य तर्पयेत् कुलनायिकाम् ॥

इति वह्निजायान्तनमोऽन्तयोर्विकल्पः। वैष्णवेऽपि नमोऽन्त एव तर्पणमन्त्रः ।

तदुक्तं (गौतमीये)

आदौ मन्त्रं समुच्चार्य श्रीपूर्वं कृष्णमित्यपि ।
तर्पयामि पदं चोक्त्वा नमोऽन्तं तर्पयेन्नरः ॥

तथा ।

तर्पयामि पदं योज्यं मन्त्रान्तेष्वेषु नामसु ।
द्वितीयान्तेषु चेत्येवं तर्पणस्य मनुर्मतः ॥

अथ मार्जनम् ।

(नीलतन्त्रे)

नमोऽन्तं मन्त्रमुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु ॥
अभिषिञ्चेत् स्वमूर्धानं तोयैः कुम्भाख्यमुद्रया ।

वैशम्पायनः ।

तर्पणस्य दशांशेन नमोन्तं मन्त्रमुच्चरन् ।
अभिषिञ्चेत् स्वमूर्धानं जलैः कुम्भाख्यमुद्रया ॥

अन्यत्रापि ।

मन्त्रान्ते नाम चोच्चार्य सिञ्चामीति नमः पदम् ।

अत्र मूलमन्त्रमुच्चार्य—

अमुकदेवताममभिषिञ्चामि नमः—इति योजयन्ति ।

अथ ब्राह्मणभोजनम् ।

(पुरश्चरणचन्द्रिकायाम्)

मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् ।
ब्राह्मणामन्त्रणं कृत्वा भक्ष्यं संपाद्य षड्रसम् ॥
समावाह्यासनं दद्यान्मूलेनैवेष्टदेवताम् ।
ध्यात्वा चावाहनं कुर्याद्ब्राह्मणाँश्च यथोदितान् ॥
पाद्याद्यैरर्चयेदिष्टदेवतारूपभूसुरान् ।
भक्ष्यैर्नानारसोपेतैर्भोजयेद्देवताधिया ॥

(मेरुतन्त्रे)

विप्राराधनमात्रेण व्यङ्गं साङ्गं प्रजायते ।
यानि यान्यपि कर्माणि हीयन्ते द्विजभोजनैः ॥
निरर्थकानि तानि स्युर्बीजान्युषरगाणि च ।
गुरुं सन्तोषयेत् पश्चाद्गोहिरण्याम्बरादिभिः ॥
गुरौ तुष्टे हि सन्तुष्टो मन्त्रः सिद्ध्यति मन्त्रिणः ।

तन्त्रान्तरे ।

गुरवे दक्षिणां दद्याद्भोजनाच्छाजनादिभिः ।
गुरुसन्तोषमात्रेण सर्वसिद्धिर्भवेद्ध्रुवम् ॥
गुरुमूलमिदं सर्वमित्याहुस्तन्त्रवेदिनः ।

(मेरुतन्त्रे)

पञ्चधाऽत्र विधिः प्रोक्तो जपसम्पूर्णकारकः ।
आद्यः कल्पः प्रतिदिनमामध्याह्नं जपं चरेत् ॥
तद्दशांशेन कल्पोक्तं द्रव्यैर्होमं प्रकल्पयेत् ।
तर्पणं मार्जनं कृत्वा तथा ब्राह्मणभोजनम् ॥
तद्दशांशं ततश्चायं प्रथमः कल्प ईरितः ।
अयं द्वितीयः कल्पस्तु लक्षमेकं जपं चरेत् ॥
होमादिकं तस्य कृत्वाऽग्रिमं लक्षं समारभेत् ।
अयं तृतीयः कल्पस्तु सम्पूर्णजपमाचरेत् ॥
पूर्णाहोमे तर्पणादिपूर्वमेवाचरेदिति ।
चतुर्थस्तु तथा कल्पो दारिद्रैर्द्विगुणो जपः ॥
होमाद्यभावे कर्त्तव्यस्त्र्यादिनिघ्नैर्नृपादिकैः ।
पञ्चमस्तु तथा कल्पो यस्य देवस्य यत् प्रियम् ॥
तदेव द्विगुणं कार्यं शीघ्रं दैवततुष्टये ।
जपप्रियाः सर्वदेव्यो वाममार्गे वलिप्रियाः ॥
पानप्रियास्तु सिद्धान्ते कौलिके तु रतिप्रियाः ।
होमप्रियो महादेवो भास्करस्तर्पणप्रियः ॥
मार्जनं तु गणेशस्य विष्णोर्ब्राह्मणभोजनम् ।
प्रायश्चित्तं तु न कृतं तदाऽशुद्धो भवेद्द्विजः ॥
प्रायश्चितचतुष्केण द्विजाद्यैः क्षत्रियादिकाः ।

(यामले)

होमकर्माद्यसक्तानां विप्राणां द्विगुणो जपः ।
इतरेषां तु वर्णानां त्रिचतुष्पञ्चसङ्ख्यया ॥

द्वैगुण्यादिहोमाद्यपत्त एव ।

सनत्कुमारः ।

यद्यदङ्गं भवेद्भङ्गं तत्सङ्ख्याद्विगुणो जपः ।
होमाभावे जपः कार्यो होमसंख्याचतुर्गुणः ॥
विप्राणां क्षत्रियाणां च रससंख्यागुणः स्मृतः ।
वैश्यानां वसुसङ्ख्याकमेषां स्त्रीणामयं विधिः ॥
यं वर्णमाश्रितः शूद्रः स च तस्य विधिं चरेत् ।

तन्त्रान्तरे ।

होमाभावे द्विजानां च यः प्रोक्तः सूरभिर्जपः ।
तत्सुभ्रुवाश्च तद्भक्ताः शूद्राणां च स एव हि ॥

(मेरुतन्त्रे)

अथ वक्ष्ये दरिद्रस्य मन्त्रसिद्धिर्यथा भवेत् ।
होमकर्मण्यशक्तस्य विप्रस्य द्विगुणो जपः ॥
इतरेषां तु वर्णानां त्रिगुणादि विधीयते ।
होमद्विगुणजपेन सम्पूर्णतर्पणं भवेत् ॥
अकृते मार्जने प्रोक्तं तर्पणद्विगुणो जपः ।
प्रत्याम्नाये ब्रह्मभोज्यो न कुत्रापि मया श्रुतः ॥
सर्वथा भोजयेद्विप्रान् कृतसाङ्गत्वसिद्धये ।

अत्र ।

स्त्रीशूद्राभ्यां न होतव्यं मन्त्रोच्चारणपूर्वकम्—इति वचनात् ।

स्त्रीशूद्रयोस्तु होमस्थाने यथोक्तजप एव न तु शक्तावपि होम इति सुधार्णवकृतः ।

तथा च (नारदपञ्चरात्रे)।

त्रयाणामेव वर्णानां होमविधिरुदीरितः ।
शूद्रस्तु तत्फलाकाङ्क्षी होमात् तद्द्विगुणं जपेत् ॥

(क्रियासंग्रहे)

होमस्तु ब्राह्मणद्वारा स्त्रीशूद्राणां निगद्यते ।
होमसङ्ख्यापञ्चगुणं द्विगुणं वा जपं चरेत् ॥

(वाराहीतन्त्रे तु)

शूद्राणामधिकारोऽस्मिँस्तान्त्रिके होमकर्मणि ।
वह्निजायां परित्यज्य स्वाहान्ते च नमो मतः—इत्युक्तम् ॥

तन्त्रान्तरे ।

पुरश्चरण आरब्धे सूतकादिः पतेत चेत् ।
आरब्धं न परित्याज्यमन्यथा दोषभाग्भवेत् ॥

तथा च (स्मृतौ)

यज्ञव्रतविवाहेषु श्राद्धे होमेऽर्चने जपे ।
आरब्धे सूतकं न स्यादनारम्भे च सूतकम् ॥
प्रारम्भो वरणं यज्ञे संकल्पो व्रतजाप्ययोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिष्क्रिया ॥

तन्त्रेऽपि ।

जपो दीक्षार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ।
नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् ॥
सूतके मृतके चैव धूमोद्गारादिके तथा ।
जपं चार्घं तथा कुर्यान्मन्त्रन्यासपुरःसरम् ॥

(पुरश्चरणचन्द्रिकायाम्)

पुरश्चर्यां विधायेत्थं सम्यक् साधकसत्तमः ।
तदन्ते महतीं पूजां कुर्याद्ब्राह्मणभोजनम् ॥
बहुभिर्वस्त्रभूषाभिः पूजयेद्गुरुमात्मनः ।
दीपनार्थाँश्च सन्तोष्य मन्त्राः सिद्ध्यन्ति मन्त्रिणाम् ॥

होमाङ्गनिरूपणम् ।

जपहोमार्चनैर्मन्त्रा नियतस्यास्य सिद्धिदाः ।

जपेन द्विगुणेनापि मनवः सिद्धिदाः स्मृताः ॥

(रुद्रयामले)

भोजनेन विना देवीतर्पणेन विना पुनः ।
होमेनापि विना सिद्ध्यै मन्त्राणां त्रिगुणं जपेत् ॥

(अगस्त्यसंहितायाम्)

सम्यक्सिद्धैकमन्त्रस्य पञ्चाङ्गोपाशनेन च ।
सर्वे मन्त्राः प्रसिद्ध्यन्ति त्वत्प्रसादान्महेश्वरि ॥

तन्त्रान्तरे ।

दुर्लभं त्रिषु लोकेषु सिद्धमन्त्रस्य मन्त्रिणाम् ।
न किंचिदस्ति देवेशि तस्मान्मन्त्रं प्रसाधयेत् ॥

अन्यत्रापि ।

श्रेयांसि बहुविघ्नानि कथितानि मनीषिभिः ।
तस्माद्विघ्नानि निर्जित्य मन्त्रसाधनमाचरेत् ॥
ततः सिद्धमनुर्मन्त्री साधयेत् स्वमनोरथान् ।

(मेरुतन्त्रे)

एकस्मिन् साधिते कार्ये मन्त्रो याति सकुण्ठताम् ।
तावज्जपं पुनः कृत्वा चैककार्यक्षमो भवेत् ॥

तत्रैव ।

मन्त्रान्तरे च संसिद्धो गुरुर्मन्त्रं प्रयच्छति ।
यथोक्ताचरणात् तस्य सिद्धिः शिष्यस्य जायते ॥
कृपा च स्यात् सिद्धमन्त्रं ददाति च यथा गुरुः ।
विना जपं विना पूजां सिद्धयस्तत्करे स्थिताः ॥

(क्रियासंग्रहे)

गुरौ च देवतायां च भक्तिरव्यभिचारिणी ।
मन्त्रे शास्त्रे च विश्वासः सिद्धेर्बीजं विदुर्बुधाः ॥

३०

( प्रत्यङ्गिराकल्पे )

भक्तिमारुतनुन्नेन पुरश्चरणवह्निना ।
दग्धे पापेन्धनव्यूहे मन्त्राः सिद्ध्यन्ति मन्त्रिणाम् ॥

इति सामान्यपुरश्चरणविधिः।

बिभ्रत्यद्भुतभूतिभूतपवचोवैचित्र्यचित्रामृत-
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
षष्ठः श्रीनरदेवनिर्मितपुरश्चर्यार्णवे प्रस्फुरन्
सद्युक्तिस्फुटमौक्तिकोत्कररुचोत्तुङ्गस्तरङ्गो गतः ॥

इति श्रीमन्महाराजाधिराजश्रीप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे सामान्यपुरश्चरणविधिर्नाम षष्ठस्तरङ्गः ॥



# मन्त्रसिद्धिलक्षणम् ।

अथ पुरश्चरणभेदमन्त्रसिद्धिलक्षणादिषु नीरूपणीयेषु सूचीकटाहन्यायेन मन्त्रसिद्धिलक्षणमादौ निरूप्यते ।

तदुक्तं (पञ्चरात्रे)

अथातः संप्रवक्ष्यामि मन्त्रसिद्धेस्तु लक्षणम् ।
मनोरथानामक्लेशे सिद्धेरुत्तमलक्षणम् ॥
मृत्यूनां हरणं तद्वद्देवतादर्शनं तथा ।
प्रयोगानां क्लेशसिद्धिः सिद्धेस्तु लक्षणं तथा ॥

तथा ।

परकायप्रवेशश्च पुरप्रवेशनं तथा ।
ऊर्ध्वोत्क्रमणमेवं हि चराचरपुरे गतिः ॥
खेचरीमेलनं चैव तत्कथाश्रवणादिकम् ।
भूच्छिद्राणि प्रपश्येत् तु तस्मादुत्तमलक्षणम् ॥
स्मरणे कीर्त्तने विष्णोरानन्दाश्रुविमोचनम् ।
रोमाञ्चोद्गद्गदालापश्चित्तस्यैकाग्रता तथा ॥
विषयेषु च वैराग्यं प्रीतिश्च परमेश्वरे ।
तत्कथाश्रवणौत्सुक्यं तत्पादसेवने रतिः ॥
तद्गुणस्तुतिकाव्यानामविलम्बितकर्त्तृता ।
तत्पादाम्बुजचिह्नानां दर्शनं पूजनादिषु ॥
अनाहतस्य शब्दस्य भवेदाकस्मिकी श्रुतिः ।
विनाऽपि योगाभ्यसनं चैतदुत्तमलक्षणम् ॥
ख्यातिर्वाहनभूषादिलाभः सुचिरजीवनम् ।

नृपाणां तद्गतानां च वशीकरणमुत्तमम् ॥
सर्वत्र सर्वलोकेषु चमत्कारकरः शुचिः ।
रोगापहरणं दृष्ट्या विषापहरणं तथा ॥
पाण्डित्यं लभते मन्त्री चतुर्विधमयत्नतः ।
वैराग्यं च मुमुक्षुत्वं त्यागिता सर्ववश्यता ॥
अष्टाङ्गयोगाभ्यसनं भोगेच्छापरिवर्जितम् ।
सर्वभूतेष्वनुकम्पा सार्वज्ञादिगुणोदयः ॥
इत्यादिगुणसंपत्तिर्मध्यसिद्धेस्तु लक्षणम् ।
ख्यातिर्वाहनभूषादिलाभः सुचिरजीवनम् ॥
नृपाणामङ्गनानां च वात्सल्यं लोकवश्यता ।
महैश्वर्यं धनित्वं च पुत्रादिधनसंपदः ॥
अधमाः सिद्धयः प्रोक्ता मन्त्रिप्रथमभूमिकाः ।
सिद्धमन्त्रस्तु यः साक्षात् स शिवो नात्र संशयः ॥
(साधनसमुच्चये)
सिद्धो यस्य महामन्त्रः साधनेन बलीयसा ।
देवानामपि दुष्प्रापाः सिद्धयस्तत्करे स्थिताः ॥
दिङ्करी खेचरी सिद्धिः पादुकासिद्धिरेव च ।
अन्तर्द्धिसिद्धिर्वैतालसिद्धिः कायप्रवेशनम् ॥
यक्षणी भैरवीसिद्धिः खड्गसिद्धिस्तथैव च ।
आज्ञासिद्धिर्धातुवादगुटिकाञ्जनसिद्धयः ॥
आकर्षणवशीकारौ द्रावणं मोहनं तथा ।
उच्चाटनं स्तम्भनं च द्वेषणं मारणं तथा ॥
उन्मादनं शोषणं च मूर्छनं क्षोभणं तथा ।
ग्रहाणां च गतिस्तम्भं वेगस्तम्भं नभस्वतः ॥

नदीमहार्णवस्तम्भं वाक्स्तम्भं प्रतिवादिनाम् ।
गन्धर्वोरगदैत्यानां किन्नराणां च रक्षसाम् ॥
सिद्धविद्याधरादीनां कन्यकाकर्षणं तथा ।
नृपाणां देवतानां च क्षणादाकर्षणं भवेत् ॥
शीतलीकरणं वह्नेः सर्पाणां निर्विषीक्रिया ।
शोषणं सागरस्यापि त्रैलोक्यस्य वशीकृतिः ॥
अमोघवचनत्वं च शापे चानुग्रहे तथा ।
कामरूपं कामगतिः कामदातृत्वमेव च ॥
अणिमा महिमा चैव गरिमा लघिमा तथा ।
ईशित्वं च वशित्वं च प्राकाम्यं प्राप्तिरेव च ॥
इत्याद्याः सिद्धयः सर्वा जायन्ते नात्र संशयः ।
बहुनाऽत्र किमुक्तेन सिद्धमन्त्रस्य मन्त्रिणः ॥
यद्यदिष्टं च तत्सर्वं करामलकवद्भवेत् ।

( नारदपञ्चरात्रे )

मन्त्राराधनशक्तस्य प्रथमे वत्सरत्रये ।
जायन्ते बहवो विघ्ना नियमस्थस्य नारद ॥
नोद्वेगं साधको याति कर्मणा मनसा यदि ।
तृतीयवत्सरादूर्ध्वं राजानश्च महीभृतः ॥
प्रार्थयन्तेऽनुरोधेन गर्विता अपि मानिनः ।
प्रसादः क्रियतां नाथ ममोद्धारणकारणम् ॥
प्रज्वलन्तं च पश्यन्ति तेजसा विभवेन च ।
अतस्ते मुनिशार्दूल निष्ठुरं वक्तुमक्षमाः ॥
नवमाद्वत्सरादूर्ध्वं स्वयं सिद्ध्यति मन्त्रराट् ।

नानाश्चर्याणि हृदये मन्त्रसिद्धिमयानि वै ॥
अत्यानन्दप्रदान्याशु प्रत्यक्षेण बहिस्तथा ।
जडधीस्तु क्षणं विप्रः क्षणमास्ति प्रहर्षितः ॥
क्षणं दुन्दुभिनिर्घोषं शृणोत्यप्यन्तरिक्षगम् ।
क्षणं च मधुरं वाद्यं नानागीतसमन्वितम् ॥
आजिघ्रति क्षणं गन्धान् कर्पूरमृगनाभिजान् ।
उत्पतन्तं क्षणं वाऽपि पश्यत्यात्मानमात्मना ॥
चन्द्रार्ककिरणाकीर्णं क्षणमालोकयन् नभः ।
गजगोवृषनादांश्च शृणुयाच्च क्षणं द्विजः ॥
निर्भराम्बुदसंक्षोभं क्षणमाकर्षयत्यपि ।
तारकाणि विचित्राणि योगिनो नभसि स्थितान् ॥
पश्यत्युद्ग्राहयन्तं च क्षणं मन्त्रवतां सदा ।
क्षणं किलिकिलारावं हंसवर्हिरवं तथा ॥
क्षणं मेघोदयं पश्येत् क्षणं रात्रिं दिने सति ।
रात्रौ च दिवसालोकं ससूर्यं क्षणमीक्षते ॥
बलेन परिपूर्णश्च तेजसा भास्करोपमः ।
पूर्णेन्दुसदृशः कान्त्या गमने विहगोपमः ॥
शमेन युक्तः प्रौढेन गाम्भीर्येण सुखेन च ।
स्वल्पाशनेनाकृशता बहुनाऽपि निखिद्यते ॥
विण्मूत्रयोरल्पता हि भवेन्निद्राक्षयस्तथा ।
जपध्यानगतो मन्त्री न खेदमधिगच्छति ॥
विना भोजनपानाभ्यां पक्षमासादिकं मुने ।
इत्येवमादिभिश्चिह्नैर्महाविस्मयकारिभिः ॥
प्रवृत्तैः संप्रबोद्धव्यं प्रसन्नो मन्त्रराडिति ।

बौधायनः ।

सिद्धेस्तु त्रीणि चिह्नानि दाता भोक्ता अयाचकः ।

(भैरवीतन्त्रे)

ज्योतिः पश्यति सर्वत्र शरीरं वा प्रकाशयुक् ।
निजं शरीरमथ वा देवतामयमेव हि ॥

(वक्रतुण्डकल्पे)

चित्तप्रसादो मनसश्च तुष्टि-
रल्पाशिता स्वप्नपराङ्मुखत्वम् ।
स्वप्नेषु यानाद्युपलम्भनं तु
सिद्धस्य चिह्नानि भवन्ति सद्यः ॥

(मेरुतन्त्रे)

एवं सिद्धे मनौ देवा मोक्षमार्गनिरोधकाः ।
तपःक्षयकराश्चैव जायन्तेऽनेकसिद्धयः ॥
स्वल्पसिद्धौ निमग्नश्चेन्न जायन्तेऽणिमादयः ।
अणिमादिनिमग्नश्चेन्मोक्षवार्त्ताऽतिदुर्लभा ॥

(नारसिंहेऽपि)

यथा स्वल्पसुखे मग्नो न प्राप्नोति महत् सुखम् ।
तथा सिद्धौ निमग्नस्य मुक्तिर्दूरे प्रवर्त्तते ॥
तस्मात् सिद्धीस्तृणीकृत्य भजेन्नृहरिपादुकाम् ।
अखण्डैकरसानन्दं ततः प्राप्नोति नान्यथा ॥
पुरश्चरणसामर्थ्यात् सर्वसिद्ध्याश्रयोऽपि सन् ।
न त्याज्या भगवद्भक्तिः साधकैर्मुक्तिकामुकैः ॥
बुभुक्षवः सन्त्यनेके के चित् सन्ति मुमुक्षवः ।
भोगमोक्षनिराकाङ्क्षी विरलो भजते हरिम् ॥
स एव जीवन्मुक्तः स्यान्नारायणमनामयम् ।

सिद्धो सत्यामसत्यां च भजते योगनिस्पृहः ॥

(मेरुतन्त्रे)

अल्पं तपः क्षणान्नश्येन्मध्यमं चापि गर्वतः ।
सिद्धिद्वारा महत् तस्य चिह्नं लक्षणमुच्यते ॥
स्वप्ने वाऽक्षिसमक्षं वा आश्चर्यमिति हर्षदम् ।
अकस्माद्यदि जायेत नाख्यातव्यं गुरोर्विना ॥
प्रकाशनीयं न क्वापि ऐहिकीं सिद्धिमिच्छता ।
प्रकाशयति यो मोहादौत्सुक्यान्मन्त्रजं सुखम् ॥
निकटस्थाश्च तास्तस्य सिद्धयो यान्ति दूरतः ।
आविर्भवन्ति दुःखानि शोकाश्च विविधा अपि ॥
अल्पाशनं स्वल्पनिद्रा सदा चित्तप्रसन्नता ।
प्रकाशयुक् शरीरं च वाक्यं सत्यं प्रजायते ॥

तथा ।

वाञ्छनोरथसंसिद्धो दाता भोक्ता अयाचकः ।

(प्रपञ्चसारे)

ततोऽस्य प्रत्ययास्त्वेवं जायन्ते जपतो मनुम् ।
अधिष्ठितं निश्यदीपं निस्तमिश्रं गृहं भवेत् ॥

अर्काभस्तेजसाऽसौ भवति नलिनजा सन्ततं किङ्करी स्याद्-
रोगा नश्यन्ति दृष्ट्या द्रुतमथ धनधान्याकुलस्तत्समीपम् ।
देवा नित्यं नमोऽस्मै विदधति फणिनो नैव दंशन्ति पुत्रान्
पौत्रान् मित्राणि वृद्धाँस्तनुविपादि परं धाम विष्णोःप्रयाति॥

इति सिद्धिचिह्नानि ।

(फेत्कारिणीतन्त्रे)

कर्मणा प्रबलेनैव प्रतिबन्धाविरोधिना ।
यदि सिद्धिं न लभते द्विस्त्रिर्वा पुनराचरेत् ॥

अथ द्वित्रैरपि पुरश्चरणैर्मन्त्राणामसिद्धौ तत्सिद्ध्यर्थमुपायानाह ।
( मेरुतन्त्रे )

असिद्धत्वाद्गुरोर्दैवात् शिष्ये सिद्धिर्न जायते ।
तदोपायं प्रकुर्याद्धि यद्गोप्यमधुनोच्यते ॥
अनुलोमविलोमेन विन्दुवन्मातृकाक्षरैः ।
जपेत् संपुटितं मन्त्रं प्रत्यहं शतसङ्ख्यया ॥
एकमासं ततो होमादिकात् सिद्धो भवेन्मनुः ।
पुरश्चर्योक्तमखिलमाह्निकं च समाचरेत् ॥

वैदिकमन्त्रे तु विशेष उक्तस्तत्रैव ।

एवं वैदिकमन्त्रस्य सिद्धयेऽद्रिरसार्णकाः ।
वर्णा देया विन्दुयुक्ताः क्रमतश्चोत्क्रमेण च ॥
ह्रस्वदीर्घप्लुतैर्भेदैर-इ-उ-ऋ त्रिधा मताः ।
ह्रस्वः प्लुतो लृद्विविध एचोऽपि द्विविधा मताः ॥
दीर्घप्लुतविभेदेन ह्यनुस्वारो विसर्गकः ।
चतुर्विंशतिराख्याताः स्वरा एवं यमैः सह ॥
चत्वारः कादिका वर्णा जिह्वामूलीययुक् च कः ।
एवं कवर्गो दशधा चाद्याः पञ्चदश स्मृताः ॥
उपध्मानीयसंयुक्तः पकारस्तेन तत्र षट् ।
याद्यष्टाविति संप्रोक्ता यजुर्वेदे तु मातृकाः ॥
लक्षौ द्वावधिकौ ऋक्षु* ज्ञोऽधिकोऽथर्वणि स्मृतः ।
जपश्चाष्टोत्तरशतं प्रत्यहं मासमात्रकम् ॥
अनध्यायं वर्जयित्वा चत्वारिंशद्दिनं तथा ।
होमादिसकलं प्राग्वन्नित्यमेवं प्रकल्पयेत् ॥

---

* ऋग्वेदेषु—इति ।

उपायन्तरमाह तत्रैव ।

कुलदैवतमन्त्रं तु भूतलिप्या पुटीकुरु ।
क्रमोत्क्रमाच्छतावृत्तिं कुर्यात् सिद्धिस्तु मासतः ॥

तथा ।

अत्युग्रदेवताजप्यस्त्वष्टोत्तरसहस्रकम् ।
त्रिकालं गन्धपुष्पाद्यैर्निशीथे पञ्चमैः पुनः ॥
षण्मासं कौलिकाद्यैश्चेदर्चिता सुप्रसीदति ।

भूतलिपिरग्रे वक्ष्यते ।

अथोपायान्तराणि ।

(गन्धर्वतन्त्रे)

अनुष्ठितो यथान्यायं यदि मन्त्रो न सिद्ध्यति ।
पुनस्तावत् प्रजप्तव्यस्ततः सिद्धो भवेत् पुनः ॥
पुनश्चानुष्ठितो मन्त्रो यदि सिद्धो न जायते ।
उपायास्तत्र कर्त्तव्याः सप्त शङ्करभाषिताः ॥

( मेरुतन्त्रे )

ब्रह्मद्वेषाद्गुरोर्दोषात् स्त्रीद्वेषाच्चेन्न जायते ।
शापतो वाऽकीलितत्वात् तत्रोपायाष्टकं भवेत् ॥
संपाताप्यायनं द्रावो बोधनं च वशीकृतिः ।
पीडनं पोषशोषौ च दहनं तत्क्रियोच्यते ॥
भूर्जपत्रं समानीय पद्ममष्टदलं लिखेत् ।
अष्टगन्धेन देवस्य रोचनाचन्दनेन वा ॥
साधकस्य तु नामार्णैर्मन्त्रसंदर्भितं लिखेत् ।
यावद्द्वयोः समाप्तिः स्यात् तस्य चाद्यन्तयोर्लिखेत् ॥
तारादिकं साधकस्य नामाथाष्टदलेषु तु ।
द्वौ द्वौ लेख्यौ स्वरौ तच्च सम्यक् ध्यायन् सुधात्मकम् ॥
तत् संवेष्ट्य मृदा सम्यग्वेष्टयेद्ब्राह्मणादिकम् ।

शुक्लादिवर्णाया पश्चात् सिक्थकेन च वेष्टयेत् ॥
क्षिपेत् त्रिमधुरे तत् तु मृण्मये लघुभाजने ।
क्षीरपूर्णे नवे कुम्भे तत् क्षिपेल्लघुभाजने ॥
अग्निं संस्थापितं कृत्वा सन्निधौ तस्य तं घटम् ।
संस्थापयेत् त्रिमधुरैर्मूलमन्त्रेण होमयेत् ॥
अष्टादिकसहस्रं तु संपातं कलशे क्षिपेत् ।
होमं समाप्य तं कुम्भं निःक्षिपेच्च जलाशये ॥
स्वगुरुं ब्राह्मणाँश्चान्याँस्तोषयेद्दक्षिणादिभिः ।
संपाताप्यायनं चैतदुक्तं सिद्धिर्न चेद्भवेत् ॥
द्रावणं तु तदा कुर्यात् तत्प्रकार इहोच्यते ।
वँ बीजेन ग्रन्थयित्वा भूर्जपत्रे लिखेन्मनुम् ॥
उशीररोचनाभ्यां च शिलाकर्पूरकुङ्कुमैः ।
क्षीराज्यमधुतोयानां मध्ये तं लिखितं क्षिपेत् ॥
पूजनाच्च जपाद्धोमाद्द्रावितः फलदो भवेत् ।
द्रावितोऽपि न सिद्धश्चेद्बोधनं तस्य कारयेत् ॥
वाग्भवेन च बीजेन संपुटीकृत्य तं जपेत् ।
एवं बुद्धो भवेत् सिद्धो नो चेत् कुर्यात् वशीकृतिम् ॥
कुचन्दनमहादारुहरिद्रामदनीशिलाः ।
एतैस्तु लिखितो मन्त्रो भूर्जपत्रे सुशोभने ॥
कण्ठे धृतो भवेद्वश्यो नो चेत् कुर्यात् प्रपीडनम् ।
अनुदात्तस्वरेणाद्यमुदात्तेन द्वितीयकम् ॥
तृतीयमनुदात्तेन पठेत् तुर्यमुदात्ततः ।
एवं पदानि सर्वाणि पठेन्मन्त्रस्य साधकः ॥

अनुदात्तपदोच्चारे देवं ध्यायेदधःस्थितम् ।
ऊर्ध्वस्थितमुदात्तस्योच्चारेऽष्टाधिसहस्रकम् ॥
जपेन्मन्त्रं ततो भूर्जे भानुदुग्धेन लेखयेत् ।
मन्त्रं तमाक्रमेद्वामपादेनाथ च होमयेत् ॥
अष्टोत्तरशतं मन्त्रं पीडितः सन् प्रसीदति ।
न सिद्धश्चेत् तदा पोष्यः प्रोच्यते तत्क्रियाऽधुना ॥
ह्सौँ बीजपुटितं मन्त्रं विलिखेद्भूर्जपत्रके ।
रोचनाकुङ्कुमाभ्यां च धारयेद्दधिदुग्धयोः ॥
इदं पोषणमित्युक्तं दोषशोषणमुच्यते ।
यज्ञस्य भस्मना लेख्यं वायुबीजविदर्भितम् ॥
भूर्जपत्रे स्वेष्टमन्त्रं तत् कण्ठे धारयेदिति ।
एतच्छोषणमित्युक्तं दहनं प्रोच्यतेऽधुना ॥
पृथक् पृथक् च मन्त्राणां चतुर्दिक्षु समावृतान् ।
रँ बीजेन पलाशस्य बीजतैलेन संलिखेत् ॥
भूर्जपत्रेऽथ तद्धार्यं कण्ठे दाहक्रिया त्वियम् ।
उपायान्तराण्युक्तानि (यामलेश्वरगन्धर्वादौ ।
प्रणवो मातृका देवी हृल्लेखेत्यमृतत्रयम् ।
अमृतत्रयसंयोगाद्दुष्टमन्त्रोऽपि सिद्ध्यति ॥
*सुवर्णमर्कतैलं च पिष्टं मन्त्राम्भ एव च ।
एतल्लिप्ताङ्गसंजप्तो मन्त्रः कुशठोऽपि सिद्ध्यति ॥
( गौतमीये )
सुवर्णसूर्यतैलेन पिष्टेन निजवारिणा ।
तल्लिप्ताङ्गहुतः कुशठो मनुः सद्यः प्रसीदति ॥
इति मन्त्रसिद्ध्युपायाः

---

* सुवर्णमित्यारभ्य मन्त्रसिद्ध्युपा इत्यन्तम् ५ पु. अधिकः पाठः ।

*आदावन्ते च मन्त्रस्य हृल्लेखा कामबीजकम् ।
श्रीबीजं च विनिःक्षिप्य जपेन्मन्त्रं तु सिद्धये ॥
तारसंपुटितं वाऽथ कृत्वा मन्त्रं तु साधकः ।
लक्षमात्रं प्रजप्तव्यं दुष्टमन्त्रोऽपि सिद्ध्यति ॥

इत्युपायाः ।

अथ पुरश्चरणभेदाः ( वाडवानलीये )

पुरश्चर्यां विना मन्त्रा न सिद्ध्यन्ति कदा चन ।
न ते मन्त्राः प्रयोगार्हा न ते मन्त्राः फलप्रदाः ॥
ये च मन्त्राः पुरश्चर्याविर्जिता वीरवन्दिते ।
कीर्त्तिता यस्य मन्त्रस्य जपसङ्ख्या तु भूयसी ॥
तावत्सङ्ख्याजपं कर्त्तुमसमर्थश्च साधकः ।
समुद्रगनदीकूले देवतायतनेऽथ वा ॥
माघे मासि हविष्याशी लक्षमात्रं जपेन्मनुम् ।
भक्त्या संपूजयेद्देवीं त्रिसन्ध्यं विविधार्हणैः ॥
होमादीनि ततः कुर्यात् तदङ्गानि विधानतः ।
एवंकृते महादेवि भवेन्मन्त्रः फलप्रदः ॥
दीक्षा हि विफला ज्ञेया पुरश्चर्यामकुर्वताम् ।

(मुण्डमालायाम्)

कृष्णाष्टमीं समारभ्य यावत् कृष्णाष्टमी भवेत् ।
सहस्रसङ्ख्ये जप्ते तु पुरश्चरणमिष्यते ॥

तत्रैव ।

कृष्णां चतुर्दशीं प्राप्य तपस्यन्तं महोत्सवे ।
अष्टमीनवमीरात्रौ पूजां कुर्याद्विशेषतः ॥
दशम्यां पारणं कुर्यान्मत्स्यमांसादिभिर्युतम् ।

---

* आदावित्यारभ्य इत्युपाया इत्यन्तम् ५ पु. नोपलभ्यते ।

षट्सहस्रं जपेन्नित्यं भक्तिभावपरायणः ॥

तथा ।

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
चतुर्दशीं समारभ्य यावदन्या चतुर्दशी ॥
तावज्जप्ते महेशानि पुरश्चरणमिष्यते ।
केवलं जपमात्रेण मन्त्राः सिद्धा भवन्ति हि ॥
वलिहोमादिदानेन विशेषात् पीठपूजने ।
योनिपीठं महापीठं कामरूपं तथाऽपरम् ॥
तयोरेकतमं पूज्यं रुद्रदेह इवापरः ।

(चन्द्रपीठे)

महालक्ष्मीं समारभ्य आमहानवमीश्वरि ।
कृष्णाष्टम्या आनवमी मधौ शाक्ते मनौ स्मृतम् ॥
ऊर्जे तपसि राधे वा शुक्लपक्षस्तु वैष्णवे ।
एकादश्यन्त ऐशे तु भूतान्तः फाल्गुने स्मृतः ॥
भाद्रेऽपि वैघ्नराजे तु माघभाद्रौ स्ववासरात् ।
अन्येष्वपि च मन्त्रेषु पूर्वोक्तं नवरात्रकम् ॥
जपो मातृकया प्रातःकालान्मध्यन्दिनावधि ।
रात्रौ याममितः कार्यः पयोमूलफलाहृतिः ॥
चतुर्थयामे कर्त्तव्या मालामन्त्रे दशांशतः ।
विंशांशाद्वा दशांशाद्वा अन्येष्वपि हुतं मतम् ॥
दक्षिणा च यथोक्ता च वित्तशाठ्यं न कारयेत् ।
एवं मन्त्रः प्रयोगार्हो भवत्येव न संशयः ॥

(साधनसमुच्चये)

तद्देवतिथिमारभ्य यावत् तद्देवतातिथिः ।
नित्यं जपेत् षट्सहस्रं पुरश्चरणमिष्यते ॥

ऊर्जे कृष्णेतरे पक्षे आरभ्य प्रतिपत्तिथिम् ।
प्रजपेद्वैष्णवं मन्त्रं यावदेकादशीतिथिः ॥
होमादिभिः प्रभोज्यान्तं विदध्याद्द्वादशीदिने ।
विधिनाऽनेन सिद्ध्यन्ति मनवो मुरवैरिणः ॥

(कालिकाकल्पे)

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शरत्काले चतुर्थ्यादिनवम्यन्तं विशेषतः ॥
भक्तितः पूजयित्वा तु रात्रौ तावत्सहस्रकम् ।
जपेदेकस्तु विजने केवलं तिमिरालये ॥
अष्टम्यादिनवम्यन्तमुपवासपरो भवेत् ।
स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा ॥

शरत्काले देवीपक्षे । तावत्सहस्रं षट्सहस्रम् ।

(मुण्डमालायाम्)

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शरत्काले महापूजा क्रियते या च वार्षिकी ॥
तस्मिन् पक्षे विशेषेण पुरश्चरणतत्परः ।
अष्टम्यादिनवम्यन्तमुपवासपरो भवेत् ॥
पूजयेद्भक्तितो रात्रौ षट्सहस्रं जपं चरेत् ।

अत्र प्रतिपदादिनवम्यन्तं जपो बोध्यः ।

( विश्वसारे )

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
पूजास्थाने विनिक्षिप्य नरमुण्डं तदूर्ध्वके ॥
कोमलासनमास्तीर्य पूजयेत् परदेवताम् ।
षट्सहस्रप्रमाणेन प्रत्यहं किं न सिद्ध्यति ॥

(कालीतन्त्रे)

अथ वाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
कुजे वा शनिवारे वा नरमुण्डं समाहृतम् ॥
पञ्चगव्येन मिलितं चन्दनाद्यैर्विशेषतः ।
निःक्षिप्य भूमौ हस्तार्धमानतः काननान्तरे ॥
तत्र तद्दिवसे रात्रौ सहस्रं यदि साधकः ।
एकाकी प्रजपेन्मन्त्रं स भवेत् कल्पपादपः ॥

तत्रैव ।

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शवमानीय तद्वारे तेनैव परिखन्यते ॥
तद्दिनान्तदिनं यावत् तावदष्टोत्तरं शतम् ।

जपेदिति शेषः ।

स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा ।

तद्वारे इति । पूर्वोक्तशनिभौमवारे । तेनैवेति । हस्तार्धमानेनैवेत्यर्थः ।

तत्रैव ।

अथ वाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ॥
सूर्योदयात् समारभ्य यावत् सूर्योदयान्तरम् ।
तावज्जप्त्वा निरातङ्कं सर्वसिद्धीश्वरो भवेत् ॥

अत्र होमादिकमपि कर्त्तव्यं पुरश्चरणत्वश्रुतेः ।

तन्त्रान्तरे ।

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्योदयं समारभ्य यावत् सूर्योदयान्तरम् ॥
तावज्जप्त्वा निरातङ्कं सर्वसिद्धीश्वरो भवेत् ।

अत्र तिथिनियमो नोक्त इति पूर्वस्माद्विशेषः ।

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।

सूर्यास्तं च समारभ्य सूर्यास्तं यावदेव तु ॥
तावज्जप्त्वा निरातङ्कं सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥
सूर्योदयं समारभ्य यावदस्तमयो भवेत् ।
तावद्भक्त्या जपेद्देवि सर्वसिद्धीश्वरो भवेत् ॥
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्यास्तं च समारभ्य यावत् सूर्योदयो भवेत् ॥
तावज्जपेन्महेशानि सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥
शरत्काले चतुर्थ्यादिनवम्यन्तं महेश्वरि ।
होमरूपां पुरश्चर्यां कुर्यात् सिद्धीश्वरो भवेत् ॥
अथ तर्पणरूपां च पुरश्चर्यां ब्रवीमि ते ।
दुग्धेनाशवतोयेन रक्तैर्मज्जाभिरेव च ॥
मधुना गन्धतोयेन रक्तधाराभिरेव च ।
केवलं शुद्धतोयस्य तर्पणेन महेश्वरि ॥

अत्राधिकारिभेदेन तर्पणद्रव्यभेदो बोध्यः ।

(साधनसमुच्चये)

प्रतिपद्दिनमारभ्य नवम्यन्तं महोत्सवे ।
दिवा वा यदि वा रात्रौ षट्सहस्रं जपं चरेत् ॥
देवीं संपूज्य विधिवत् सर्वसिद्धीश्वरो भवेत् ।

तन्त्रान्तरे ।

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
दिवा जपेत् षट्सहस्रं रात्रावपि तथैव च ॥

एवं क्रमेण देवेशि सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥
दिवा जपेत् षट्सहस्रं तावद्धोमं चरेन्निशि ।
सर्वसिद्धीश्वरो भूयादतोऽन्यं शृणु पार्वति ॥
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
नित्यकृत्यं दिवा कृत्वा केवलं तिमिरालये ॥
रात्रौ जपेद्गगानपरः सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥
गानमण्डलगो जप्त्वा त्रैलोक्याधिपतिर्भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥
दिवा जपेद्दिक्सहस्रं रात्रौ पूजां चरन् जपेत् ।
सहस्रमात्रं प्रजपेदामिषान्नपरायणः ॥
सर्वसिद्धीश्वरो भूयाद्वेतालसिद्धिमाप्नुयात् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥
प्रतिपद्दिनमारभ्य नवम्यन्तं महेश्वरि ।
एकान्ते पर्वते शून्ये केवलं तिमिरालये ॥
उदयास्तमयं जप्त्वा सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥
पर्वते विपिने शून्ये नवरात्रं जितेन्द्रियः ।
मुण्डोपरि भवेन्मुण्डकपालं च ततो*परि ॥
तत्र दीपं च प्रज्वाल्य दीपालोकनतत्परः ।

---

* तान्त्रिकप्रयोगोऽयम् ।

नवरात्रं जपेद्देवि दीपालोकनतत्परः ॥
मूलमन्त्रं कपालेषु कौमार्या बीजमुत्तमम् ।
सिन्दूरेण कृतं यन्त्रं सर्वसिद्धीश्वरो भवेत् ॥
(कालीतन्त्रे)

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
अष्टमीसन्धिवेलायामष्टोत्तरलतागृहम् ॥
प्रविश्य मन्त्री विधिवत् ताः समभ्यर्च्य यत्नतः ।
पूर्वोक्तकल्पमासाद्य पूजादिकं समाचरेत् ॥
केवलं कामदेवोऽसौ जपेदष्टोत्तरं शतम् ।
तासां च पत्रमूले च जप्त्वा संगृह्य मस्तके ॥
महासिद्धिर्भवेत् सद्यो लतापूजनदर्शनात् ।

अष्टमीसन्धिवेलायामष्टमीनवम्योः सन्धिवेलायाम् । अष्टोत्तरलतागृहं यथासम्भवमष्टपर्यन्तानां शक्तीनां गृहं मदनमन्दिरम् । पूर्वोक्तकल्पं दूतीयागाख्यम् । पत्रमूले वराङ्गे जप्त्वा बीजं निरस्य तदेव बीजं मस्तके संगृह्य तिलकं कृत्वेत्यर्थः । इदं वीरपरम् । एवमन्येषामपि तत्तन्मार्गपरत्वं सकलसाधारणत्वं च क्रियाविशेषाद्बोद्धव्यम् ।

तथा—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
आकृष्टायाः कुलागारे लिखित्वा मन्त्रमेव च ॥
संपूज्य तत्र संस्कारं कृत्वा तस्यै निवेद्य च ।
किंचिज्जप्त्वा मनुं नीत्वा देवताभावतत्परः ॥
तां विसृज्य नमस्कृत्य स्वयं सुप्त्वा सुसंयतः ।
प्रातः स्त्रीभ्यो वलिं दत्वा मन्त्रसिद्धिर्न संशयः ॥

अत्र पूजनमात्रं न तु संभोगोऽपीति ठक्कुराः ।

तत्रैव ।

गुरुमानीय संस्थाप्य देववत्पूजनं विभोः ।

वस्त्रालङ्कारहेमाद्यैः सन्तोष्य गुरुमेव च ॥
तत्सुतं तत्सुतां चैव तत्पत्नीं चैव पूज्य* च ।
पूजयित्वा मनुं जप्त्वा स्वयं सिद्धीश्वरो भवेत् ॥

( मेरुतन्त्रे )

वाममार्गीयमन्त्राणामेवमेवान्यदुच्यते ।
कृष्णाष्टमीं समारभ्य यावत् कृष्णचतुर्दशी ॥
देवं ध्यात्वा जपेन्मन्त्रमयुतानां चतुष्टयम् ।
दशांशं होमयेत् पश्चात् तर्पयेदभिषेचयेत् ॥

(कल्पलता-) धृतवचनानि ।

अष्टम्यां च चतुर्दश्यां नवम्यां च विशेषतः ।
रात्रियोगेन देवेशि गत्वा च पितृकानने ॥
दिगम्बरो मुक्तकेशो भूत्वा च सुरसुन्दरि ।
प्रजपेदयुतं मन्त्री देवताभावतत्परः ॥
मन्त्रसिद्धिर्भवेत् तस्य देवीपुत्रस्य भूतले ।

(मुण्डमालायाम्)

यद्गुह्यं परमं देवि गोप्याद्गोप्यतरं प्रिये ।
तदेतत् कथयिष्यामि प्रकाशश्च प्रजायते ॥
गोप्तव्यं तु महादेवि रहस्यं यत् तु गद्यते ।
मनोहरे शुभे गेहे कर्पूरादिसुवासिते ॥
रक्तभित्तिसमालिप्ते रक्तचन्दनमालया ।
रक्तासनोपविष्टः सन् रक्तपुष्पाणि धारयेत् ॥
रक्तचन्दनसंलिप्तो रक्तवस्त्रावृतः सदा ।
जपेदयुतमेकं तु रक्तां ध्यायेत् सुरेश्वरीम् ॥

---

* तान्त्रिकप्रयोगोऽयम् ।

पश्चाद्रक्तबलिं दद्याद्रक्तपुष्पैः समर्चयेत् ।
दशांशं जुहुयाद्रक्तकुसुमैर्वज्रसंज्ञकैः ॥
मधुरत्रयसंसिक्तैः सिन्दूरारुणविग्रहः ।
कुमारीं भोजेत् पश्चाद्रक्तपुष्पासवादिभिः ॥
लभते वाञ्छितां सिद्धिमेवं कृत्वा हि साधकः ।

पुरश्चरणान्तरमाह ।

अथ वा कल्पयेद्गेहे सुधादिधवलीकृते ।
शुभ्रासने समाविश्य शुद्धस्फटिकमालया ॥
कर्पूरचन्दनालिप्त शुभ्राम्बरधरः शुचिः ।
श्वेतपुष्पैः समभ्यर्च्य ध्यायन् शुभ्रां सुरेश्वरीम् ॥
जपेत् सहस्रदशकं पश्यन्नुद्योतितं जगत् ।
होमयेत् तद्दशांशेन पुण्डरीकदलैः शुभैः ॥
शर्करामधुसंयुक्तैः सर्पिःसंलोलितैस्तथा ।
श्वेताम्बरं सितां मालां श्वेतपुष्पादिभूषणाम् ॥
श्वेतानुलेपनं तद्वद्दद्याद्विप्राय दक्षिणाम् ।
कुमारीभ्यस्तथा दद्याद्भोजयेत् ताश्च भक्तितः ॥
स्वयं त्रिमधुरोपेतैः पश्चाद्भुञ्जीत साधकः ।
निवेद्य पुरतो देव्यै भक्त्या विशुद्धभावतः ॥
एवं कृत्वा पुरश्चर्या ज्ञानवृद्धिकरी परा ।
यशोवृद्धिकरी तद्वद्राज्यवश्यकरी तथा ॥
प्रसन्नहृदयं तद्वत् साधकं परिकल्पयेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणकर्मकृत् ॥
लभते वाञ्छितां सिद्धिं गुरुभक्तिपरायणः ।

सिन्दूरेण पुरस्कृत्य मण्डले मन्दिरोदरे ॥
तत्राष्टपत्रकमलं लिप्तं सिन्दूररेणुभिः ।
पत्राणि पीतहरितसितनीलं क्रमाल्लिखेत् ॥
कर्णिकां च हरिद्रायाश्चूर्णैरालिख्य निर्मलाम् ।
तत्रेष्टदेवतां मध्ये पूर्णकुम्भात्मिकां चरेत् ॥
निवेश्य पञ्चरत्नानि पञ्चामृतजलं तथा ।
रक्तवस्त्रावृतं कुम्भं कृत्वा साधकसत्तमः ॥
नमस्कृत्य गुरुं कुर्यादयुतं जपमुत्तमम् ।
होमं कुर्यात् प्रयत्नेन विल्वपत्रैः सहस्रकम् ॥
रक्तचन्दनसंसिक्तैः स्फुरत्त्रिमधुराप्लुतैः ।
वलिमष्टदले दद्याच्छागरक्तोक्षितैर्नरः ॥
सगुडैः पायसैर्मध्ये मधुलालितमस्तकम् ।
छागस्यैवार्चितं पूर्वं रक्तपुष्पस्य मालया ॥
वलिमुत्तममुत्सृज्य निरीक्षेत दिशस्ततः ।
पलायन्ते वैरिणस्ते भीता एव द्रुतं निशि ॥
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
भौमवारे चतुर्दश्यां वलिमादाय मन्दिरात् ॥
श्मशानं समुपागत्य वलिपूजां समाचरेत् ।
पुर्वोक्तमण्डपं कृत्वा ततो दद्याद्वलिं निशि ॥
भैरवं पूजयित्वाऽऽदौ ततो देवीं समर्चयेत् ।
व्याघ्राजिनोपविष्टः सन् मुक्तकेशो जपेत् सुधीः ॥
सहस्रदशकं देवि निर्भयो वीरसत्तमः ।
ततो नरकपालस्थं वलिं दद्यात् सुरादिकम् ॥

भैरवाय नमस्कृत्य देव्यै रक्तं सुरां तथा ।
पायसं दधि भक्तं च गुडोदनमथापि वा ॥
प्रणामेन्निर्भयो भूत्वा सानन्दो मन्दिरं व्रजेत् ।
महापातकनिर्मुक्तो जायते राज्यभाजनम् ॥
दुःसहो वैरिवृन्देन व्याख्यावागीश्वरो भवेत् ।
दृष्ट एव मनोहारी स्त्रीणां काम इवापरः ॥
अथ वा मन्दिरे शून्ये सिन्दूरारुणमण्डले ।
नारीं चतुर्दशीरात्रौ कृष्णपक्षे निशान्तरे ॥
आनीय रूपसंपन्नामलङ्कृत्य विभूषणैः ।
वस्त्रैर्माल्यैरङ्गरागैः समभ्यर्च्य विशेषतः ॥
न्यासं विधाय तस्यां तु यजेदानन्दनन्दिनीम् ।
भुञ्जन् सौगन्धिकं वस्तु सहस्रं तु शतोत्तरम् ॥
सदुग्धं तु बलिं दद्यात् सुरामधुरमिश्रितम् ।
निवेदयेत् तु नैवेद्यं तस्यै भक्तिसमन्वितम् ॥
ततो लभेत त्रैलोक्ये वशीकरणमुत्तमम् ।
कविताकौशलं सम्यगाकर्षणकरं तथा ॥
तस्यामनिन्दितायां तु प्रसन्ना परमेश्वरि ।
पूर्णानन्दो भवेदस्मान्नियतं साधकोत्तमः ॥
एतद्गुह्यतरं देवि न प्रकाश्यं कथं चन ।
साधकेन महासिद्धिमिच्छता दुर्लभं भुवि ॥
अथ वा शृणु देवेशि पुरश्चरणमुत्तमम् ।
हविष्याशी मुक्तकेशो जपेदयुतमादरात् ॥

गद्यपद्यमयी वाणी तस्य सर्वविधा भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥
दिवा परिस्कृते देवि रात्रौ दीपान् प्रदापयेत् ।
चतुःषष्टिं चतुर्दिक्षु मध्ये मण्डलमालिखेत् ॥
सिन्दूरैः पटवासैश्च पुनः षोडशपत्रकम् ।
ततोऽष्टदलमालिख्य मध्ये कुर्याच्च कर्णिकाम् ॥
त्रिकोणद्वयमालिख्य तत्र कुम्भं निधापयेत् ।
पुनः पञ्चामृतैः पूर्णं दूर्वाम्रादिदलान्वितम् ॥
आच्छाद्य मृदुवस्त्रेण लोहितं च विशेषतः ।
ततो दिग्बन्धनं कृत्वा द्वीपिचर्मासनस्थितः ॥
उपविश्यावाहयेद्देवीमिष्टां तत्रार्चयेत् ततः ।
पञ्चोपचारविधिना ततस्तु जपमारभेत् ॥
प्रथमं प्रहरं हित्वा तुरीयं च विवर्जयेत् ।
मध्ययोर्यामयोर्जप्यादङ्गन्यासादिपूर्वकम् ॥
जपान्ते तु बलिं दद्यात् कृष्णच्छागं प्रयत्नतः ।
ततो जपानुक्रमेण होमादि प्रातराचरेत् ॥
तर्पणं मार्जनं कृत्वा तथा ब्राह्मणभोजनम् ।
ततः कुमारीं संपूज्य साधकाँस्तोषयेत् ततः ॥
एवं कृत्वा पुरश्चर्या महासिद्धिकरी सदा ।
पुरश्चरणकर्तॄणां वश्यगा भैरवी स्वयम् ॥
सिद्धमन्त्रप्रभावेण त्रैलोक्यं वशमानयेत् ।
अपरं तु प्रवक्ष्यामि पुरश्चरणमुत्तमम् ॥

शृणु शैलसुते देवि शीघ्रं शीघ्रफलप्रदम् ।
कृष्णां चतुर्थीमारभ्य यावच्छुक्लचतुर्थिका ॥
प्रयतस्तु जपेन्मन्त्रं योषिन्नियमपूर्वकम् ।
ततो होमादिकं कार्यं ततः पूर्णं भवेदिदम् ॥
सोत्साहं तु ततो देवीं ध्यात्वा सुस्थो जपं चरेत् ।
ततः सिद्धिमवाप्नोति वाञ्छितां मन्त्रसाधकः ॥
अथ वा पुष्पशय्यायां मृदुवासाः सुभूषणः ।
कृत्वाऽङ्गरागं सानन्दस्त्रयोदश्यां कुजे दिने ॥
व्यभिचारवतीं नारीं विभूष्यानीय सन्निधिम् ।
पुष्पेण तां समालम्ब्य जपेदेकान्तमन्दिरे ॥
प्रवालमालया धीमान् मौक्तिकस्याक्षमालया ।
यथाशक्ति जपेन्मन्त्रं ततो देव्यै बलिं ददेत् ॥
पायसं मधुसर्पिर्भ्यां सितावलितमुत्तमम् ।
सुगन्धकुसुमैर्मालां निर्माय नवपल्लवैः ॥
निवेद्य देव्यै तां मालां तस्याः केशे निधाय च ।
न का चित् कामचेष्टां च विदध्यात् साधकोत्तमः ॥
तस्यै भूषादिकं दत्वा पुरो देव्यै निवेदयेत् ।
देव्यै दत्वा विशेषेण ततस्तां तु विसर्जयेत् ॥
रात्रिशेषं ततो विद्वान् जागरेण समापयेत् ।
कृतमेवंविधं कर्म देव्या हर्षविवर्द्धकम् ॥
साधको लभते सिद्धिमेवं कृत्वा तु मन्त्रतः ।
एतत् तु सुकरं कर्म धैर्याधीनं सुरेश्वरि ॥

कथितं ते सुगोप्यं हि न प्रकाश्यं कथं चन ।
कौतुकार्थं किं चिदन्यत् कथयिष्यामि पार्वति ॥
साधकः करणाद्यस्य सर्वलोकप्रियो भवेत् ।
मण्डलं पुरतः कृत्वा हरिद्राचूर्णनिर्मितम् ॥
चतुर्द्वारि शुभां रम्भां स्थापयेत् तां दलान्विताम् ।
तासु दीपावलिं दत्वा कौशलेन विशेषतः ॥
अष्टम्यां प्रातरारभ्य तदहोरात्रकं जपेत् ।
वलिं च विधिवद्दत्वा होमाद्यन्तं समाचरेत् ॥
विधायेपोषणं प्रातर्दक्षिणान्तां क्रियां चरेत् ।
महासिद्धिं लभेन्मन्त्री हरितालकरः परः ॥
सुगोप्यमेतत् सर्वं हि कथितं तव भामिनि ।

(कालीतन्त्रे)

अथ वा विजने रम्ये अस्थिशय्यासने नरः ।
उभयास्तं मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत् ॥
निजे क्रोडे विल्वमूले शवमारोप्य यत्नतः ।
नृसिंहमुद्रया वीक्ष्य जपेन्मातृकया नरः ॥
सहस्रं तत्र जप्त्वा तु सर्वसिद्धीश्वरो भवेत् ।

(भैरवतन्त्रे)

अष्टाधिकं च साहस्रं कृत्वा प्रतिदिनं जपेत् ।
षण्मासात् सिद्धिसंयुक्तः कविर्विद्यानिधिर्भवेत् ॥

तन्त्रान्तरे ।

महापितृवने नक्तं शवशय्यासनस्थितः ।
षट्सहस्रं जपेन्मन्त्री सर्वसिद्धीश्वरो भवेत् ॥

एतत् त्रितयमपि प्रथमविद्याविषयम्।

(साधनमुच्चये)

या तिथिर्यस्य देवस्य तस्यां वा साधकोत्तमः।
सूर्योदयं समारभ्य यावदस्तमयो भवेत् ॥
सूर्यास्तं वा समारभ्य यावत् सूर्योदयो भवेत्।
तावत्कालं जपेन्मन्त्रं पुरश्चर्येयमीरिता ॥
होमादिविप्रभोज्यान्तं कर्त्तव्यं पूर्ववद्बुधैः।

(*अगस्त्यसंहितायाम्)

चैत्रे मासि नवम्यां तु जातो रामः स्वयं हरिः।
पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ॥

तथा—

तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः।
जपेदेकान्त आसीनो यावत् स्याद्दशमीदिनम् ॥
तेनैव स्यात् पुरश्चर्या दशम्यां भोजयेद्द्विजान्।
भक्ष्यभोज्यैर्बहुविधैर्भक्त्या दद्याच्च दक्षिणाम् ॥
कृतकृत्यो भवेत् तेन सद्यो रामः प्रसीदति।

तिथिनिर्णयमाह।

चैत्रे शुद्धा तु नवमी पुनर्वसुयुता यदि।
सैव मध्यान्हयोगेन महापुण्यतमा भवेत् ॥
नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः।
उपोषणं नवम्यां वै दशम्यामेव पारणम् ॥

(वाडवानलीये)

वक्ष्ये तत्राप्यशक्तानां पुरश्चरणमुत्तमम्।

---

* 'अगस्त्यसंहिताया'मित्यारभ्य 'दशम्यामेव पारण'मित्यन्तं केवलं ५ पुस्तके उपलभ्यते।

पञ्चाद्यां तिथिमारभ्य यावत् तद्देवतातिथिः ॥
तावज्जपेद्वर्णमय्या मालया प्रहरद्वयम् ।
जपान्ते पूजनं कुर्यात् प्रत्यहं हवनादिकम् ॥
यस्य कस्यापि मन्त्रस्य पुरश्चरणमिष्यते ।

तत्रेति पूर्वोक्तलक्षजपरूपपुरश्चरण इत्यर्थः ।

अथ ग्रहणकालीनपुरश्चरणम् । तदुक्तं ( मेरुतन्त्रे )

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ॥
नद्यां समुद्रगामिन्यां नाभिमात्रे जले स्थितः ।
स्पर्शाद्विमुक्तिपर्यन्तं जपेन्मन्त्रं समाहितः ॥
तावत्कालं जपित्वेत्थं ततो होमादिकं चरेत् ।
ब्राह्मणान् भोजयेत् पश्चात् पुरश्चर्यासमं त्विदम् ॥
प्रायश्चित्ते प्रयोगस्य प्रत्यवायस्य नाशने ।
येषां जपे च होमे च सङ्ख्या तन्त्रेषु नोदिता ॥
तत्र सेयं पुरश्चर्या सर्वतन्त्रेषु गोपिता ।

तन्त्रान्तरेऽपि ।

ग्रहणे चन्द्रसूर्यस्य शुचिः पूर्वमुपोषितः ।
नद्यां समुद्रगामिन्यां नाभिमात्रे जले स्थितः ॥
यद्वा शुद्धोदके स्नात्वा शुचौ देशे समाहितः ।
स्पर्शाद्विमुक्तिपर्यन्तं जपं कुर्यादनन्यधीः ॥
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् ।
तदन्ते महतीं पूजां कुर्याद्ब्राह्मणभोजनम् ॥
ततो मन्त्रस्य सिद्ध्यर्थं गुरुं संपूज्य तोषयेत् ।
ततः प्रयोगान् कुर्वीत मन्त्रवित् कल्पनोदितान् ॥

(कालीतन्त्रे)

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
चन्द्रसूर्यग्रहे चैव ग्रासावधि विमुक्तितः ॥
यावत्सङ्ख्यं मनुं जप्त्वा तावद्धोमादिकं चरेत् ।

(सनत्कुमारसंहितायाम्)

अथ वाऽन्यप्रकारेण पौरश्चरणिको विधिः ।
चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः ॥
संस्पर्शादिविमोक्षान्तं जपेन्मन्त्रमनन्यधीः ।
दृष्ट्वा स्नात्वा च संकल्प्य विमोक्षान्तं जपं चरेत् ॥
तावद्धोमादिकं कुर्याद्‌ग्रहणान्ते शुचिः पुमान् ।
एवं जपान्मन्त्रसिद्धिर्भवत्येव न संशयः ॥

तावदिति यावान् जपो जात इत्यर्थः ।

तदुक्तं (सिद्धेश्वरीमतेऽपि)

चन्द्रसूर्यग्रहे देवि ग्रासावधि विमुक्तितः ।
यावत्सङ्ख्यमनुर्जप्तस्तावद्धोमादिकं चरेत् ॥
पञ्चाङ्गं तावदेव स्याज्जपहोमौ समौ स्मृतौ ।
सिद्धेश्वरीमतं प्रोक्तं सर्वसिद्धिप्रदायकम् ॥

(चन्द्रपीठमन्त्रदेवप्रकाशिकरत्नावल्ल्यादौ)

उपवासत्रयं कृत्वा एवं वा शक्त्यपेक्षया ।
श्राद्धादि चातिसंक्षेपाद्‌ग्रहणे स्पर्शमात्रतः ॥
समुद्रगायां सरिति कण्ठमात्रे जले स्थितः ।
जपं कुर्यादुद्‌ग्रहान्तं होमाद्यं तद्दशांशतः ॥
संपूर्णां दक्षिणां दत्वा मन्त्रसिद्धिमवाप्नुयात् ।
ततः प्रयोगान् कुर्वीत मन्त्रवित् कल्पनोदितान् ॥

(तन्त्रचिन्तामणि) धृततन्त्रान्तरवचनानि ।

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्यचन्द्रोपरागे तु नाभिमात्रोदके स्थितः ॥
ग्रासाद्विमुक्तपर्यन्तं जपं कुर्यान्महेश्वरि ।
तद्दशांशं होमयेद्धि तद्दशांशैस्त्रयं क्रमात् ॥
अनेन क्रमयोगेन सङ्गमे संजपेच्च वा ।
एकाङ्गुष्ठोपरि स्थित्वा ग्रासावधि विमुक्तितः ॥
पञ्चाङ्गं चाथ वाऽष्टाङ्गं दशाङ्गाख्यपुरस्क्रियाम् ।
कुर्याद्यत्नेन देवेशि सर्वसिद्धीश्वरो भवेत् ॥
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ॥
घटिकार्धं पूर्वमेव ग्रहणं परिवर्त्तते ।
तदा स्नानं विधातव्यं ग्रस्ते संकल्पमाचरेत् ॥
जाताशौचं मृताशौचं ग्रहणे नास्ति पार्वति ।
विमोक्षान्तं जपं कुर्यात् सम्यग्ज्ञाते समापनम् ॥
सूर्ये छन्ने अनायातघटिकार्धं विचारयेत् ।
ततः समापनं कुर्यात् सिद्धमन्त्रो भवेद्ध्रुवम् ॥
प्रमादाद्गलिते यागे बहुविप्रान् प्रभोजयेत् ।
यद्यदङ्गं विहीयेत तत्साङ्गं द्विजभोजनम् ॥
दशांशं हवनं कुर्यात् तर्पणं तद्दशांशतः ।
मार्जनं तद्दशांशेन दशांशेनाभिषेचनम् ॥
दशांशं विप्रभोज्यं च देवरूपो नरो भवेत् ।
यद्यदङ्गं विहीयेत तत्सङ्ख्याद्विगुणो जपः ॥

द्वित्रिवेदबाणभेदैर्विप्रादीनां क्रमः स्मृतः ।

(वाडवानलीये)

चन्द्रसूर्योपरागे च जपेन्मन्त्रमनन्यधीः ।
स्पर्शाद्विमुक्तपर्यन्तं तावद्धोमादिकं चरेत् ॥
अथ वा तद्दशांशेन पुरश्चरणमुच्यते ।

अत्र स्पर्शपदं स्पर्शज्ञानपरम् ।

चक्षुषा दर्शनं राहोर्यत् तद्ग्रहणमुच्यते ।
तत्र कर्माणि कुर्वीत गणनामात्रतो न हि ॥

इति स्मार्त्तवचनात् ।

तथा च ।

सूर्यग्रहणकालादिर्नान्यः कालः प्रशस्यते ।
यस्तु श्राद्धानुरोधेन ग्रहणे चन्द्रसूर्ययोः ॥
न करोति पुरश्चर्यां नरके स विपच्यते ।

इत्यादिवचनान्मन्त्रिणां ग्रहणपुरश्चरणमावश्यकम् ।

सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति ॥

श्राद्धकरणे स्मार्त्तनिन्दार्थवादस्तु दीक्षितान्यपर इति सुधार्णवकृतः । तदुक्तं सनत्कुमारेणापि ।

जपयज्ञं परित्यज्य पितृयज्ञं करोति यः ।
स भवेद्देवताद्रोही पितॄन् सप्त नयत्यधः ॥

इति केचित् प्रतिनिधिद्वारा श्राद्धमामनन्ति ।
अन्ये तु ।

अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं सग्रहे च शूद्रः कुर्यात् स एव हि ॥

इति वचनाद्धेमश्राद्धं विधाय पुरश्चरणमाचरन्ति । हेमश्राद्धं च पित्रुद्देशेन यथाशक्तिसुवर्णदानम् ।

कल्पलताकृतस्तु—

जपयज्ञं परित्यज्येत्यादिसनत्कुमारवचनमारभ्यपुरश्चरणमध्ये मध्याह्नपतित-सूर्यग्रहणविषयमित्याहुः ।

वस्तुतः स्मार्त्तानां श्राद्धं तान्त्रिकाणां तु पुरश्चरणमावश्यकम् ।

तान्त्रिकस्तु जपं कुर्यात् स्मार्त्तः श्राद्धं समाचरेत् ।

इति (सिद्धान्तसार) वचनात् ।

ग्रहणपुरश्चरणसंकल्पस्तु—

ॐ अद्येत्यादिराहुग्रस्ते दिवाकरे निशाकरे वाऽमुक-गोत्रोऽमुकशर्माऽमुकदेवताया अमुकमन्त्रसिद्धिकामो ग्रा-साद्विमुक्तिपर्यन्तं जपरूपपुरश्चरणमहं करिष्ये—इति ।

अत्र केचित् ।

जपो होमस्तर्पणं च मार्जनं विप्रभोजनम् ।
पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते ॥

तथा—

सिद्धिकामोऽस्य मन्त्रस्य यावत्सङ्ख्यं जपं ततः ।
दशांशं हवनं कुर्यात् तद्दशांशं तु तर्पणम् ॥
दशांशं मार्जनं कुर्याद्दशांशं विप्रभोजनम् ।

इत्यादिवचनादेकसंकल्पान्तरे तु पञ्चाङ्गोपासनमेव पुरश्चरणम् । ग्रहण-पुरश्चरणादौ तु पुरश्चरणपदं भाक्तम् । तस्य जपमात्ररूपत्वादेकसंकल्पान्तारितप-ञ्चाङ्गोपासनत्वाभावात् । तत्र होमादिविधानं तु प्रधानीभूतपुरश्चरणतुल्यता-बोधनायेत्याहुस्तच्चिन्त्यम् ।

(मेरुतन्त्रादौ) मुख्यपुरश्चरणेऽपि प्रथमतो जपमात्रसंकल्पोक्तत्वात् । मन्त्र-मार्गादिभेदेन न्यूनातिरिक्ताङ्गस्य पुरश्चरणस्य च तत्रैवोक्तत्वादेव संकल्पा-न्तरितपञ्चाङ्गोपासनस्यैव पुरश्चरणपदवाच्यत्वे प्रमाणाभावात् । 'पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यत' इत्यादिवचनं च येषां मन्त्राणां पञ्चाङ्गमेव पुरश्चरणं तन्मन्त्रपुरश्चरणपरं न तु मन्त्रसामान्यपुरश्चरणपरम् । एकेनैव वाक्येन साङ्ग-जपसंकल्पस्तु लाघवार्थः ।

(साधनसमुच्चये)

दोषादल्पाद्भयं हित्वा ज्योतिःशास्त्रनिरूपितम् ।

राहुं दृष्ट्वा जपं कुर्यात् कोटिपुण्यफलप्रदम् ॥

ज्योतिःशास्त्रोक्तदोषप्रतीकारोऽप्युक्तस्तत्रैव ।

निर्माय राजतं चन्द्रं सौवर्णं च दिवाकरम् ।

पञ्चोपचारैरभ्यर्च्य दद्याद्विप्राय बुद्धिमान्—इति ॥

तथा—

ग्रासादिमुक्तिपर्यन्तं यदा संकल्पितो जपः ।

ग्रस्तास्ते शास्त्रतो ज्ञात्वा विमुक्तिं जपमुत्सृजेत् ॥

अदृष्ट्वा नैव भुञ्जीत सूर्यं वा रजनीकरम् ।

तथा—

यामत्रयं न भोक्तव्यं चन्द्रग्रहणपूर्वतः ।

सूर्यग्रहणतः पूर्वं प्रहराणां चतुष्टयम् ॥

यत् तु (मत्स्यपुराणे)

अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे ।

भुञ्जीत चेत् संगवे स्यान्न पूर्वं भुक्तिमाचरेत् ॥

इति वचनं तद्बालवृद्धातुरविषयम् ।

तदुक्तं वृद्धवसिष्ठेन ।

सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।

चन्द्रग्रहे तु यामाँस्त्रीन् बालवृद्धातुरैर्विना—इति ॥

## अथ वर्णौषधिपुरश्चरणम् ।

(मेरुतन्त्रे)

अयोग्यगुरुतो लब्ध्वा वार्यादिस्थानमाश्रिताः ।

दुर्देशत्वात् पुरश्चर्यां कर्त्तुं चेच्छक्यते न हि ॥

राज्ञो भाग्यमतो वाऽपि सुकुमारस्य वा यथा ।

सिद्धिर्भवेत् तथा वक्ष्ये वर्णौषधिपुरस्क्रियाम् ॥

सप्तधा सा परिज्ञेया वर्णमासैस्तु सिद्धिदा ।

मन्त्रवर्णौषधीकाष्ठै रचयेद्गुटिकाः शुभाः ॥

वर्णक्रमेण ताः प्रोह्या अनुलोमविलोमतः ।
स्थूलादिकाश्च लघ्वन्ताः कर्त्तव्या मणयो यथा ॥
सर्पद्वयाकृतिर्माला भवेन्नित्यं तया जपेत् ।
मालया मणिसङ्ख्याकं प्रथमोऽयं जपः स्मृतः ॥
सर्वे समाना मणयः प्रोतव्याः स्वर्णसूत्रके ।
कण्ठे धार्या कण्ठमाला नित्यमेष द्वितीयकः ॥
तथैव राजते सूत्रे प्रोह्यैताः परिपूजयेत् ।
तद्देवकल्पमार्गेण प्रक्रमोऽयं तृतीयकः ॥
वर्णौषधीनां क्वाथेन नित्यस्नानं चतुर्थकः ।
वर्णौषधीरजो लिह्याद्गोघृतेन तु पञ्चमः ॥
तच्चूर्णोद्वर्त्तनं कुर्यादेष षष्ठः प्रकीर्त्तितः ।
तद्भस्मधारणं नित्यं कुर्यादिति तु सप्तमः ॥

वर्णौषध्यस्तु प्रागुक्ताः ।

अथवीरपुरश्चरणम् ।

अत्र रात्रिरेव कालो न दिवसस्तदुक्तम् ( मुण्डमालायाम् )

गते तु प्रथमे यामे तृतीयप्रहरावधि ।
प्रजप्तव्यं निशायां तु रात्रिशेषे जपेन्न च ॥
हविष्यं भक्षयेन्नित्यमेकभक्तं सुसंयतः ।

( कुलचूडामणौ )

पुरश्चरणकाले तु परशक्तिं प्रपूजयेत् ।
दीक्षितो वस्त्रपुष्पाद्यैर्भोज्यैः पायससम्भवैः ॥
शून्यगेहे समानीय चार्घोदकविशोधितम् ।
अमृतीकरणं कृत्वा शक्तीरभिमुखं नयेत् ॥

समानीय शक्तिपूजोपयुक्तद्रव्याद्यमृतीकरणं तेषामेव ।

तथा—

अर्घोदकेन सर्वास्ताः संप्रोक्ष्य विधिपूर्वकम् ।
अमृतीकरणं कुर्यात् सकलीकरणं ततः ॥

अत्रामृतीकरणादिकं शक्तीनाम् ।

पूज्यशक्तीराह ।

अथाष्ट कन्यका वक्ष्ये देवीरूपधरा यतः ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च कुलभूषणा ॥
वेश्या नापितकन्या च रजकी योगिनी तथा ।
विशेषवैदग्ध्ययुताः सर्वा एव कुलाङ्गनाः ॥
अष्टकन्यारुपभेदं विलोक्यामर्षचेष्टिताः ।
ब्राह्मण्याद्यष्टशक्तीनां नामभिः कृतसंज्ञकाः ॥
गौरकृष्णादिकं रूपं सौम्यत्वं च गुणादिकम् ।

शक्तीनां नामानि वक्ष्यमाणस्तोत्र एव वक्तव्यानि ।

पूजाप्रकारमाह ।

आसनं प्रथमं दत्वा स्वागतं च वदेत् पुनः ।
अर्घ्यं पाद्यं च पानीयं मधुपर्कं जलं ततः ॥
स्नापयेद्गन्धपुष्पाद्भिः केशसंस्कारमाचरेत् ।
धूपयित्वा ततः केशं कौशेयं विनिवेदयेत् ॥
ततः स्नानान्तरे पीठमास्तीर्य पादुकाद्वयम् ।
दत्वा तत्र समासीनां नानालङ्कारभूषणैः ॥
भूषयित्वाऽनुलेपं च गन्धमाल्यं निवेदयेत् ।
तां तां शक्तिं समावाह्य मूर्ध्नि तासां समानयेत् ॥
भोज्यमण्डपमध्ये तु स्वर्णपात्रे सुशोभने ।
चर्व्यं चोष्यं लेह्यपेयं भोज्यं चैव हि भक्षणम् ॥

अदीक्षिता यदा स्युस्तास्तदा मायां निवेदयेत् ।

तां तामिति । यस्य नाम्ना या संकेतिता तस्याः शिरसि तां शक्तिमावाह्य पूजयेदित्यर्थः। इदं चावाहनं मध्येऽप्युक्तमादावेवार्हति सर्वत्र तथा दर्शनात् ।

तत्रासां सव्यकर्णेषु ततः स्तोत्रं समाचरेत् ।
मातर्देवि नमस्तेऽस्तु ब्रह्मरूपधरेऽनघे ॥
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ।
माहेशि वरदे देवि परमानन्दरूपिणि ॥
कृपया० .... .... ।
कौमारि सर्वविघ्नेशि कुमारक्रीडनेऽवरे ॥
कृपया० .... .... ।
*विष्णुरूपधरे देवि महागरुडवाहिनि ॥
कृपया० .... .... ।
वाराहि वरदे देवि दंष्ट्रोद्धृतवसुन्धरे ॥
कृपया० .... .... ।
शक्ररूपधरे देवि शक्रादिसुरपूजिते ॥
कृपया० .... .... ।
चामुण्डे मुण्डमालास्रक्चर्चिते विघ्ननाशिनि ॥
कृपया० .... .... ।
महालक्ष्मि महामोहक्षोभसंतापनाशिनि ॥
कृपया० .... .... ।
पितृमातृमये देवि पितृमातृबहिस्कृते ॥
एके बहुतरे देवि विश्वरूपे नमोऽस्तु ते ।

---

* इदं केवलं २ पु. उपलभ्यते ।

एतत् स्तोत्रं पठेद्यस्तु कर्मारम्भे सु संयतः ॥
विदग्धां वा समालोक्य तस्य विघ्नो न जायते ।
यदि क्रीडापरास्तास्तु भोजने तद्गृहाद्बहिः ॥
स्थित्वा स्तोत्रं पठेत् तावद्यावत् तृप्तिः प्रजायते ।
आचम्य मुखवासादि ताम्बूलं च निवेदयेत् ॥

तथा—

ततो दद्यात् पुनर्मालां चन्दनं पङ्कितं शुभम् ।
विसृज्य प्रदक्षिणीकृत्य वरं प्राार्थ्य सुखी भवेत् ॥
अन्या यदि न गच्छन्ति निजकन्या निजानुजा ।
अग्रजा मातुलानी वा जननी तत्सपत्निका ॥
वयस्या ज्ञातिजा वाऽपि निःपतिर्वा सभर्त्तृका ।
पूर्वाभावे परा पूज्या मदंशा योषितो यतः ॥
एका चेद्युवती तत्र पूजिता वा विलोकिता ।
सर्वा एव तदा देव्यः पूजिताः कुलभैरव ॥

इदं च पुरश्चरणस्यादौ मध्ये चान्ते च कर्त्तव्यम् ।
तथा हि तत्रैव ।

आदावन्ते च मध्ये च लक्षपूर्त्तौ विशेषतः ।
न पूजयति चेत् कान्तां तदा विघ्नैर्विलुप्यते ॥

(वीरचूडामणौ)

क्षेत्रमादौ तु संशोध्य समसूत्रं मनोहरम् ।
वेदिकां कारयेत् तत्र मध्ये मुण्डं विनिःक्षिपेत् ॥
अलिना लेपनं कुर्यान्मध्ये चाष्टदलं लिखेत् ।
पूर्वादिक्रमतो ज्ञेयं स्वरयुग्मं लिखेत् क्रमात् ॥
वर्गाष्टकं लिखेत् तत्र मध्ये प्रासादमालिखेत् ।

गगनं विन्दुसंयुक्तं लाङ्गलीशं तथैव च ॥
सविसर्गं वरारोहे केशरेषु लिखेत् ततः ।
तत्राधारादि संपूज्य आसनं स्थापयेद्बुधः ॥
उपविश्यासने वीरो यत्र कुत्राप्यचूडके ।
पार्ष्णिघातत्रयं कुर्याच्छोटिकात्रितयं ततः ॥
दिग्बन्धमस्त्रमन्त्रेण पूर्वादिक्रमतो बुधः ।
वकेशान्ते पिनाकीशं नादविन्दुविभूषितम् ॥
पशुपदं समुच्चार्य रमान्तेऽस्त्रमनूत्तमम् ।
पाशुपताख्यविद्येयं सर्वविघ्नविनाशिनी ॥

वकेशः शकारः । पिनाकीशो लकारः ।

भूतशुद्धिं विधायादौ न्यासपूर्वं विधानतः ।

तथा—

गोमयेन विलिप्तायां भूमौ मण्डलमालिखेत् ।
अलिना लेपनं कुर्याद्यक्षकर्दमकेन वा ॥
सूत्रेण सूत्रितं पद्मं समसूत्रं मनोहरम् ।
रक्तं श्वेतं हरिद्वर्णं कृष्णपत्रं सुकेशरम् ॥
चतुरस्त्रं सुशोभाढ्ये तन्मध्ये योनियुग्मकम् ।
त्रिकोणं चैव तन्मध्ये शून्ये शून्यं विचिन्तयेत् ॥
योजयेद्दीपितां नारीं तत्र संपूजयेन्मनुम् ।
तत्रैव देवीं संस्थाप्य ईषद्धासां सुलोचनाम् ॥
षोडशाब्देन युवतीमप्रसूतां तपस्विनीम् ।
स्वाधीनां स्वच्छवस्त्रां च भीतिहीनाट्टहासिनीम् ॥
तीव्रशुद्धिं दृढाचारां मुक्तकेशीं दिगम्बराम् ।
योगमुद्राधरां वाऽपि योगाचारपरायणाम् ॥

ईदृशीं मन्त्रसंयुक्तां यागकाले प्रपूजयेत् ।
मातङ्गीं तन्तुकारीं च भवाब्धिभीतिनाशिनीम् ॥
षट्वाकारीं चर्मकारीं शिल्पिनीं नापिताङ्गनाम् ।
हट्टनारीं विशेषात् तु सुपुष्पकेण कोमलाम् ॥
सामान्यार्घं विशेषार्घं स्वपात्रं शक्तिपात्रकम् ।
तन्मध्ये निःक्षिपेद्द्रव्यं सामरस्यामृतोद्भवम् ॥
तत्त्वपञ्चकमन्त्रेण एकैकं शोधयेद्बुधः ।
वह्निसूर्यकलाचन्द्रकलान्ते हृदयं मनुम् ॥
त्रिकोणं विलिखेन्मध्ये त्रिकोणमकथादिकम् ।
खान्तं षान्तं तथा नान्तं यान्तं धान्तं सशत्रुकम् ॥
वामकर्णसमायुक्तं विन्दुनादैरलङ्कृतम् ।
रत्नेश्वरीति विद्याख्यं पञ्चरत्नात्मकं मनुम् ॥
षडङ्गेनैव संपूज्य मूलमन्त्रेण मन्त्रयेत् ।

(स्वतन्त्रतन्त्रे)

रात्रौ मांसासवैर्देवीं पूजयित्वा विधानतः ।
ततो नग्नां स्त्रियं नग्नो रमन् क्लेदयुतोऽपि वा ॥
जपेल्लक्षं ततो देवीं होमयेज्ज्वलितानले ।
योनिकुण्डे स्थितं सर्पिर्मत्स्यं मांसं फलं तथा ॥
दशांशं तर्पयेन्मद्यं मांसमिश्रैस्तु साधकः ।
तर्पणस्य दशांशं तु अभिषिञ्च्य जगन्मयीम् ॥
दशांशं भोजयेत् साधु साधकं कालिकाप्रियम् ।
मद्यं मांसं च मत्स्यं च चर्वणं च प्रदापयेत् ॥
ततस्तु तोषयेद्भक्त्या गुरुं स्वर्णादिभिः प्रिये ।

गगनं विन्दुसंयुक्तं लाङ्गलीशं तथैव च ॥
सविसर्गं वरारोहे केशरेषु लिखेत् ततः ।
तत्राधारादि संपूज्य आसनं स्थापयेद्बुधः ॥
उपविश्यासने वीरो यत्र कुत्राप्यचूडके ।
पार्ष्णिघातत्रयं कुर्याच्छोटिकात्रितयं ततः ॥
दिग्बन्धमस्त्रमन्त्रेण पूर्वादिक्रमतो बुधः ।
वकेशान्ते पिनाकीशं नादविन्दुविभूषितम् ॥
पशुपदं समुच्चार्य रमान्तेऽस्त्रमनूत्तमम् ।
पाशुपताख्यविद्येयं सर्वविघ्नविनाशिनी ॥

वकेशः शकारः । पिनाकीशो लकारः ।

भूतशुद्धिं विधायादौ न्यासपूर्वं विधानतः ।

तथा—

गोमयेन विलिप्तायां भूमौ मण्डलमालिखेत् ।
अलिना लेपनं कुर्याद्यक्षकर्दमकेन वा ॥
सूत्रेण सूत्रितं पद्मं समसूत्रं मनोहरम् ।
रक्तं श्वेतं हरिद्वर्णं कृष्णपत्रं सुकेशरम् ॥
चतुरस्रं सुशोभाढ्यं तन्मध्ये योनियुग्मकम् ।
त्रिकोणं चैव तन्मध्ये शून्ये शून्यं विचिन्तयेत् ॥
योजयेद्दीपितां नारीं तत्र संपूजयेन्मनुम् ।
तत्रैव देवीं संस्थाप्य ईषद्धासां सुलोचनाम् ॥
षोडशाब्देन युवतीमप्रसूतां तपस्विनीम् ।
स्वाधीनां स्वच्छवस्त्रां च भीतिहीनाट्टहासिनीम् ॥
तीव्रशुद्धिं दृढाचारां मुक्तकेशीं दिगम्बराम् ।
योगमुद्राधरां वाऽपि योगाचारपरायणाम् ॥

ईदृशीं मन्त्रसंयुक्तां यागकाले प्रपूजयेत् ।
मातङ्गीं तन्तुकारीं च भवाब्धिभीतिनाशिनीम् ॥
षट्वाकारीं चर्मकारीं शिल्पिनीं नापिताङ्गनाम् ।
हट्टनारीं विशेषात् तु सुपुष्पकेण कोमलाम् ॥
सामान्यार्घं विशेषार्घ स्वपात्रं शक्तिपात्रकम् ।
तन्मध्ये निःक्षिपेद्द्रव्यं सामरस्यामृतोद्भवम् ॥
तत्त्वपञ्चकमन्त्रेण एकैकं शोधयेद्बुधः ।
वह्निसूर्यकलाचन्द्रकलान्ते हृदयं मनुम् ॥
त्रिकोणं विलिखेन्मध्ये त्रिकोणमकथादिकम् ।
खान्तं षान्तं तथा नान्तं यान्तं धान्तं सशत्रुकम् ॥
वामकर्णसमायुक्तं विन्दुनादैरलङ्कृतम् ।
रत्नेश्वरीति विद्याख्यं पञ्चरत्नात्मकं मनुम् ॥
षडङ्गेनैव संपूज्य मूलमन्त्रेण मन्त्रयेत् ।

(स्वतन्त्रतन्त्रे)

रात्रौ मांसासवैर्देवीं पूजयित्वा विधानतः ।
ततो नग्नां स्त्रियं नग्नो रमन् क्लेदयुतोऽपि वा ॥
जपेल्लक्षं ततो देवीं होमयेज्ज्वलितानले ।
योनिकुण्डे स्थितं सर्पिर्मत्स्यं मांसं फलं तथा ॥
दशांशं तर्पयेन्मद्यं मांसमिश्रैस्तु साधकः ।
तर्पणस्य दशांशं तु अभिषिञ्च्य जगन्मयीम् ॥
दशांशं भोजयेत् साधु साधकं कालिकाप्रियम् ।
मद्यं मांसं च मत्स्यं च चर्वणं च प्रदापयेत् ॥
ततस्तु तोषयेद्भक्त्या गुरुं स्वर्णादिभिः प्रिये ।

(तन्त्रशेखरे)

एवं प्रकुर्वतस्तस्य प्रथमे वत्सरत्रये ।
भवन्ति बहवो विघ्नाः श्रद्धाभावादयोऽशुभाः ॥
अस्मिन्नर्थे भवेन्मन्त्री यदि नोद्विग्नमानसः ।
सेत्स्यतीति च विश्वस्तस्तदाऽसौ सिद्धिभाग्भवेत् ॥

(कालीकल्पे)

न न्यासो योषितां तत्र न पूजा नापि चिन्तनम् ।
रात्रौ जपैकमात्रेण सिद्धिदा दक्षिणा भवेत् ॥
नवमाद्वत्सरादूर्ध्वं स्वयं सिद्ध्यति मन्त्रराट् ।

इति वीरपुरश्चरणविधिः ।

( मेरुतन्त्रे )

वाममार्गे द्रुतं सिद्धिः कर्मणा येन जायते ।
तदहं संप्रवक्ष्यामि सूक्ष्मसाधनमद्भुतम् ॥
अष्टम्यां वा चतुर्दश्यां कृष्णायां भौमवासरे ।
गृहीत्वा नृकपालं तु मद्यं मांसं तथोदनम् ॥
कुल्माषान् मिश्रितान् कृत्वा गच्छेदश्वत्थभूमिकाम् ।
एकान्ते निर्जने तस्य तले संलिप्य भूमिकाम् ॥
दण्डमात्रानष्टदिक्षु कीलान्मूलेन पूरयेत् ।
अष्टोत्तरसहस्रेण सप्ततन्तुकडोरकम् ॥
निबन्धयेत् तत्र पूजां देवतायाः समाचरेत् ।
देवीं तु हृदि संस्थाप्य तस्मिन् स्थाने सुदीपकम् ॥
कुर्याच्च नरतैलेनाभावे कपिलहव्यकैः ।
तदभावे तु तैलेन कुडवप्रमितेन च ॥
दीपं कुर्यादष्टशतसूत्राणां वर्त्तिका मता ।

तस्योपरि कपालं तत्कज्जलार्थं निवेशयेत् ॥
दीपं दृष्ट्वा जपेन्मन्त्रं नान्यतस्तु विलोकयेत् ।
अर्धे प्रज्वलिते तैले भूतप्रेतपिशाचकाः ॥
नानारूपा भिन्नशब्दाः साधकं भीषयन्ति ते ।
न भेतव्यं तदन्तं तु वामहस्तेन निःक्षिपेत् ॥
तेषामग्रे नान्यदृष्टिः प्रपश्येद्दीपमेव हि ।
किञ्चिच्छेषे दीपतैले देवी सा वरदा भवेत् ॥
तस्यै तत्र बलिं दत्वा श्रुत्वा संयाचयेद्वरम् ।
पूर्वकर्मविपाकेन यदि नायाति देवता ॥
दीपान्ते कज्जलं ग्राह्यं तत्र देवीं प्रपज्य च ।
आनयेत् तद्गृहे सिद्धं दत्वाऽक्ष्णोः स्याज्जगद्वशम् ॥
दत्वाऽक्ष्णोः कज्जलं तच्च प्रयोगानाचरेत् ततः ।
सर्वं एवं प्रसिद्ध्यन्ति लोलुपे न गुरौ सति ॥
रक्षयेदञ्जनं सम्यङ्गो चेद्भक्षति भैरवः ।

तत्रैव ।

अथातः संप्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ।
सर्व*सिद्धिकरं दीपं न वाच्यं यस्य कस्य चित् ॥
शक्त्याद्यर्हगणार्केषु भक्तो वर्णाः प्रजायते ।
मन्त्रवर्णस्य दिवसे क्रमाद्दीपं प्रकल्पयेत् ॥
सायं तु कुडवाज्यस्य वर्त्तिर्भूपञ्चतन्तुभिः ।
यावज्ज्वलति दीपोऽसौ तावत् पश्यन्मनुं जपेत् ॥
मन्त्रार्णसङ्ख्यदीपेषु ज्वलितेष्वथ तद्दिने ।

---

* मन्त्रसिद्धिकरमिति २—४ पु. पा. ।

३५

(तन्त्रशेखरे)

एवं प्रकुर्वतस्तस्य प्रथमे वत्सरत्रये ।
भवन्ति बहवो विघ्नाः श्रद्धाभावादयोऽशुभाः ॥
अस्मिन्नर्थे भवेन्मन्त्री यदि नोद्विग्नमानसः ।
सेत्स्यतीति च विश्वस्तस्तदाऽसौ सिद्धिभाग्भवेत् ॥

(कालीकल्पे)

न न्यासो योषितां तत्र न पूजा नापि चिन्तनम् ।
रात्रौ जपैकमात्रेण सिद्धिदा दक्षिणा भवेत् ॥
नवमाद्वत्सरादूर्ध्वं स्वयं सिद्ध्यति मन्त्रराट् ।

इति वीरपुरश्चरणविधिः ।

( मेरुतन्त्रे )

वाममार्गे द्रुतं सिद्धिः कर्मणा येन जायते ।
तदहं संप्रवक्ष्यामि सूक्ष्मसाधनमद्भुतम् ॥
अष्टम्यां वा चतुर्दश्यां कृष्णायां भौमवासरे ।
गृहीत्वा नृकपालं तु मद्यं मांसं तथोदनम् ॥
कुल्माषान् मिश्रितान् कृत्वा गच्छेदश्वत्थभूमिकाम् ।
एकान्ते निर्जने तस्य तले संलिप्य भूमिकाम् ॥
दण्डमात्रानष्टदिक्षु कीलान्मूलेन पूरयेत् ।
अष्टोत्तरसहस्रेण सप्ततन्तुकडोरकम् ॥
निबन्धयेत् तत्र पूजां देवतायाः समाचरेत् ।
देवीं तु हृदि संस्थाप्य तस्मिन् स्थाने सुदीपकम् ॥
कुर्याच्च नरतैलेनाभावे कपिलहव्यकैः ।
तदभावे तु तैलेन कुडवप्रमितेन च ॥
दीपं कुर्यादष्टशतसूत्राणां वर्त्तिका मता ।

तस्योपरि कपालं तत्कज्जलार्थं निवेशयेत् ॥
दीपं दृष्ट्वा जपेन्मत्रं नान्यतस्तु विलोकयेत् ।
अर्धे प्रज्वलिते तैले भूतप्रेतपिशाचकाः ॥
नानारूपा भिन्नशब्दाः साधकं भीषयन्ति ते ।
न भेतव्यं तदन्तं तु वामहस्तेन निःक्षिपेत् ॥
तेषामग्रे नान्यद्दृष्टिः प्रपश्येद्दीपमेव हि ।
किञ्चिच्छेषे दीपतैले देवी सा वरदा भवेत् ॥
तस्यै तत्र बलिं दत्वा श्रुत्वा संयाचयेद्वरम् ।
पूर्वकर्मविपाकेन यदि नायाति देवता ॥
दीपान्ते कज्जलं ग्राह्यं तत्र देवीं प्रपज्य च ।
आनयेत् तद्गृहे सिद्धं दत्वाऽक्ष्णोः स्याज्जगद्वशम् ॥
दत्वाऽक्ष्णोः कज्जलं तच्च प्रयोगानाचरेत् ततः ।
सर्व एवं प्रसिद्ध्यन्ति लोलुपे न गुरौ सति ॥
रक्षयेदञ्जनं सम्यङ्नो चेद्भक्षति भैरवः ।

तत्रैव ।

अथातः संप्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ।
सर्व*सिद्धिकरं दीपं न वाच्यं यस्य कस्य चित् ॥
शक्त्याद्यर्हगणार्केषु भक्तो वर्णः प्रजायते ।
मन्त्रवर्णस्य दिवसे क्रमाद्दीपं प्रकल्पयेत् ॥
सायं तु कुडवाज्यस्य वर्त्तिर्भूपञ्चतन्तुभिः ।
यावज्ज्वलति दीपोऽसौ तावत् पश्यन्मनुं जपेत् ॥
मन्त्रार्णसङ्ख्यदीपेषु ज्वलितेष्वथ तद्दिने ।

---

* मन्त्रसिद्धिकरमिति २—४ पु. पा. ।

पुनर्दीपे कृते सा तु दीपे संदृश्यते स्फुटा ॥
इष्टं स्वकीयं कथयेद्याचयेन्मनसेप्सितम् ।
ददाति देवता तुष्टा गुह्यमेतत् प्रकाशितम् ॥

अथ दूतीयागविधिः ।

(रुद्रयामले)

दूतीयागस्य विधिना रममाणो वरस्त्रिया ।
जप्त्वा मन्त्रं साधकेन्द्रः सद्यः सिद्धिमवाप्नुयात् ॥

तन्त्रान्तरे ।

पुरुषेण विना किञ्चित् प्रकृत्या क्रियते न हि ।
तथा शक्तिं विना देवः फलं दातुं क्षमो न हि ॥
तस्मात् पुंशक्तिसंयोगं कृत्वा मन्त्रं प्रसाधयेत् ।

( कुमारीतन्त्रे )

नटी कपालिनी वेश्या रजकी नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ॥
मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः ।
एतासु कां चिदानीय ततस्तद्योनिमण्डले ॥
पूजयित्वा महादेवीं ततो मैथुनमाचरेत् ।

(देवीयामले)

अथ पूजाफलं वक्ष्ये उत्तरोत्तरगोचरम् ।
स्वशक्त्या अयुतं पुण्यं परशक्तिप्रपूजने ॥
ततो वेश्याऽधिका ज्ञेया रजकी च ततोऽधिका ।
रजक्याः क्षुरकी श्रेष्ठा क्षुरक्याश्चर्मकारिणी ॥
ततोऽधिकतरा प्रोक्ता हेतुनारी वरानने ।
ततोऽप्यन्तजसम्भूता चाण्डाली च ततोऽधिका ॥
ततो मातङ्गिनी श्रेष्ठा मातङ्ग्याः पुष्कशी तथा ।

पुष्कश्या अन्त्यजा श्रेष्ठा ततोऽतिसुन्दरी स्मृता ॥
सुन्दरी परतः प्रोक्ता प्रीतिमत्यनुरागिणी ।
तत्परा परमेशानि उन्मत्ता शुभलक्षणा ॥
समयाचारसंपन्ना मन्त्रज्ञा भयवर्जिता ।
विदग्धा त्वप्रसूता च धैर्यस्वातन्त्र्यसंयुता ॥
एवंगुणसमायुक्ताः पूजयेत् सर्वयोषितः ।

(महाकालसंहितायाम्)

ऋषिकन्यां न चाकर्षेन्मद्यपानां च कन्यकाम् ।
द्विजातीनां स्त्रियं चापि व्रतस्थानां स्त्रियं तथा ॥
गुर्वङ्गनां गुरोः पत्नीं सगोत्रां शरणागताम् ।
शिष्ययोषां न चाकर्षेत् पापिनां वनितां तथा ॥
नापुष्पितां गुर्विणीं वा बालापत्यां तथा पुनः ।

(देवीयामले)

आत्मीया च परा चैव शक्तिमात्रं महेश्वरि ।
मन्त्राधिदेवताबुद्ध्या पूज्याः सर्वोपचारकैः ॥
विविधैः फलताम्बूलैर्वस्त्रालङ्कारहेमभिः ।
संपूज्य विधिवद्भक्त्या बहुहेतुं प्रदापयेत् ॥
संभोगवासनां कृत्वा यः कुर्याच्छक्तिपूजनम् ।
स दारिद्र्यमवाप्नोति नारकी च भवेद्ध्रुवम् ॥

(वीरचूडामणावपि)

आनीय युवतीं रम्यां कुलकर्मविलासिनीम् ।
षोडशाब्देन युवतीं पीतोन्नतपयोधराम् ॥
उन्मत्तां मत्तमातङ्गीं सदा घूर्णितलोचनाम् ।
मृगशावकनेत्रां च सारङ्गीं मृदुहासिनीम् ॥

पुनर्दीपे कृते सा तु दीपे संदृश्यते स्फुटा ॥
इष्टं स्वकीयं कथयेद्याचयेन्मनसेप्सितम् ।
ददाति देवता तुष्टा गुह्यमेतत् प्रकाशितम् ॥

अथ दूतीयागविधिः ।

(रुद्रयामले)

दूतीयागस्य विधिना रममाणो वरस्त्रिया ।
जप्त्वा मन्त्रं साधकेन्द्रः सद्यः सिद्धिमवाप्नुयात् ॥

तन्त्रान्तरे ।

पुरुषेण विना किञ्चित् प्रकृत्या क्रियते न हि ।
तथा शक्तिं विना देवः फलं दातुं क्षमो न हि ॥
तस्मात् पुंशक्तिसंयोगं कृत्वा मन्त्रं प्रसाधयेत् ।

( कुमारीतन्त्रे )

नटी कपालिनी वेश्या रजकी नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ॥
मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः ।
एतासु कां चिदानीय ततस्तद्योनिमण्डले ॥
पूजयित्वा महादेवीं ततो मैथुनमाचरेत् ।

(देवीयामले)

अथ पूजाफलं वक्ष्ये उत्तरोत्तरगोचरम् ।
स्वशक्त्या अयुतं पुण्यं परशक्तिप्रपूजने ॥
ततो वेश्याऽधिका ज्ञेया रजकी च ततोऽधिका ।
रजक्याः क्षुरकी श्रेष्ठा क्षुरक्याश्चर्मकारिणी ॥
ततोऽधिकतरा प्रोक्ता हेतुनारी वरानने ।
ततोऽप्यन्तजसम्भूता चाण्डाली च ततोऽधिका ॥
ततो मातङ्गिनी श्रेष्ठा मातङ्ग्याः पुष्कशी तथा ।

पुष्कश्या अन्त्यजा श्रेष्ठा ततोऽतिसुन्दरी स्मृता ॥
सुन्दरी परतः प्रोक्ता प्रीतिमत्यनुरागिणी।
तत्परा परमेशानि उन्मत्ता शुभलक्षणा ॥
समयाचारसंपन्ना मन्त्रज्ञा भयवर्जिता।
विदग्धा त्वप्रसूता च धैर्यस्वातन्त्र्यसंयुता ॥
एवंगुणसमायुक्ताः पूजयेत् सर्वयोषितः।

(महाकालसंहितायाम्)

ऋषिकन्यां न चाकर्षेन्मद्यपानां च कन्यकाम्।
द्विजातीनां स्त्रियं चापि व्रतस्थानां स्त्रियं तथा ॥
गुर्वङ्गनां गुरोः पत्नीं सगोत्रां शरणागताम्।
शिष्ययोषां न चाकर्षेत् पापिनां वनितां तथा ॥
नापुष्पितां गुर्विणीं वा बालापत्यां तथा पुनः।

(देवीयामले)

आत्मीया च परा चैव शक्तिमात्रं महेश्वरि।
मन्त्राधिदेवताबुद्ध्या पूज्याः सर्वोपचारकैः ॥
विविधैः फलताम्बूलैर्वस्त्रालङ्कारहेमभिः।
संपूज्य विधिवद्भक्त्या बहुहेतुं प्रदापयेत् ॥
संभोगवासनां कृत्वा यः कुर्याच्छक्तिपूजनम्।
स दारिद्र्यमवाप्नोति नारकी च भवेद्ध्रुवम् ॥

(वीरचूडामणावपि)

आनीय युवतीं रम्यां कुलकर्मविलासिनीम्।
षोडशाब्देन युवतीं पीतोन्नतपयोधराम् ॥
उन्मत्तां मत्तमातङ्गीं सदा घूर्णितलोचनाम्।
मृगशावकनेत्रां च सारङ्गीं मृदुहासिनीम् ॥

क्रोधलोभदयादम्भमोहमायाविवर्जिताम् ।
स्वामिधर्मरतां सत्यवादिनीं च सदा शुचिम् ॥
गणिकां नटीं चाण्डालीं जीविनीं जारजामथ ।
योगमुद्राधरां गोपीं चर्मकारीं च चित्रिणीम् ॥
चतुर्वर्णसमायुक्तामुत्तमां पर्वतोद्भवाम् ।

महाकालः ।

स्नातां दिव्याम्बरधरां नानालङ्कारभूषिताम् ।
युवतीं पीनवक्षोजां तथा चाकृतिभोजनाम् ॥
हस्ते गृहीत्वा वामोरौ स्थापयेच्छक्तिमुत्तमाम् ।
अशक्नुवानो वोढुं तां देवीं वामेऽथ वाऽऽसने ॥

(वीरचूडामणौ)

वामभागे समालिख्य त्रिकोणं पद्मवर्त्तुलम् ।
श्वेतरक्तसमायुक्तं नीलं सिन्दूरचर्चितम् ॥
साधकः प्राङ्मुखो भूत्वा देवीं प्रत्यङ्मुखां जपेत् ।
पीठशक्तिं विधानेन नव शक्तीः प्रपूजयेत् ॥
रतिः प्रीतिः प्रिया कान्तिः कामिनी काममालिनी ।
कन्दर्पदलिनी दुर्गा भाविनी नव शक्तयः ॥
वियद्भृगुं समुच्चार्य मनुविन्दुकलान्वितम् ।
महाप्रेतपदं पश्चाद्धृदयान्तमिमं मनुम् ॥
मूलं मन्त्रं समुच्चार्य संबुद्ध्या तारिणीपदम् ।
एह्येहि च पदं पश्चात् पादुकाभ्यां पुनः पुनः ॥
गृहीत्वा वामहस्तेन आसने चोपवेशयेत् ।

तारिणीपदमित्युपलक्षणं स्वेष्टदेवतानामेत्यर्थः ।

तथा—

रक्तचन्दनलिप्ताङ्गीं रक्तपुष्पविभूषिताम् ।

सर्वालङ्कारसंयुक्तां विवस्त्रां पूजयेत् प्रिये ॥
वारुणीमदमत्तां च हावभावसमावृताम् ।
यावदाकण्ठपर्यन्तं तावत् पानं प्रदापयेत् ॥
ध्यानं कुर्यान्महेशानि गह्वरे मकरानने ।
ताम्रचूडसमाकारं गजवक्त्रसमप्रभम् ॥
तत्रस्थां चिन्तयेद्देवीं विद्यां भुवनमोहनीम् ।
तारं वै हृदयान्ते च पश्चान्मदनमन्दिरम् ॥
चतुर्थ्यन्तं जपेद्देवि भगे पुष्पं विनिःक्षिपेत् ।
प्रक्षाल्य कुलद्रव्येण गन्धपुष्पैः समर्चयेत् ॥
धूपदीपादिकं कृत्वा पश्चादावरणं यजेत् ।
इच्छा ज्ञाना क्रिया पश्चाद्वामा ज्येष्ठा च रौद्रिका ॥
रतिः प्रीतिस्तथा कामं पुष्पबाणधनुर्धरम् ।
वसन्तं पूजयेत् पश्चात् पत्राङ्कुरसमन्वितम् ।
चिकुरं पूजयेद् देवि अलिस्यन्दसमन्वितम् ॥
विरिञ्चिं पूजयेन्नाभौ हृदये च हरं हरिम् ॥
स्तने वक्त्रे महेशानि त्रिमूर्त्तिं पूजयेत् ततः ।
कामेशीं चैव विश्वेशीं परां तु भगमालिनीम् ॥
भ्रुवोर्मूले महेशानि पञ्चबाणान् प्रपूजयेत् ।
द्रामाद्यां द्राविणीं मूर्ध्नि द्रीमाद्यां क्षोभिणीपदम् ॥
क्लीँ वशीकरणीं वक्त्रे गुह्ये ब्लूँ बीजपूर्विकाम् ।
आकर्षिणीं हृदि पुनः सर्गान्तभृगुसंयुताम् ॥
संमोहिनीं क्रमादेवं बाणपूजनमीरितम् ।
कर्णयोः पूजयेच्चक्रे भानुं चन्द्रं क्रमेण च ॥

रसनायां वह्निः पूज्यो नेत्रे नक्षत्रमालिनी ।
प्राणं संपूजयेद्घ्राणे आज्ञायां त्रिपथगामिनीम् ॥
अक्षोभ्यं पूजयेन्मूर्ध्नि गन्धपुष्पोपहारकैः ।
पुष्पमालां गले दद्यादथ शक्त्या जपेद्बुधः ॥

अक्षोभ्यं पूजयेदिति ताराविषये ।
(ज्ञानार्णवे)

पञ्चमं गजदन्तस्य हेमरूप्यादिनिर्मितम् ।
विशुद्धक्षौमरचितां तूलिकां तत्र योजयेत् ॥
पुष्पाण्याकीर्य मध्ये तु कर्पूरस्य रजस्तथा ।
मण्डूकादींस्तत्र देवि उपर्युपरि शैलजे ॥
मण्डूकं पूजयेदादौ रुद्रं कालाग्निसन्निभम् ।
आधारशक्तिं कूर्मं च तथाऽनन्तं वराहकम् ॥
पृथिवीं च तथा कन्दं नालं पद्मं दलं तथा ।
केशरालीश्च संपूज्य कर्णिकां पूजयेत् ततः ॥
मञ्चकं च समभ्यर्च्य तत्र पादचतुष्टये ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च क्रमाद्यजेत् ॥
अपूर्वान् पूजयेदेतांस्तत्पादानां समीपके ।
आत्मान्तरात्मपरमज्ञानात्मनः प्रपूजयेत् ॥
मञ्चकाग्रेषु संपूज्य गुणत्रयमथार्चयेत् ।
दूतीं सुलक्षणां रम्यां सर्वलक्षणलक्षिताम् ॥
नानालङ्कारसुभगां स्ववशां शारदामिव ।
पूजयेत् परमेशानि पञ्चकामशरैस्तथा ॥
वटुकादींश्चतुर्दिक्षु पूजयेत् सिद्धिहेतवे ।
मातृकां विन्यसेत् तस्माद्देहे कामशरान्विताम् ॥

त्रिकोणां विन्यसेन्मूर्ध्नि तत्र पूजां यजेत् क्रमात् ।
त्रिकोणमध्ये बालाख्यां कामेशीं परिपूजयेत् ॥
गणेशं च कुलाध्यक्षं तथा लक्ष्मीं सरस्वतीम् ।
त्रिकोणेषु च संपूज्य वसन्तं मदनं प्रिये ॥
स्तनयोः पूजयेत् पश्चान्मुखे तस्याः कलाधरम् ।
वाग्भवं कामराजं च स्त्रीबीजं कामराजकम् ॥
हसक्लेमात्मकं दत्वा आधारशक्तिमुच्चरेत् ।
श्रीपादुकां ततो दत्वा पूजयामि वदेत् ततः ॥
अनेन मनुना तस्य ललाटे सुमुनोहरम् ।
त्रिकोणं तत्र संलिख्य सिन्दूराद्यैर्विशेषतः ॥
वटुकं योगिनीं चैव क्षेत्रपालं गणेश्वरम् ।
लक्ष्मीं सरस्वतीं चैव पूजयेत् तत्र सुन्दरि ॥
कामबीजं समुच्चार्य कामराजं ततः परम् ।
श्रीपादुकां ततो दत्वा पूजयामि वदेत् ततः ॥
दक्षपादतले देवि पूजयेन्मनुनाऽमुना ।
वँ वसन्तं समुच्चार्य नादहीनारमाततः ॥
पादुकां पूजयामीति तस्या वामकरे न्यसेत् ।
शक्तिबीजं समुच्चार्य सोमपादपदं ततः ॥
श्रीपादुकां ततो दत्वा पूजयामि स्तनद्वये ।
आरोहक्रमतः कामकलान्यासं चरेत् सुधीः ॥

(स्मरदीपिकायाम्)

पादे गुल्फे तथोरौ च भगे नाभौ कुचे हृदि ।
कण्ठे कक्षे तथौष्ठे च गण्डे नेत्रे श्रुतावपि ॥

शीर्षे सर्वशरीरं च वसेत् कामः स्थितिक्रमात् ।

इति स्थानान्युक्तानि ।

कलानां नामानि तु तन्त्रे ।

श्रद्धा प्रीती रतिश्चैव धृतिः शान्तिर्मनोहरा ।
मनोरमा मनोरामा मदनोन्मादिनीति च ॥
मोहिनी दीपनी चैव शोषिणी च वशङ्करी ।
रञ्जिनी सुभगा देवी षोडशी प्रियदर्शना ॥
अकारादिस्वरैरर्च्याः कलाः कुसुमधन्वनः ।
पूषाऽर्यमा सुमनसा रतिः प्रीतिस्तथा धृतिः ॥
ऋद्धिः सौम्या मरीचिश्च दशमी चांशुमालिनी ।
अङ्गिरा शशिनी चैव च्छाया संपूर्णमण्डला ॥
पुष्टिश्चैवामृता चेति कला सोमस्य षोडश ।
अकारादिस्वरयुताः पूजनीया मनीषिभिः ॥
दक्षपादादि मूर्धान्तं वामे मूर्धादि सुन्दरि ।
पादान्तं पूजयेत् सर्वाः कला वै कामसोमयोः ॥

तन्त्रान्तरे ।

पृष्ठवंशात् समारभ्य शिरोऽन्तं कामवाचकम् ।
विन्यस्य विधिवन्मन्त्री पूजयेत् तत् तु मूर्धनि ॥
धर्मात्मकं समुच्चार्य कामचापपदं ततः ।
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ॥
मूर्ध्नि पादे मुखे गुह्ये हृदये च यथाक्रमात् ।
पञ्चबाणैः पञ्चबाणान् यथास्थानेषु पूजयेत् ॥
द्राँ द्रावणपदं दत्वा बाणपादपदं ततः ।
श्रीपादुकां वदेत् पश्चात् पूजयामीति पूजयेत् ॥

ह्रीमात्मकं समुच्चार्य उन्मादबाणमुच्चरेत् ।
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ॥
कामबीजं ततो दत्वा मोहबाणपदं ततः ।
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ॥
ब्रह्मात्मकं समुच्चार्य संदीपनपदं ततः ।
बाणपादपदं दत्वा श्रीपादुकां ततो वदेत् ॥
पूजयामीति संपूज्य शेषे बाणं समुच्चरेत् ।
शोषणं च समालिख्य बाणपादपदं ततः ॥
श्रीपादुकां ततो दत्वा पूजयामीति पूजयेत् ।
ललाटमण्डले पश्चात् त्रिकोणं पूजयेत् ततः ॥
वाग्भवं शुभपादं च श्रीपादुकां ततो वदेत् ।
पूजयामि ततो दत्वा दक्षरेखासु पूजयेत् ॥
ह्रीमात्मकं समुच्चार्य भगपादपदं ततः ।
श्रीपादुकां ततो दत्वा पूजयामीति पश्चिमे ॥
कामबीजं समुच्चार्य भगसर्पिःपदं ततः ।
श्रीपादश्रीपदं दत्वा पादुकां च ततो वदेत् ॥
पूजयामीति चोच्चार्य पूजयेद्वामपार्श्वके ।
ह्सौँरात्मकमालिख्य भगावहपदं ततः ॥
पादश्रीपादुकां दत्वा पूजयेन्मध्यदेशतः ।
श्रीउड्डीशपदं दत्वा देवीमुड्डीश्वरीं ततः ॥
नाथदेवपदं दत्वा श्रीरक्ताम्बां ततो वदेत् ।
श्रीचर्यानाथमालिख्य पादश्रीपादुकां ततः ॥
पूजयामीत्युड्डियाने पूजयेद्धृदि सुव्रते ।

शीर्षे सर्वशरीरं च वसेत् कामः स्थितिक्रमात् ।

इति स्थानान्युक्तानि ।

कलानां नामानि तु तन्त्रे ।

श्रद्धा प्रीती रतिश्चैव धृतिः शान्तिर्मनोहरा ।
मनोरमा मनोरामा मदनोन्मादिनीति च ॥
मोहिनी दीपनी चैव शोषिणी च वशङ्करी ।
रञ्जिनी सुभगा देवी षोडशी प्रियदर्शना ॥
अकारादिस्वरैरर्च्याः कलाः कुसुमधन्वनः ।
पूषाऽर्यमा सुमनसा रतिः प्रीतिस्तथा धृतिः ॥
ऋद्धिः सौम्या मरीचिश्च दशमी चांशुमालिनी ।
अङ्गिरा शशिनी चैव च्छाया संपूर्णमण्डला ॥
पुष्टिश्चैवामृता चेति कला सोमस्य षोडश ।
अकारादिस्वरयुताः पूजनीया मनीषिभिः ॥
दक्षपादादि मूर्धान्तं वामे मूर्धादि सुन्दरि ।
पादान्तं पूजयेत् सर्वाः कला वै कामसोमयोः ॥

तन्त्रान्तरे ।

पृष्ठवंशात् समारभ्य शिरोऽन्तं कामवाचकम् ।
विन्यस्य विधिवन्मन्त्री पूजयेत् तत् तु मूर्धनि ॥
धर्मात्मकं समुच्चार्य कामचापपदं ततः ।
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ॥
मूर्ध्नि पादे मुखे गुह्ये हृदये च यथाक्रमात् ।
पञ्चबाणैः पञ्चबाणान् यथास्थानेषु पूजयेत् ॥
द्राँ द्रावणपदं दत्वा बाणपादपदं ततः ।
श्रीपादुकां वदेत् पश्चात् पूजयामीति पूजयेत् ॥

द्रीमात्मकं समुच्चार्य उन्मादबाणमुच्चरेत् ।
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ॥
कामबीजं ततो दत्वा मोहबाणपदं ततः ।
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ॥
ब्रह्मात्मकं समुच्चार्य संदीपनपदं ततः ।
बाणपादपदं दत्वा श्रीपादुकां ततो वदेत् ॥
पूजयामीति संपूज्य शेषे बाणं समुच्चरेत् ।
शोषणं च समालिख्य बाणपादपदं ततः ॥
श्रीपादुकां ततो दत्वा पूजयामीति पूजयेत् ।
ललाटमण्डले पश्चात् त्रिकोणं पूजयेत् ततः ॥
वाग्भवं शुभपादं च श्रीपादुकां ततो वदेत् ।
पूजयामि ततो दत्वा दक्षरेखासु पूजयेत् ॥
द्रीमात्मकं समुच्चार्य भगपादपदं ततः ।
श्रीपादुकां ततो दत्वा पूजयामीति पश्चिमे ॥
कामबीजं समुच्चार्य भगसर्पिःपदं ततः ।
श्रीपादश्रीपदं दत्वा पादुकां च ततो वदेत् ॥
पूजयामीति चोच्चार्य पूजयेद्वामपार्श्वके ।
ह्सौँरात्मकमालिख्य भगावहपदं ततः ॥
पादश्रीपादुकां दत्वा पूजयेन्मध्यदेशतः ।
श्रीउड्डीशपदं दत्वा देवीमुड्डीश्वरीं ततः ॥
नाथदेवपदं दत्वा श्रीरक्ताम्बां ततो वदेत् ।
श्रीचर्यानाथमालिख्य पादश्रीपादुकां ततः ॥
पूजयामीत्युड्डियाने पूजयेद्धृदि सुव्रते ।

३६

श्रीपादं च समालिख्य जालन्धरपदं ततः ॥
महापीठं समालिख्य नादहीना रमा ततः ।
जालेश्वरीपदं दत्वा देवीजालीशमालिखेत् ॥
नाथदेवपदं दत्वा श्रीजालाम्बापदं ततः ।
श्रीषष्ठीशपदं दत्वा नाथदेवपदं ततः ॥
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ।
अनेन मनुना देवि पूजयेन्नाभिमण्डले ॥
श्रीपदं च ततो दत्वा पूर्णेश्वरीं वदेत् ततः ।
देवीश्रीपादश्रीपूर्णनाथदेवपदं तथा ॥
श्रीचामुण्डापदमाभाष्य देवीश्रीपदमालिखेत् ।
उड्डीशनाथमालिख्य देवपादपदं ततः ॥
श्रीपादुकां ततो दत्वा कामेश्वरीपदं ततः ।
देवीश्रीपदमाभाष्य कामेश्वरानन्दनाथ च ॥
श्रीमहापदमाभाष्य तुष्टाम्बाश्रीपदं ततः ।
मित्रीशनाथमाभाष्य पादश्रीपादुकां ततः ॥
पूजयामि ततो दत्वा पूजयेत् कामनाशने ।

तन्त्रान्तरे ।

शक्तेः सर्वशरीरं यत् पीठं पूर्णगिरिर्मतः ।
तस्याः शिरश्चन्द्रभागे उद्यानं परिकीर्त्तितम् ॥
स्तनौ जालन्धरं प्रोक्तं कामरूपं भगं स्मृतम् ।

तन्त्रान्तरे ।

गुह्यपीठस्य वामे तु गुरुपाङ्क्तिं जपेत् सुधीः ।
अनङ्गकुसुमाद्येन हृत्सरोजे यजेत् पुनः ॥
वाग्भवं क्लौँ समुच्चार्य क्लीमात्मकं वदेत् ततः ।

क्लाँ क्लीँ क्लुँः समुच्चार्य मन्त्रेणानेन साधकः ॥
योनिमुद्रां प्रदर्श्याथ योनौ क्षोभं विचिन्तयेत् ।
वाग्भवं कामराजं च स्त्रीबीजं तदनन्तरम् ॥
क्षोभिणी नाम विद्येयं स्तनयोः क्षोभमाचरेत् ।
योनिमुद्रां प्रदर्श्याथ शनैरेव हि साधकः ॥
वाग्भवं स्फ्रुँ समुच्चार्य क्लैँ क्लीँ क्लँ च ततो वदेत् ।
क्लीमात्मकं समुच्चार्य ह्लीमात्मकं समुच्चरेत् ॥
क्षमात्मकं ततो दत्वा तस्याः क्षोभं विचिन्तयेत् ।
द्राविणी नाम विद्येयं चिन्तयेद्योनिमध्यतः ॥
ततः परानन्दमयो भूत्वा निर्भरमानसः ।
चिन्तयेन्निजविद्याया बीजं मूर्ध्नि सरोजके ॥
ततस्तस्या योनिमध्ये मूलमन्त्रैश्च साधकः ।
पुष्पाञ्जलित्रयं दत्वा ततः क्षोभं विचिन्तयेत् ॥

(ज्ञानार्णवे)

दूतीदेहकृतान् न्यासान् स्वदेहेऽपि विचिन्तयेत् ।

(वीरचूडामणौ)

अथ न्यासं प्रवक्ष्यामि शिवात्मानं विभावयेत् ।

शिवात्मानमिति शिवमात्मानमित्यर्थः ।

तथा ।

पञ्चवक्त्रं महादेवं कलायुक्तं न्यसेत् क्रमात् ।
ईशानः सर्वविद्यानां शशिनी प्रथमा कला ॥
ईश्वरः सर्वभूतानामङ्गदा तदनन्तरम् ।
ब्रह्माधिपतिशब्दान्ते ब्रह्मणोऽधिपतिः पुनः ॥
ब्रह्मा सदाशिवो मेऽस्तु मरीचिसंपुटं न्यसेत् ।
सदाशिवोँ समुच्चार्य अंशुमालिन्यथापरा ॥

श्रीपादं च समालिख्य जालन्धरपदं ततः ॥
महापीठं समालिख्य नादहीना रमा ततः ।
जालेश्वरीपदं दत्वा देवीजालीशमालिखेत् ॥
नाथदेवपदं दत्वा श्रीजालाम्बापदं ततः ।
श्रीषष्ठीशपदं दत्वा नाथदेवपदं ततः ॥
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ।
अनेन मनुना देवि पूजयेन्नाभिमण्डले ॥
श्रीपदं च ततो दत्वा पूर्णेश्वरीं वदेत् ततः ।
देवीश्रीपादश्रीपूर्णनाथदेवपदं तथा ॥
श्रीचामुण्डापदमाभाष्य देवीश्रीपदमालिखेत् ।
उड्डीशनाथमालिख्य देवपादपदं ततः ॥
श्रीपादुकां ततो दत्वा कामेश्वरीपदं ततः ।
देवीश्रीपदमाभाष्य कामेश्वरानन्दनाथ च ॥
श्रीमहापदमाभाष्य तुष्टाम्बाश्रीपदं ततः ।
मित्रीशनाथमाभाष्य पादश्रीपादुकां ततः ॥
पूजयामि ततो दत्वा पूजयेत् कामनाशने ।

तन्त्रान्तरे ।

शक्तेः सर्वशरीरं यत् पीठं पूर्णगिरिर्मतः ।
तस्याः शिरश्चन्द्रभागे उद्यानं परिकीर्त्तितम् ॥
स्तनौ जालन्धरं प्रोक्तं कामरूपं भगं स्मृतम् ।

तन्त्रान्तरे ।

गुह्यपीठस्य वामे तु गुरुपाङ्क्तिं जपेत् सुधीः ।
अनङ्गकुसुमाद्येन हृत्सरोजे यजेत् पुनः ॥
वाग्भवं क्लौँ समुच्चार्य क्लीमात्मकं वदेत् ततः ।

ब्लाँ ब्लीँ ब्लुँः समुच्चार्य मन्त्रेणानेन साधकः ॥
योनिमुद्रां प्रदर्श्याथ योनौ क्षोभं विचिन्तयेत् ।
वाग्भवं कामराजं च स्त्रीबीजं तदनन्तरम् ॥
क्षोभिणी नाम विद्येयं स्तनयोः क्षोभमाचरेत् ।
योनिमुद्रां प्रदर्श्याथ शनैरेव हि साधकः ॥
वाग्भवं स्फ्रुँ समुच्चार्य ब्लैँ ब्लीँ ब्लँ च ततो वदेत् ।
क्लीमात्मकं समुच्चार्य ह्लीमात्मकं समुच्चरेत् ॥
क्षमात्मकं ततो दत्वा तस्याः क्षोभं विचिन्तयेत् ।
द्राविणी नाम विद्येयं चिन्तयेद्योनिमध्यतः ॥
ततः परानन्दमयो भूत्वा निर्भरमानसः ।
चिन्तयेन्निजविद्याया बीजं मूर्ध्नि सरोजके ॥
ततस्तस्या योनिमध्ये मूलमन्त्रैश्च साधकः ।
पुष्पाञ्जलित्रयं दत्वा ततः क्षोभं विचिन्तयेत् ॥

(ज्ञानार्णवे)

दूतीदेहकृतान् न्यासान् स्वदेहेऽपि विचिन्तयेत् ।

(वीरचूडामणौ)

अथ न्यासं प्रवक्ष्यामि शिवात्मानं विभावयेत् ।

शिवात्मानमिति शिवमात्मानमित्यर्थः ।

तथा ।

पञ्चवक्त्रं महादेवं कलायुक्तं न्यसेत् क्रमात् ।
ईशानः सर्वविद्यानां शशिनी प्रथमा कला ॥
ईश्वरः सर्वभूतानामङ्गदा तदनन्तरम् ।
ब्रह्माधिपतिशब्दान्ते ब्रह्मणोऽधिपतिः पुनः ॥
ब्रह्मा सदाशिवो मेऽस्तु मरीचिसंपुटं न्यसेत् ।
सदाशिवोँ समुच्चार्य अंशुमालिन्यथापरा ॥

तत्पुरुषाय विद्महे कला शान्तेरितीरिता ।
महादेवाय धीमहि कलाविद्या तथैव च ॥
तन्नो रुद्रपदं पश्चात् प्रतिष्ठा कथिता कला ।
प्रचोदयात् समुच्चार्य निवृत्तिः स्यात् ततः परम् ॥
पूर्वपश्चिमयाम्येषु उत्तरेष्वप्यनुक्रमात् ।
हृदये विन्यसेद्देवि अघोरेभ्यस्तमःकलाम् ॥
अघोरेभ्यो मोहनां च ग्रीवायां विन्यसेत् ततः ।
घोरान्ते स्यात् क्रियां पश्चाद्दक्षिणांसे प्रविन्यसेत् ॥
निद्रां घोरतरेभ्यो वै वामांसे विन्यसेत् ततः ।
सर्वतः सर्वमुच्चार्य व्याधिं नाभौ प्रविन्यसेत् ॥
सर्वेभ्यस्तत्कलां मृत्युं कुक्षौ देशे प्रविन्यसेत् ।
नमस्तेऽस्तु क्षुधां पश्चात् कलां पृष्ठे न्यसेत् क्रमात् ॥
रुद्ररूपेभ्य इत्यन्ते तृषास्तारनमोऽन्तकाः ।
वामदेवाय नमोऽन्ते विरजा स्याद्गुह्यदेशके ॥
मुष्के सव्ये प्रविन्यस्य रक्षां ज्येष्ठाय वै नमः ।
रुद्राय नमो रतिं पश्चाद्वाममुष्के कलामिमाम् ॥
कालाय नम इत्यन्ते पालिनी ऊरुदक्षिणे ।
कलाकामां च देवेशि वामे विकरणाय च ॥
नमःपदं समुच्चार्य संयमनी दक्षजानुनि ।
वलक्रिया समादिष्टा वामे विकरणाय च ॥
नमोऽन्ते वृद्धिमुच्चार्य दक्षिणे स्फिचि विन्यसेत् ।
वलप्रमथनाय नमो रात्रिं वामे प्रविन्यसेत् ॥
सर्वभूतदमनाय नमोऽन्ते ब्राह्मणीं कलाम् ।

कटिदेशे प्रविन्यस्य नमोऽन्ते मोहिनीकलाम् ॥
दक्षिणे पार्श्वके न्यस्य उन्मनाय मनोज्वराम् ।
पादयोः स्तननासासु मूर्ध्नि बाहुयुगे न्यसेत् ॥
सद्योजातोद्भवाः सम्यगष्टौ मन्त्री कलाः क्रमात् ।
सद्योजातं प्रपद्यामि सिद्धिः स्यात् प्रथमा कला ॥
सद्योजाताय वै भूयो नमः स्याद्वृद्धिरीरिता ।
भवे द्युतिस्तृतीया स्यादभवे तदनन्तरम् ॥
लक्ष्मीश्चतुर्थी कथिता ततो नाभिभवेपदम् ।
मेधाख्या पञ्चमी प्रोक्ता कला भूयो भवस्व माम् ॥
प्रजा समीरिता षष्ठी भवान्ते स्यात् प्रभा कला ।
उद्भवाय नमः पश्चात् स्वधा स्यादष्टमी कला ॥
प्रणवाद्याश्चतुर्थ्यन्ता नमोऽन्ताश्च प्रविन्यसेत् ।
एवं न्यासविधिं कृत्वा स्वयं शैवं विभावयेत् ॥
पञ्चाक्षरं पुरस्कृत्य रुद्रध्यानपरायणः ।
सामरस्यमयं कृत्वा रक्षार्थं कवचं पठेत् ॥
बद्ध्वा तु क्षोभिणीं मुद्रां यन्त्रमध्ये विनिःक्षिपेत् ।
भगं कुण्डं स्रुवो लिङ्गमाज्यं चैवं तु वीर्यकम् ॥
सर्वतत्त्वं समुत्सार्य सहस्रं जपमाचरेत् ।

(ज्ञानार्णवे)

धूपादिकं समर्प्याथ स्वलिङ्गे तदनन्तरम् ।
तारं च भुवनेशानि महात्रिपुरसुन्दरी ॥
नमः शिवाय विद्येयं दशार्णा परिकीर्त्तिता ।
अनया विद्यया देवि स्वलिङ्गे पूजयेच्छिवे ॥

तत्पुरुषाय विद्महे कला शान्तेरितीरिता ।
महादेवाय धीमहि कलाविद्या तथैव च ॥
तन्नो रुद्रपदं पश्चात् प्रतिष्ठा कथिता कला ।
प्रचोदयात् समुच्चार्य निवृत्तिः स्यात् ततः परम् ॥
पूर्वपश्चिमयाम्येषु उत्तरेष्वप्यनुक्रमात् ।
हृदये विन्यसेद्देवि अघोरेभ्यस्तमःकलाम् ॥
अघोरेभ्यो मोहनां च ग्रीवायां विन्यसेत् ततः ।
घोरान्ते स्यात् क्रियां पश्चाद्दक्षिणांसे प्रविन्यसेत् ॥
निद्रां घोरतरेभ्यो वै वामांसे विन्यसेत् ततः ।
सर्वतः सर्वमुच्चार्य व्याधिं नाभौ प्रविन्यसेत् ॥
सर्वेभ्यस्तत्कलां मृत्युं कुक्षौ देशे प्रविन्यसेत् ।
नमस्तेऽस्तु क्षुधां पश्चात् कलां पृष्ठे न्यसेत् क्रमात् ॥
रुद्ररूपेभ्य इत्यन्ते तृषास्तारनमोऽन्तकाः ।
वामदेवाय नमोऽन्ते विरजा स्याद्गुह्यदेशके ॥
मुष्के सव्ये प्रविन्यस्य रक्षां ज्येष्ठाय वै नमः ।
रुद्राय नमो रतिं पश्चाद्वाममुष्के कलामिमाम् ॥
कालाय नम इत्यन्ते पालिनी ऊरुदक्षिणे ।
कलाकामां च देवेशि वामे विकरणाय च ॥
नमःपदं समुच्चार्य संयमनी दक्षजानुनि ।
वलक्रिया समादिष्टा वामे विकरणाय च ॥
नमोऽन्ते वृद्धिमुच्चार्य दक्षिणे स्फिचि विन्यसेत् ।
वलप्रमथनाय नमो रात्रिं वामे प्रविन्यसेत् ॥
सर्वभूतदमनाय नमोऽन्ते ब्राह्मणीं कलाम् ।

कटिदेशे प्रविन्यस्य नमोऽन्ते मोहिनीकलाम् ॥
दक्षिणे पार्श्वके न्यस्य उन्मनाय मनोज्वराम् ।
पादयोः स्तननासासु मूर्ध्नि बाहुयुगे न्यसेत् ॥
सद्योजातोद्भवाः सम्यगष्टौ मन्त्री कलाः क्रमात् ।
सद्योजातं प्रपद्यामि सिद्धिः स्यात् प्रथमा कला ॥
सद्योजाताय वै भूयो नमः स्याद्वृद्धिरीरिता ।
भवे द्युतिस्तृतीया स्यादभवे तदनन्तरम् ॥
लक्ष्मीश्चतुर्थी कथिता ततो नाभिभवेपदम् ।
मेधाख्या पञ्चमी प्रोक्ता कला भूयो भवस्व माम् ॥
प्रज्ञा समीरिता षष्ठी भवान्ते स्यात् प्रभा कला ।
उद्भवाय नमः पश्चात् स्वधा स्यादष्टमी कला ॥
प्रणवाद्याश्चतुर्थ्यन्ता नमोऽन्ताश्च प्रविन्यसेत् ।
एवं न्यासविधिं कृत्वा स्वयं शैवं विभावयेत् ॥
पञ्चाक्षरं पुरस्कृत्य रुद्रध्यानपरायणः ।
सामरस्यमयं कृत्वा रक्षार्थं कवचं पठेत् ॥
बद्ध्वा तु क्षोभिणीं मुद्रां यन्त्रमध्ये विनिःक्षिपेत् ।
भगं कुण्डं स्रुवो लिङ्गमाज्यं चैवं तु वीर्यकम् ॥
सर्वतत्त्वं समुत्सार्य सहस्रं जपमाचरेत् ।

(ज्ञानार्णवे)

धूपादिकं समर्प्याथ स्वलिङ्गे तदनन्तरम् ।
तारं च भुवनेशानि महात्रिपुरसुन्दरि ॥
नमः शिवाय विद्येयं दशार्णा परिकीर्त्तिता ।
अनया विद्यया देवि स्वलिङ्गे पूजयेच्छिवे ॥

महात्रिपुरसुन्दरी त्रिकूटात्मिका विद्या ।

यजेत् तत्पुरुषाघोरसद्योवामेशसंज्ञकान् ॥
निवृत्तिं च प्रतिष्ठां च विद्यां शान्तिं तथैव च ।
शान्त्यतीतां च संपूज्य षडङ्गावरणं यजेत् ॥
समग्रविद्यामुच्चार्य नन्दिकेशं प्रपूजयेत् ।
मध्ये वृषणयोर्देवि गन्धपुष्पाक्षतादिभिः ॥
निवेद्य धूपपुष्पादि विजितेन्द्रियमानसः ।
सर्वसंक्षोभणा मुद्राः बद्ध्वा योनिं प्रचालयेत् ॥
क्षोभिण्या वाऽथ वा देवि गजतुण्डाख्ययाऽथ वा ।
उच्चरन् भगमालाख्यां द्राविणीबीजमुच्चरन् ॥
अक्षुब्धः सन् वरारोहे यावद्रेतः प्रवर्त्तते ।

भगमालामन्त्रस्तु तत्रैव ।

वाग्भवं भगशब्दान्ते भगे भगिनि चालयेत् ।
भगोदरि भगान्ते तु भगमाले भगावहे ॥
भगगुह्ये भगप्रान्ते योनिप्रान्ते भगान्तके ।
निपातिनि च सर्वान्ते ततो भगवशङ्करि ॥
भगरूपे ततो लेख्यं नीरजायतलोचने ।
नित्यक्लिन्ने भगप्रान्ते स्वरूपे सर्वमालिखेत् ॥
भगानिमेह्यानयान्ते वरदेऽथ समालिखेत् ।
रेते सुरेते भग च क्लिन्ने क्लिन्नद्रवे ततः ॥
क्लेदय द्रावय चाथ सर्वसत्त्वान् भगेश्वरि ।
अमोघे भगविच्चे च क्षुभ क्षोभय सर्व च ॥
सत्त्वान् भगेश्वरि ब्रूयाद्वाग्भवं ब्लूँ जमादिकम् ।
मेँ ब्लूँ मौँ ब्लूँ च हेँ ब्लूँ च हेँ क्लिन्ने च ततः परम् ॥

सर्वाणि च भगान्यन्ते मे वशं चानयेति च ।
स्त्रीबीजं च हरप्रान्ते ब्लैँ मायात्मकमक्षरम् ॥
भुवनेशीं समालिख्य विद्येयं भगमालिनी ।

(वीरतन्त्रे)

धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा ।
सुषुम्णा वर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् ॥
स्वाहान्तोऽयं महामन्त्र आरम्भे परिकीर्त्तितः ।
ततो जपेत् प्रियां गच्छन् स्त्रियं त्रिभुवनेश्वरीम् ॥

(भूतडामरयक्षडामरयोः)

क्षिप्त्वा शेफश्च प्रजपेद्ध्यात्वा देवीं यथोदिताम् ।
दिक्सहस्रं सहस्रं वा विना रेतोविमोक्षणम् ॥
जप्त्वा तु विधिवद्दद्याद्बलिमभ्यर्च्य तां स्त्रियम् ।
भोजयित्वा नमस्कृत्य विसृज्य प्रापयेद्गृहम् ॥
एवं कृत्वा च तत्सिद्धिस्त्रिषु लोकेषु दुर्लभा ।
जायते नात्र संदेहो ब्रह्मणा भाषितं पुरा ॥
नातः परतरोपायो मन्त्राणां साधने त्रिषु ।

(कुलामृते)

स्वाहान्तो होममन्त्रोऽयं प्रतिघाता हुतिः प्रिये ।
पूर्णाहुतिं रतान्ते च जुहुयान्मनुनाऽमुना ॥
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ।
धर्माधर्मौ कलास्नेहं पूर्णावह्नौ जुहोम्यहम् ॥
स्वाहान्तोऽयं भवेन्मन्त्रो घोरपातकमुक्तिदः ।

(वीरतन्त्रे)

स्वाहान्तोऽयं महामन्त्रः शुक्रत्यागे प्रकीर्त्तितः ।

यदि च शक्तिरदीक्षिता भवति तदा प्रथमतस्तच्छोधनं कुर्यात् ।

तदुक्तं (कुलतन्त्रे)

अभिषेका भवेच्छुद्धिर्मन्त्रस्योच्चारणाच्छुतौ ।

रतिकाले महेशानि दीक्षाकाले च कन्यकाः ॥

शुद्ध्यन्तीति शेषः ।

सुरया रेतसा चापि जलेन मनुनाऽमुना ।

(यामले)

सुदीक्षिता तु या शक्तिः सैव शुद्धा भवेत् सदा ।

अदीक्षिता तु या शक्तिर्मायां तस्यै निवेदयेत् ॥

(मातङ्गीतन्त्रे-) ऽप्युक्तम् ।

दीक्षामात्रेण शुद्ध्यन्ति स्त्रियः सर्वत्र कर्मणि ।

(कुलामृतदीपिकायाम्)

अदीक्षितकुलासङ्गात् सिद्धिहानिः प्रजायते ।

तथा—

आदौ बालां समुच्चार्य त्रिपुरायै समुच्चरेत् ।

नमःशब्दं समुच्चार्य इमां शक्तिं ततो वदेत् ॥

नाद*क्षैर्देवि लोके भवति निन्दितः ।

तथा—

आलिङ्गने हरेद्रोगान् धनधान्यादि चुम्बने ।

नखदन्तक्षताद्यैश्च तदा मोक्षः प्रजायते ॥

सायुज्यं सङ्गमेन स्यात् सत्यमेव न संशयः ।

(रौद्रे)

तदङ्गस्पर्शनात् सौख्यं संयोगामृतलक्षणम् ।

महाकामकलां ध्यायेत् संयोगामृतरूपिणीम् ॥

संयोगाज्जायते सौख्यं परमानन्दलक्षणम् ।

कुलद्रव्यामृतं यत्नाद्गृह्णीयाद्दुर्लभं नरः ॥

कुण्डगोलप्रहरणप्रकारस्तु कुलामृते ।

---

* सर्वपुस्तकेषु त्रुटिरत्रोपलभ्यतो ।

भावयेत् कामभावेन आत्मतत्त्वं न चोत्सृजेत् ॥
शुद्धमन्त्रौषधेनैव योनेस्तु मथनं चरेत् ।
मथ्यमाने तु तस्याहिर्जायते तत्त्वमुत्तमम् ॥
गृह्णीयात् तत्प्रयत्नेन द्रव्यं कुण्डोद्भवं शुभम् ।

मन्त्रौषधं यथा (कुलोड्डीशे)

मायाऽऽगच्छपदं शुक्रस्तम्भनकारिणि ठद्वयम् ।
अनेनार्कोपरागे च जातीमूलं समानयेत् ॥
एतत् कृत्वा साधकेन्द्रः शुक्रस्तम्भनमाचरेत् ।

(ब्रह्मयामले)

तेनामृतेन दिव्येन त्रिपुरां तर्पयेत् सदा ।
सान्निध्यात् तत्क्षणाद्वाऽपि प्रीता सिद्धिं प्रयच्छति ॥
समस्तदेवतानां च तर्पणं च सदाऽमृतैः ।
गुरूणां साधकानां च सर्वेषां तर्पणं चरेत् ॥
तेनामृतेन द्रव्येण सर्वे तुष्टा भवन्ति च ।
यत्कामं कुरुते मन्त्री तत्क्षणादेव सिद्ध्यति ॥
कुलामृतं समादाय तत्रार्घे निःक्षिपेद्बुधः ।
ततः सोमकलाः पूज्याः साधकैर्निर्मलाशयैः ॥

(कौले)

मधुभाण्डसहस्रैस्तु मांसभारशतैरपि ।
नैव तुष्टा भवेद्देवी भगलिङ्गामृतादृते ॥

(देवीयामले)

दूतीयागविधिं वक्ष्ये कौलधर्मोत्तमोत्तमम् ।
तस्यानुष्ठानमात्रेण स्वयं ब्रह्मत्वमाप्नुयात् ॥

तथा—

दूतीयागे कृते मन्त्री सर्वज्ञो जायते ध्रुवम् ।

तदुक्तं (कुलतन्त्रे)

अभिषेका भवेच्छुद्धिर्मन्त्रस्योच्चारणाच्छुतौ ।

रतिकाले महेशानि दीक्षाकाले च कन्यकाः ॥

शुद्ध्यन्तीति शेषः ।

सुरया रेतसा चापि जलेन मनुनाऽमुना ।

(यामले)

सुदीक्षिता तु या शक्तिः सैव शुद्धा भवेत् सदा ।

अदीक्षिता तु या शक्तिर्मायां तस्यै निवेदयेत् ॥

(मातङ्गीतन्त्रे-) ऽप्युक्तम् ।

दीक्षामात्रेण शुद्ध्यन्ति स्त्रियः सर्वत्र कर्मणि ।

(कुलामृतदीपिकायाम्)

अदीक्षितकुलासङ्गात् सिद्धिहानिः प्रजायते ।

तथा—

आदौ बालां समुच्चार्य त्रिपुरायै समुच्चरेत् ।

नमःशब्दं समुच्चार्य इमां शक्तिं ततो वदेत् ॥

नाद*क्षैर्देवि लोके भवति निन्दितः ।

तथा—

आलिङ्गने हरेद्रोगान् धनधान्यादि चुम्बने ।

नखदन्तक्षताद्यैश्च तदा मोक्षः प्रजायते ॥

सायुज्यं सङ्गमेन स्यात् सत्यमेव न संशयः ।

(रौद्रे)

तदङ्गस्पर्शनात् सौख्यं संयोगामृतलक्षणम् ।

महाकामकलां ध्यायेत् संयोगामृतरूपिणीम् ॥

संयोगाज्जायते सौख्यं परमानन्दलक्षणम् ।

कुलद्रव्यामृतं यत्नाद्गृह्णीयाद्दुर्लभं नरः ॥

कुण्डगोलप्रहरणप्रकारस्तु कुलामृते ।

---

* सर्वपुस्तकेषु त्रुटिरत्रोपलभ्यतो ।

भावयेत् कामभावेन आत्मतत्त्वं न चोत्सृजेत् ॥
शुद्धमन्त्रौषधेनैव योनेस्तु मथनं चरेत् ।
मथ्यमाने तु तस्याहिर्जायते तत्त्वमुत्तमम् ॥
गृह्णीयात् तत्प्रयत्नेन द्रव्यं कुण्डोद्भवं शुभम् ।

मन्त्रौषधं यथा (कुलोड्डीशे)

मायाऽऽगच्छपदं शुक्रस्तम्भनकारिणि ठद्वयम् ।
अनेनार्कोपरागे च जातीमूलं समानयेत् ॥
एतत् कृत्वा साधकेन्द्रः शुक्रस्तम्भनमाचरेत् ।

(ब्रह्मयामले)

तेनामृतेन दिव्येन त्रिपुरां तर्पयेत् सदा ।
सान्निध्यात् तत्क्षणाद्वाऽपि प्रीता सिद्धिं प्रयच्छति ॥
समस्तदेवतानां च तर्पणं च सदाऽमृतैः ।
गुरूणां साधकानां च सर्वेषां तर्पणं चरेत् ॥
तेनामृतेन द्रव्येण सर्वे तुष्टा भवन्ति च ।
यत्कामं कुरुते मन्त्री तत्क्षणादेव सिद्ध्यति ॥
कुलामृतं समादाय तत्रार्घे निःक्षिपेद्बुधः ।
ततः सोमकलाः पूज्याः साधकैर्निर्मलाशयैः ॥

(कौले)

मधुभाण्डसहस्रैस्तु मांसभारशतैरपि ।
नैव तुष्टा भवेद्देवी भगलिङ्गामृतादृते ॥

(देवीयामले)

दूतीयागविधिं वक्ष्ये कौलधर्मोत्तमोत्तमम् ।
तस्यानुष्ठानमात्रेण स्वयं ब्रह्मत्वमाप्नुयात् ॥

तथा—

दूतीयागे कृते मन्त्री सर्वज्ञो जायते ध्रुवम् ।

न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥
यैः कृतं यजनं दूत्यास्तैरिष्टाः क्रतवोऽखिलाः ।
सर्वतीर्थमयः प्रोक्तः सर्वदेवमयो भवेत् ॥
पुरश्चर्यादिसकलं कृतं तेन न संशयः ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥
आसमुद्रा च धराणी दत्ता तेन सदक्षिणा ।
मेरुमण्डलतुल्यादिसुवर्णान्यर्पितानि वै ॥
गोकोटिदानाद्यत् पुण्यं तत्पुण्यं जायते प्रिये ।
तस्मात् सर्वप्रयत्नेन दूतीयागं समाचरेत् ॥
पूजासम्पूर्णदं भद्रे सर्वारिष्टप्रशामकम् ।
योनिपूजां विना पूजा कृतमप्यकृतं भवेत् ॥
आयुरारोग्यविभवानमितांल्लभते नरः ।
अनेनैव विधानेन विषार्त्तो निर्विषो भवेत् ॥
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
मातङ्गीशक्तिमभ्यर्च्य तया साकं समर्चयेत् ॥
मातङ्गी मन्मथोपेता सर्वकामार्थसिद्धये ।
शक्त्या साकं सदा पूज्या मातङ्गी मन्त्रदेवता ॥
सा देवी शक्तिहीना तु न ददाति मनोरथम् ।
(ब्रह्मयामले)
नारद उवाच ।
सर्वज्ञ जगतां नाथ शाक्तं चेच्छ्रुतिचोदितम् ।
मातङ्गीपूजनं तत्र कथं मुक्तिप्रदायकम् ॥
अर्चने प्रथिता वेश्या वेश्या सा तु रजःस्वला ।
रजःस्वला च मातङ्गी सा दूती सर्वमङ्गला ॥

इति प्रोक्तं त्वया पूर्वमिदानीं तद्विपर्ययः ।
तव वाक्यमनुब्रह्मन्नेतद्वद पितामह ॥

ब्रह्मोवाच ।

मा कुरुष्वात्र संदेहं वेदोक्तं शाक्तमुत्तमम् ।
अस्ति सर्वज्ञकल्पोऽसौ मतङ्गो मुनिसत्तमः ॥
वर्षाणामयुतं वत्स तप उग्रं चचार ह ।
तेन प्रीता महादेवी देवानां हितकारिणी ॥
वरं वृणुष्व भगवन् दास्यामि तव वाञ्छितम् ।
तच्छ्रुत्वा द्विजवर्यस्तां ययाचे धर्मसाधनम् ॥
हे देवि जगतां मातः प्रीता चेद्यदि सांप्रतम् ।
अपत्यतां समासाद्य मत्कुलालम्बनं कुरु ॥
इत्यभ्यर्च्य मुनिश्रेष्ठो जनयामास तां सुताम् ।
श्यामलां चारुवदनां चीनांशुकसमन्विताम् ॥
सारिकां ज्ञानसंपन्नां जपमालां कराम्बुजैः ।
धारयन्तीं विशालाक्षीं शङ्खताटङ्कशोभिनीम् ॥
सा बभूव महादेवी मातङ्गकुलनन्दिनी ।
मातङ्गीति तदा देवी विख्याता वरदायिनी ॥
तां विलोक्य तदा शम्भुर्दूतीं चक्रे सुलक्षणाम् ।
त्रिपुरं जेतुकामेन योनिपूजा तदा कृता ॥
प्रत्यालीढा स्थिता देवी पूजां स्वीकृत्य निश्चला ।
तदा दृष्टरजोभूतां तां बव्रे शङ्करः प्रियाम् ॥
तदा प्रभृति संजातो दूतीयागो मनोहरः ।
प्रणयेन तदा शम्भुस्तया सार्धं रतं भवेत् ॥

न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥
यैः कृतं यजनं दूत्यास्तैरिष्टाः क्रतवोऽखिलाः ।
सर्वतीर्थमयः प्रोक्तः सर्वदेवमयो भवेत् ॥
पुरश्चर्यादिसकलं कृतं तेन न संशयः ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥
आसमुद्रा च धरणी दत्ता तेन सदक्षिणा ।
मेरुमण्डलतुल्यादिसुवर्णान्यर्पितानि वै ॥
गोकोटिदानाद्यत् पुण्यं तत्पुण्यं जायते प्रिये ।
तस्मात् सर्वप्रयत्नेन दूतीयागं समाचरेत् ॥
पूजासम्पूर्णदं भद्रे सर्वारिष्टप्रशामकम् ।
योनिपूजां विना पूजा कृतमप्यकृतं भवेत् ॥
आयुरारोग्यविभवानमिताँल्लभते नरः ।
अनेनैव विधानेन विषार्त्तो निर्विषो भवेत् ॥
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
मातङ्गीशक्तिमभ्यर्च्य तया साकं समर्चयेत् ॥
मातङ्गी मन्मथोपेता सर्वकामार्थसिद्धये ।
शक्त्या साकं सदा पूज्या मातङ्गी मन्त्रदेवता ॥
सा देवी शक्तिहीना तु न ददाति मनोरथम् ।
(ब्रह्मयामले)
नारद उवाच ।
सर्वज्ञ जगतां नाथ शाक्तं चेच्छ्रुतिचोदितम् ।
मातङ्गीपूजनं तत्र कथं मुक्तिप्रदायकम् ॥
अर्चने प्रथिता वेश्या वेश्या सा तु रजःस्वला ।
रजःस्वला च मातङ्गी सा दूती सर्वमङ्गला ॥

इति प्रोक्तं त्वया पूर्वमिदानीं तद्विपर्ययः ।
तव वाक्यमनुब्रह्मन्नेतद्वद पितामह ॥

ब्रह्मोवाच ।

मा कुरुष्वात्र संदेहं वेदोक्तं शाक्तमुत्तमम् ।
अस्ति सर्वज्ञकल्पोऽसौ मतङ्गो मुनिसत्तमः ॥
वर्षाणामयुतं वत्स तप उग्रं चचार ह ।
तेन प्रीता महादेवी देवानां हितकारिणी ॥
वरं वृणुष्व भगवन् दास्यामि तव वाञ्छितम् ।
तच्छ्रुत्वा द्विजवर्यस्तां ययाचे धर्मसाधनम् ॥
हे देवि जगतां मातः प्रीता चेद्यदि सांप्रतम् ।
अपत्यतां समासाद्य मत्कुलालम्बनं कुरु ॥
इत्यभ्यर्च्य मुनिश्रेष्ठो जनयामास तां सुताम् ।
श्यामलां चारुवदनां चीनांशुकसमन्विताम् ॥
सारिकां ज्ञानसंपन्नां जपमालां कराम्बुजैः ।
धारयन्तीं विशालाक्षीं शङ्खताटङ्कशोभिनीम् ॥
सा बभूव महादेवी मातङ्गकुलनन्दिनी ।
मातङ्गीति तदा देवी विख्याता वरदायिनी ॥
तां विलोक्य तदा शम्भुर्दूतीं चक्रे सुलक्षणाम् ।
त्रिपुरं जेतुकामेन योनिपूजा तदा कृता ॥
प्रत्यालीढा स्थिता देवी पूजां स्वीकृत्य निश्चला ।
तदा दृष्टरजोभूतां तां बब्रे शङ्करः प्रियाम् ॥
तदा प्रभृति संजातो दूतीयागो मनोहरः ।
प्रणयेन तदा शम्भुस्तया सार्धं रतं भवेत् ॥

प्रणवान्तर्गतं मन्त्रं मातङ्ग्याख्यं विनिर्गतम् ।
सर्वसौभाग्यजननं मालामन्त्रमभूत् तदा ॥
रमा चापि पदं दिव्यमनिन्द्यं लोकरञ्जनम् ।
मातङ्गी मन्त्रमत्यर्थं मन्मथप्रतिपादकम् ॥
आद्यन्तशून्या सा देवी तस्मात् ख्याता तदन्त्यजा ।
मातङ्गी अन्त्यवर्णस्था तदा सा अन्त्यजाऽभवत् ॥
अन्त्यजानां द्विजानां च चक्रे ऐक्यं प्रशस्यते ।
सा देवी सर्ववर्णानां वरं दत्वा निरुत्तरम् ॥
कृत्वा सङ्केतसमयं चक्रे मातङ्गमुत्तमम् ।
न दोषः सर्ववर्णानामिति दत्वा वरं तदा ॥
न दोषं तत्र विज्ञेयं सर्वं ते श्रुतिनोदितम् ।
देवीमुद्दिश्य मोक्षार्थं कृतं यद्दोषवर्जितम् ॥
एतच्छास्त्रमिदं दिव्यं न वाच्यं श्रुतिचोदितम् ।
अन्तर्यागमिदं ज्ञेयं बहिर्यागं च वैदिकम् ॥
मन्त्रतन्त्रसमायुक्तं तद्द्वयं ब्रह्मबोधकम् ।
चक्रसंकेतसमयं सर्वं तुभ्यं प्रकाशितम् ॥
गोपनीयं प्रयत्नेन न वाच्यं पशुसन्निधौ ।
त्यज शङ्कां महाभाग सत्यमेतन्मयोदितम् ॥
मातङ्गीपूजनं श्रेष्ठं दूतीयागे मनोहरम् ।

दूतीयागे च विप्राणां नाधिकारः ।
तदुक्तं (बृहच्छ्रीक्रमसंहितायाम्)

वामागमोऽपि विप्रस्तु मद्यमांसं न भक्षयेत् ।
स्वकीयां परकीयां वा नाकृष्य ब्राह्मणो यजेत्—इति ॥

(महाकालसंहितायामपि)

स्वयोषां परयोषां वा नैवाकृष्य द्विजो जपेत् ।

लोभाद्यदि चरेद्देवमधो याति द्विजस्तदा ॥
इहामुत्र फलं नास्ति हीनायुरपि जायते ।

ब्राह्मणेतराणामपि योगिनामेवात्राधिकारः ।

तदुक्तं (सिद्धिनाथसंहितायाम्)

अद्वैतज्ञाननिष्ठो यो योऽसौ संसारपारगः ।
स एव जगदे दूत्या नाधिकारी भवेदिति ॥

इति दूतीयागविधिः ।

अथ शावरमन्त्रपुरश्चरणम् ।

(मेरुतन्त्रे)

अथ शावरमन्त्राणां पुरश्चरणमुच्यते ।
कामरूपाख्यदेशे तु कामाख्या यत्र देवता ॥
कामशैलोऽस्ति यत्रासौ कामपीठं तदुच्यते ।
तत्र संलेख्य मन्त्रं हि वंशोपरि यथाक्रमम् ॥
गुरूणां वाचनीयः स स्वयं पश्चात् पठेन्मनुम् ।
गुरोरभावे तस्यैव मूले शैलस्य पर्वणि ॥
लिखित्वा प्रपठेन्मन्त्रं कामपीठं गुरुर्मतः ।
अथ वा योगिनीशैले दक्षिणस्यां दिशि ध्रुवम् ॥
योगाम्बा यत्र देवी सा लिखित्वा प्रपठेन्मनुम् ।
ज्वालामुखी समीपे वा हिङ्गुलायाः समीपतः ॥
लिखित्वा प्रपठेन्मन्त्रं नान्यथैव प्रसिद्ध्यति ।
मुख्यतः स्त्री समीपे हि कामपीठे मनुग्रहः ॥
अथ वा सर्वदेशेषु मन्त्रग्रहणमुच्यते ।
तालपत्रे मनुं वक्ष्ये पूर्णकुम्भे निधापयेत् ॥
भास्करं च गुरुं ध्यात्वा वाचयेत् त्रिगुरू रविः ।

एतावता शावरमन्त्राणां विधिवद्ग्रहणमेव पुरश्चरणमित्युक्तम् ।

प्रणवान्तर्गतं मन्त्रं मातङ्ग्याख्यं विनिर्गतम् ।
सर्वसौभाग्यजननं मालामन्त्रमभूत् तदा ॥
रमा चापि पदं दिव्यमनिन्द्यं लोकरञ्जनम् ।
मातङ्गी मन्त्रमत्यर्थं मन्मथप्रतिपादकम् ॥
आद्यन्तशून्या सा देवी तस्मात् ख्याता तदन्त्यजा ।
मातङ्गी अन्त्यवर्णस्था तदा सा अन्त्यजाऽभवत् ॥
अन्त्यजानां द्विजानां च चक्रे ऐक्यं प्रशस्यते ।
सा देवी सर्ववर्णानां वरं दत्वा निरुत्तरम् ॥
कृत्वा सङ्केतसमयं चक्रे मातङ्गमुत्तमम् ।
न दोषः सर्ववर्णानामिति दत्वा वरं तदा ॥
न दोषं तत्र विज्ञेयं सर्वं ते श्रुतिनोदितम् ।
देवीमुद्दिश्य मोक्षार्थं कृतं यद्दोषवर्जितम् ॥
एतच्छास्त्रमिदं दिव्यं न वाच्यं श्रुतिचोदितम् ।
अन्तर्यागमिदं ज्ञेयं बहिर्यागं च वैदिकम् ॥
मन्त्रतन्त्रसमायुक्तं तद्द्वयं ब्रह्मबोधकम् ।
चक्रसंकेतसमयं सर्वं तुभ्यं प्रकाशितम् ॥
गोपनीयं प्रयत्नेन न वाच्यं पशुसन्निधौ ।
त्यज शङ्कां महाभाग सत्यमेतन्मयोदितम् ॥
मातङ्गीपूजनं श्रेष्ठं दूतीयागे मनोहरम् ।

दूतीयागे च विप्राणां नाधिकारः ।
तदुक्तं (बृहच्छ्रीक्रमसंहितायाम्)

वामागमोऽपि विप्रस्तु मद्यमांसं न भक्षयेत् ।
स्वकीयां परकीयां वा नाकृष्य ब्राह्मणो यजेत्—इति ॥

(महाकालसंहितायामपि)

स्वयोषां परयोषां वा नैवाकृष्य द्विजो जपेत् ।

लोभाद्यदि चरेद्देवमधो याति द्विजस्तदा ॥
इहामुत्र फलं नास्ति हीनायुरपि जायते ।

ब्राह्मणेतराणामपि योगिनामेवात्राधिकारः ।
तदुक्तं (सिद्धिनाथसंहितायाम्)

अद्वैतज्ञाननिष्ठो यो योऽसौ संसारपारगः ।
स एव जगदे दूत्या नाधिकारी भवेदिति ॥

इति दूतीयागविधिः ।

अथ शावरमन्त्रपुरश्चरणम् ।

(मेरुतन्त्रे)

अथ शावरमन्त्राणां पुरश्चरणमुच्यते ।
कामरूपाख्यदेशे तु कामाख्या यत्र देवता ॥
कामशैलोऽस्ति यत्रासौ कामपीठं तदुच्यते ।
तत्र संलेख्य मन्त्रं हि वंशोपरि यथाक्रमम् ॥
गुरूणां वाचनीयः स स्वयं पश्चात् पठेन्मनुम् ।
गुरोरभावे तस्यैव मूले शैलस्य पर्वणि ॥
लिखित्वा प्रपठेन्मन्त्रं कामपीठं गुरुर्मतः ।
अथ वा योगिनीशैले दक्षिणस्यां दिशि ध्रुवम् ॥
योगाम्बा यत्र देवी सा लिखित्वा प्रपठेन्मनुम् ।
ज्वालामुखी समीपे वा हिङ्गुलायाः समीपतः ॥
लिखित्वा प्रपठेन्मन्त्रं नान्यथैव प्रसिद्ध्यति ।
मुख्यतः स्त्रीसमीपे हि कामपीठे मनुग्रहः ॥
अथ वा सर्वदेशेषु मन्त्रग्रहणमुच्यते ।
तालपत्रे मनुं वक्ष्ये पूर्णकुम्भे निधापयेत् ॥
भास्करं च गुरुं ध्यात्वा वाचयेत् त्रिगुरू रविः ।

एतावता शावरमन्त्राणां विधिवद्ग्रहणमेव पुरश्चरणमित्युक्तम् ।

अथ वीरसाधनम् ।

तत्रादौ चितासाधनमुक्तं (योगिनीहृदये)

देव्युवाच ।

भगवन् सर्वमन्त्रज्ञ सर्वशास्त्र विशारद ।
श्मशाने च पुरश्चर्या त्वया संपूजिता पुरा ॥
कथयस्व तदेदानीं यदि स्नेहोऽस्ति मां प्रति ।

ईश्वर उवाच ।

यस्मिन् परिश्रमेणापि नृणां सिद्धिः समीहिता ।
न जाता तत्र कर्त्तव्या साधकैर्वीरसाधना ॥
पुरा सिद्ध्यै नृपाणां च कर्त्तव्ये समुपस्थिते ।
नान्यसिद्धिकरं शीघ्रं वीरसाधनवर्जितम् ॥
तस्मात् सर्वप्रयत्नेन विधेया वीरसाधना ।
भयमुक्तेन शुचिना सर्वसिद्धिमभीप्सिता ॥
नानया दुर्लभं किंचित् साधकस्य समीहितम् ।
गिरिजे तत् प्रयत्नेन याचेनयं प्रकाश्यते ॥
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।
कृष्णपक्षे विशेषेण साधयेदनया हितम् ॥

(वीरतन्त्रे)

महावीरक्रमं देव सूचितं न प्रकाशितम् ।
कथयस्व महादेव सर्वसिद्धिप्रदं महत् ॥

भैरव उवाच ।

सर्वसिद्धिप्रदं साक्षात् सर्वदेवनमस्कृतम् ।
सर्वपापहरं देवि सर्वरोगविनाशनम् ॥
ब्रह्मविष्णुशिवादीनां दिक्पालानां च भाविनि ।

भैरवानां च सर्वेषां गन्धर्वाणां च योगिनाम् ॥
शश्वत् सिद्धिप्रदं देवि सर्वेषामालयं महत् ।
नान्यत् सिद्धिप्रदं देवि वीरसाधनवर्जितम् ॥
महाबलो महावीरो महासाहसिकः शुचिः ।
महास्वच्छो दयावाँश्च सर्वभूतहिते रतः ॥
तेषां कृते महादेवि कथितं वीरसाधनम् ।
तथा—
घटीबन्धनवस्त्रं वै मूलेन परिधाय च ।
तद्बाह्ये च पुनर्वस्त्रं मूलेनाङ्गविलेपनम् ॥
कृतोष्णीषश्च मूलेन सिन्दूरेणोर्ध्वपुण्ड्रकम् ।
इष्टदेवं गुरुं नत्वा यात्रा प्रहरमध्यतः ॥
कार्या च साधकैः सार्धं हृदि मन्त्रं परामृशन् ।
अक्षुब्धो भुक्तभोज्यश्च यदि स्याद्वीरसाधकः ॥
दिव्यो वा न पशुस्तत्र भुक्त्वा साधनमाचरेत् ।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ॥
भौमवारे तमिस्रायां साधयेत् सिद्धिमुत्तमाम् ।
उपचारं समादाय कुलामृतरसं तथा ॥
सामिषान्नं गुडं छागं सुरा पिष्टकमेव च ।
नानाफलं च नैवेद्यं स्वस्वकल्पोक्तसाधनम् ॥
चितास्थाने समानीय सुहृद्भिः शस्त्रपाणिभिः ।
समानगुणसंपन्नैः साधको गतभीः स्वयम् ॥
न निरीक्षेच्चतुर्दिक्षु देवताध्यानतत्परः ।
भीतश्चेत् साधकस्तत्र चतुर्दिक्षु च साधकः ॥
स्वगुरुं भ्रातृवर्गं वा ब्राह्मणान् वाऽपि सुव्रतान् ।

सुहृदानपि रक्षार्थं कियद्दूरे निवेशयेत् ॥
नो चेत् केवलमेवासौ भैरवः परिकीर्त्तितः ।
अक्षालितां चिताभूमिं गत्वा साधकसत्तमः ॥
प्रच्छातिलां यदि प्रायः कारयेदस्थिसंचयम् ।

(यामले)

असंस्कृता चिता ग्राह्या न तु संस्कारसंस्कृता ।

तथा—

संकल्पं प्रथमं कुर्यात् स्वस्तिवाचनपूर्वकम् ।
सामान्यार्घं विधायैतत् ततः पूजां समारभेत् ॥
वस्त्रालङ्कारभूषाद्यैर्भूषितः पूर्वदिङ्मुखः ।

संकल्पस्तु—

ॐ अद्येत्यादि अमुकगोत्रः श्रीमदमुकशर्माऽमुकमन्त्र-सिद्धिकामः श्मशानसाधमनहं करिष्ये—इत्येवंरूपः ।

(वीरतन्त्रे)

अस्त्रान्तमूलमन्त्रेण प्रोक्षणं यागभूमिषु ।
गुरुपादयुगं ध्यात्वा गणेशं वटुकं तथा ॥
योगिनीं मातृकां चैव वामपादपुरःसरम् ।
ये चात्र संस्थिता देवा राक्षसाश्च भयानकाः ॥
पिशाचाः सिद्धयक्षाश्च गन्धर्वाप्सरसां गणाः ।
योगिन्यो मातरो भूताः सर्वाश्च खेचरस्त्रियः ॥
सिद्धिदास्ता भवन्त्वत्र तथा च मम रक्षकाः ।
प्रणम्य मनुनाऽनेन पुष्पाञ्जलित्रयं क्षिपेत् ॥
श्मशानाधिपतिं पश्चाद्भैरवं कालभैरवम् ।
महाकालं यजेद्यत्नात् पूर्वादिदिक्चतुष्टये ॥

पाद्यादिभिश्च मन्त्रज्ञो वलिं पश्चान्निवेदयेत् ।
शब्दबीजं ततः पश्चात् श्मशानाधिपतत्परम् ॥
इममन्ते सामिषान्नं बलिं गृह्णपदं ततः ।
गृह्ण गृह्णापय युगं विघ्ननिवारणं ततः ॥
कुरु सिद्धिं मे समुक्त्वा* प्रयच्छ स्वाहयाऽन्वितम् ।
ताराद्यमनुना देवि प्रथमो वलिरीरितः ॥
मायान्ते भैरवात् पश्चाद्भयानकपदं ततः ।
पूर्वे वलिं समुद्धृत्य दक्षिणे वलिमाहरेत् ॥
हूमन्ते तु महाकालात् पश्चात् पूर्ववदुद्धरेत् ।
पश्चिमे कालदेवाय प्रणवाद्येन कल्पयेत् ॥
शब्दान्ते कालशब्दान्ते भैरवेति पदं ततः ।
श्मशानाधिप इत्येवं पूर्ववच्चान्तरे हरेत् ॥
चितामध्ये ततो दद्याद्बलित्रयमनुत्तमम् ।
कालरात्रिमहाकालि कालिके घोरनिःस्वने ॥
गृहाणेमं बलिं मातर्देहि मे सिद्धिमुत्तमाम् ।
हूँ कालिकायै स्वाहेति वलिं दत्वा भूतनाथाय दापयेत् ॥
शब्दान्ते भूतनाथान्ते श्मशानाधिप इत्यपि ।
प्रणवाद्येन मन्त्रेण दापयेद्बलिमुत्तमम् ॥
हूँ सर्वगणनाथान्ते अधिपतिपदं तथा ।
श्मशाने मस्तके दत्वा पूर्ववच्च समुद्धरेत् ॥
ताराद्येन वलिं दत्वा पञ्चगव्येन सुन्दरि ।
अस्थिसंप्रोक्षणं कृत्वा पीठमन्त्रं न्यसेत् पुनः ॥

* तान्त्रिकप्रयोगोऽयम् ।

भूर्जे वा वटपत्रे वा तत्र पीठमनुं न्यसेत् ।

तन्त्रान्तरे ।

ततश्चितापश्चिमत एकीकृत्यास्थिसंचयम् ।
ॐ ह्रीँ आधरशक्तये नम इत्यणुना पुनः ॥
पञ्चगव्येन संप्रोक्ष्य भूर्जे वा वटपत्रके ।
हसौरिति लिखेन्मन्त्रं स्थापयेत् तत्र तत् पुनः ॥
कम्बलाद्यासनं तत्र विन्यस्याधारशक्तये ।
नम इत्यणुना तत्र ह्रींमाद्यां च प्रपूजयेत् ॥

(वीरतन्त्रे)

पीठमास्तीर्य तस्मिन् वै बद्धवीरासनस्ततः ।
वीरार्दने देवेशि लोष्टान् दिक्षु विनिःक्षिपेत् ॥
कूर्चबीजद्वयं देवि मायायुग्मं ततः परम् ।
कालिके घोरदंष्ट्रे च प्रचण्डे चण्डनायिके ॥
दानवान् दारयेत्युक्त्वा हनेति द्वितयं ततः ।
पर वीरं महाविघ्नं छेदयेति द्वयं ततः ॥
सर्वास्त्रान्तो द्विठान्तोऽयं वीरादनुमनुः स्मृतः ।
अनेन मन्त्रितं लोष्टं दशदिक्षु विनिःक्षिपेत् ॥
तन्मध्ये भैरवो देवो विघ्नैर्न परिभूयते ।
यदि प्रमादाद्देवेशि साधको भयविह्वलः ॥
तैस्तैः सर्वैः सुहृद्भिश्च रक्षितो नाभिभूयते ।
अर्केन्दुसितवाद्यालतूलैर्निर्मितवर्त्तिकाम् ॥
प्रदीपं यत्र संस्थाप्य अस्त्रं तत्र प्रपूजयेत् ।
गते तस्मिन् महादीपे विघ्नैश्च परिभूयते ॥
तदधश्चास्त्रमन्त्रेण निखनेत् कुलदीपिकाम् ।

तत्तत्कल्पविधानेन भूतशुद्ध्यादिकं चरेत् ॥
षोढां वा तारकां वाऽपि विन्यस्य पूजयेत् ततः ।

देवतामिति शेषः ।
अत एव ( यामलादौ )

ततः पञ्चोपचारेण पुरतो देवतां यजेत् ।
निमील्य चक्षुषी पश्चाद्देवं ध्यात्वा मनुं जपेत् ॥
एकाक्षरी यदि भवेद्दिक्सहस्रं ततो जपेत् ।
द्व्यक्षरे चाष्टसाहस्रं त्र्यक्षरे ह्ययुतार्धकम् ॥
ततः परं तु मन्त्रज्ञो गजान्तकसहस्रकम् ।
निशार्धात् तु समारभ्य उदयान्तं समाचरेत् ॥
यद्यसह्यं भयं कर्णनेत्रे वस्त्रेण बन्धयेत् ।
ततोऽर्धरात्रपर्यन्तं यदि किञ्चिन्न दृश्यते ॥
जयदुर्गामनुनाऽर्धं तेनैव सर्षपान् क्षिपेत् ।
ॐ तिलोऽसि सोमदेवत्यो गोसवस्तृप्तिकारकः ॥
पितॄणां स्वर्गदाता त्वं मर्त्यानां मम रक्षकः ।
भूतप्रेतपिशाचानां विघ्नेषु शान्तिकारकः ॥
इति क्षिप्त्वा तिलाँस्तत्र चतुर्भागैः शिवादितः ।
ततः सप्तपदं गत्वा पुनस्तत्रैव संविशेत् ॥
एवं तत्रापि संपूज्य प्रजपेन्मनुमुत्तमम् ।
निर्भयः सन् जपेत् तावद्यावत् सिद्धिः प्रजायते ॥
भयं तु स्वप्नवज्ज्ञेयं परेऽह्नि शेषमाचरेत् ।

(वामकेश्वरतन्त्रे)

जपान्ते च बलिं दद्याद्देवतायै यथाविधि ।
महिषं छागलं चापि गृहीत्वा वरमेव च ॥

गृहं गच्छेत् सुहृद्वर्गैः सार्धं सुहृष्टमानसः ।

इति चितासाधनाविधिः ।

अथ शवसाधनविधिः ।

(भूतडामरे)

यदुक्तं भावसर्वस्वे सर्वतन्त्रेषु गोपितम् ।
वीरसिद्धिविधानं हि देवदेवेन शम्भुना ॥
यस्य विज्ञानमात्रेण मन्दभाग्योऽपि सिद्ध्यति ।

तथा—

पुरश्चरणसंपन्नो वीरसिद्धिं समाचरेत् ।
पुत्रदाराधनस्नेहलोभमोहविवर्जितः ॥
मन्त्रं वा साधयिष्यामि देहं वा पातयाम्यहम् ।
प्रतिज्ञामीदृशीं कृत्वा वलिद्रव्याणि चिन्तयेत् ॥

(वीरतन्त्रे)

पूर्वोक्तमुपहारादि समादाय तु साधकः ।
साधयेत् स्वहितां सिद्धिं साधनस्थानमाश्रयेत् ॥
गुरुध्यानादिकं सर्वं पूर्वोक्तमाश्रयेत् सुधीः ।
वीरार्दनान्तिके भूमौ मायामोहो न विद्यते ॥
ये चात्रेत्यादिमन्त्रेण भूमौ पुष्पाञ्जलित्रयम् ।
श्मशानाधिपतीनां तु पूर्ववद्बलिमाहरेत् ॥
अघोराख्येण मन्त्रेण* वलिसाधनमाचरेत् ।
सुदर्शनेन वा रक्षामुभाभ्यां वा प्रकल्पयेत् ॥
मायास्फुरद्वयं भूयः प्रस्फुरद्वितयं पुनः ।
घोरघोरतरेत्यन्ते तन्नो रूपपदं ततः ॥
चटयुग्मान्तरान्ते च प्रचट द्वितयं पुनः ।

---

*शिखाबन्धनमाचारेदित्यन्यत्र पाठः ।

हेयुग्मं रमयुग्मं च ततो बन्धुयुगं ततः ॥
पातय द्वितयं वर्म फडन्तः समुदाहृतः ।
एकपञ्चाशदर्णोऽयमघोरास्त्रमयो मनुः ॥
हालाहलं समुद्धृत्य सहस्रारस्वरूपकम् ।
वर्मास्त्रान्तं महामन्त्रं सुदर्शनस्य कीर्त्तितम् ॥
भूतशुद्धिं ततः कृत्वा न्यासजालं प्रविन्यसेत् ।
जयदुर्गाख्यमन्त्रेण सर्षपान् दिक्षु निःक्षिपेत् ॥
ॐ दुर्गे दुर्गे रक्षणि स्वाहा—इति जयदुर्गाख्यमन्त्रः ।
तिलोऽसीति च मन्त्रेण तिलानपि विनिःक्षिपेत् ।
यष्टिविद्धं शूलविद्धं खड्गविद्धं पयोमृतम् ॥
रज्जुविद्धं सर्पदष्टं चाण्डालैर्वाऽभिभूतकम् ।
तरुणं सुन्दरं शूरं रणे नष्टं समुज्ज्वलम् ॥
पलायनविशून्यं च संमुखे रणवित्तमम् ।
स्वेच्छामृतं द्विवर्षं च वृद्धां स्त्रीं च द्विजं तथा ॥
अन्नाभावमृतं कुष्टं सप्तरात्रोर्ध्वगं तथा ।
एवं चाष्टविधं त्यक्त्वा पूर्वोक्तान्यतमं शवम् ॥
गृहीत्वा मूलमन्त्रेण पूजास्थाने समानयेत् ।
चाण्डालाद्यभिभूतं वा शीघ्रं सिद्धिफलप्रदम् ॥
प्रणवाद्यस्त्रमन्त्रेण शवस्य प्रोक्षणं चरेत् ।
प्रणवं कूर्चबीजं च मृतकाय नमोऽस्तु फट् ॥
पुष्पाञ्जलित्रयं दत्वा प्रणमेत् स्पर्शपूर्वकम् ।
रे वीरपरमानन्द शिवानन्द कुलेश्वर ॥
आनन्दभैरवाकार देवीपर्यङ्कशङ्कर ।

वीरोऽहं त्वां प्रयच्छामि उत्तिष्ठ चन्द्रिकार्चने ॥
प्रणम्यानेन मन्त्रेण स्वापयेत् तदनन्तरम् ।
तारं शब्दं मृतकाय नमोऽन्तं मन्त्रमुच्यते ॥
शवस्वापनमन्त्रोऽयं सर्वतन्त्रेषु देशितः ।
धूपेन धूपितं कृत्वा गन्धादि वा प्रलिप्य च ॥
रक्ताक्तो यदि देवेश भक्षयेत् कुलसाधकम् ।
गत्वा शवस्य सान्निध्यं धारयेत् कटिदेशतः ॥
यद्युपद्रावयेत् तस्य दद्यान्निष्ठीवनं मुखे ।
पुनः प्रक्षालितं कृत्वा जपस्थानं समानयेत् ॥
कुशशय्यां परिस्तीर्य तत्र संस्थायेच्छवम् ।
एलालवङ्गकर्पूरजातीखदिरसार्द्रकैः ॥
ताम्बूलं तन्मुखे दत्वा शवं कुर्यादधोमुखम् ।
स्थापयित्वा तस्य पृष्ठं चन्दनेन विलेपयेत् ॥
बाहुमूलादिकट्यन्तं चतुरस्रं विभावयेत् ।
मध्ये पद्मं चतुर्द्वारं दलाष्टकसमन्वितम् ॥
ततश्चैणेयमजिनं कम्बलान्तरितं न्यसेत् ।
द्वादशाङ्गुलमानेन यज्ञकाष्ठानि दिक्षु च ॥
इमं वालिं गृह्ण युगं गृह्णापय युगं ततः ।
विघ्ननिवारणं कृत्वा सिद्धिं प्रयच्छेति द्वयम् ॥
अनेन मनुना पूर्वं वलिं दद्याच्च सामिषम् ।
स्वस्वनामादिकं दत्वा पूर्ववद्वलिमाहरेत् ॥
सर्वेषां लोकपालानां ततः साधकसत्तमः ।
शवाधिस्थानदेवेभ्यो वलिं दद्यात् सुरया सह ॥

चतुःषष्टियोगिनीभ्यो डाकिनीभ्यो वलिं दिशेत् ।
पूजाद्रव्यं सन्निधौ च दूरे चोत्तरसाधकम् ॥
संस्थाप्यासनमभ्यर्च्य स्वमन्त्रान्ते त्रपां ततः ।
फडित्यनेन मन्त्रेण तत्राश्वारोहणं विशेत् ॥
कुशान् पादतले दत्वा शवकेशान् प्रमार्ज्य च ।
दृढं निबन्ध्य जुटिकां कृतसंकल्पसाधकः ॥
शवोपरि समारुह्य प्राणायामं विधाय च ।
वीरार्दनेन मन्त्रेण दिक्षु लोष्टान् समाक्षिपेत् ॥
ततो देवं समभ्यर्च्य उपचारैस्तु विस्तरैः ।
शवास्ये विधिवद्देवि देवताप्यायनं चरेत् ॥
उत्थाय संमुखे स्थित्वा पठेद्भक्तिपरायणः ।
वशो मे भव देवेश ममामुकपदं ततः ॥
सिद्धिं देहि महाभाग भूताश्रयपदाम्बरः ।
मूलं समुच्चरन्मन्त्री शवपादद्वयं ततः ॥
पट्टसूत्रेण बन्धीयात् तदोत्थातुं न शक्यते ।
ॐ भीरुभीम भयाभाव भव्यलोचनभावुक ॥
त्राहि मां देवदेवेश शवानामधिपाधिप ।
इति पादतले तस्य त्रिकोणं चक्रमालिखेत् ॥
तदोत्थातुं न शक्नोति शवोऽपि निश्चलो भवेत् ।
उपविश्य पुनस्तस्य बाहू निःसार्य पार्श्वयोः ॥
हस्तयोः कुशमास्तीर्य पादौ तत्र निधापयेत् ।
ओष्ठौ तु संपुटौ कृत्वा स्थिरचित्तः स्थिरेन्द्रियः ॥
सदा देवीं हृदि ध्यात्वा मौनी तु जपमाचरेत् ।
श्मशाने प्रोक्तसङ्ख्याभिर्जपं कुर्यात् कुलेश्वरि ॥

अथ वाऽऽरम्भकालात् तु यावच्चोदयते रविः ।
यद्यर्धरात्रिपर्यन्तं जप्ते किंचिन्न लक्ष्यते ॥
तदा पूर्ववदर्घादिसमयादागतानि च ।
कृत्वोपविश्य तत्रैव जपं कुर्यादनन्यधीः ॥
चलासनाद्भयं नास्ति भये जाते वदेत् ततः ।
यत् प्रार्थयसि देवेशि दातव्यं कुञ्जरादिकम् ॥
दिनान्तरे प्रदास्यामि स्वनाम कथस्व मे ।
इत्युक्त्वा संस्कृतेनैव निर्भयस्तु पुनर्जपेत् ॥
ततश्चेन्मधुरं वक्ति वक्तव्यं मधुरं ततः ।
तदा सत्यं च संस्कार्यं नरं च प्रार्थयेत् ततः ॥
यदि सत्यं न कुर्याच्च वरं वा न प्रयच्छति ।
तदा पुनर्जपेद्धीमानेकाग्रं मानसं भजन् ॥

(यक्षडामरे)

न पश्येदद्भुते जाते न भाषेत च न स्पृशेत् ।
एकचित्तो जपं कुर्याद्यावत् प्रत्यक्षतां व्रजेत् ॥

(वीरतन्त्रे)

नररूपो नात्र देवो यो नरो वोपसर्पति ।
यत्नतस्तेन बोद्धव्यं नरो वा देवयोनयः ॥
माता वा तत्सुता वाऽपि मातुलानी तथाऽपि वा ।
आगत्य विघ्नं चरते माययाऽऽच्छाद्य विग्रहम् ॥
उत्तिष्ठ वत्स ते कार्यं सर्वं जातं न संशयः ।
प्रभातसमयो जातस्त्वत्पिता क्रोशते गृहे ॥
प्रायेण सकला लोका राजानो दण्डधारिणः ।
कदा चित् केनाप्यादिष्टस्तदा किं ते करिष्यति ॥

इत्यादिविविधैर्वाक्यैर्न जपं परिसंत्यजेत् ।
मृताः पितृगणास्तत्र दूरदेशनिवासिनः ॥
बान्धवास्तत्र आयान्ति देवरूपधरास्ततः ।
स्त्रीपुत्रसेवकादींश्च गृहीत्वा नीयते परैः ॥
रुदन्ति पुत्रकाः सर्वे भ्रातरोऽनुजशिष्यकाः ।
निजकान्ताङ्गसंस्पर्शं वस्त्राद्याभरणादिकम् ॥
गृहीत्वा नीयते पत्नी पालकैस्तद्द्वयं त्यजेत् ।
यदि न क्षुभ्यते तत्र तदा किं वा न लभ्यते ॥
स्त्रीरूपधारिणी देवी द्विजरूपधरः पुमान् ।
वरं गृह्णेति शब्दं वै त्रिवारान्ते वरं लभेत् ॥
साधुनाऽसाधुना वाऽपि योषिच्चेद्वरदायिनी ।
तदा वीरपतेस्तस्य किं न सिद्ध्यति भूतले ॥
निष्पापः पुरुषश्चैव कुले चैव सुसंस्कृतः ।
असंस्कृतवरा देवी पापयुक्ता न संशयः ॥
संमुखेऽसंमुखे वाऽपि संस्कृतं वक्ति चापरम् ।
सैव देवी न संदेहः स देवो भैरवः स्वयम् ॥
न चेदेवं भवेच्चैव मायापुटितविग्रहात् ।
वरयेन्न वरं तत्र न वरं प्रवदेत् क्वचित् ॥
स चेत् संस्कृतमाख्यातं वक्ति वक्तव्यमीदृशम् ।
न चेत् स्वयं कौलिकोक्त्या वरं ग्राह्यं निराकुलम् ॥
अथ वा उत्कटं किञ्चिल्लभेताप्यात्मनो हितम् ।
शब्दो वा जायते सम्यगमृतं वाऽपि लभ्यते ॥
सर्वं विचार्य गृहीतव्यमेवं दिक् परिकीर्त्तिता ।

देव्याकृतयो बहुधा नराद्याकृतयः क्व चित् ॥
अवश्यं तत्र भेतव्यं न तत्र प्रत्ययः क्व चित् ।
भैरवा वटुकाश्चैव कुलशास्त्रपरायणाः ॥
एतच्छास्त्रप्रसङ्गेन कृत्या कुटिलविग्रहाः ।
पुत्रो भूत्वा वरयेत् तं नारी भूत्वा विमोहयेत् ॥
तस्मात् तत्त्वपरो वीर आचारे यत्नमाचरेत् ।

(भूतडामरे)

वदत्यागत्य चेष्टं वा देहस्फूरर्त्तिं करोति हि ।
एतेन जायते वीरसिद्धिर्दद्यात् ततो बलिम् ॥
देवतां च गुरुं नत्वा विसृज्य हृदयं पुनः ।
स्थापयेत् तोषयेद्विद्वान् शवं तोये विनिःक्षिपेत् ॥

(वीरतन्त्रे)

सत्ये कृते वरं लब्ध्वा संत्यजेच्च च जपादिकम् ।
जातं फलमिति ज्ञात्वा जूटिकां मोचयेत् ततः ॥
संप्रक्षाल्य च संस्थाप्य जूटिकां मोचयेत् पदे ।
पदचक्रं मार्जयित्वा पूजाद्रव्यं जले क्षिपेत् ॥
शवं जलेऽथ गर्त्ते वा निःक्षिप्य स्नानमाचरेत् ।
ततस्तु स्वगृहं गत्वा बलिं दत्वा दिनान्तरे ॥
अग्निमरात्रौ तु येषां देवानां यजमानोऽहम् ।
ते गृह्णन्तु मया दत्तं बलिमिमं च सामिषम् ॥
अथ यैर्याचितश्चाश्वनरकुञ्जरशूकरान् ।
दत्वा पिष्टमयानेव कर्त्तव्यं समुपोषणम् ॥

तत्रान्तरे ।

यवक्षोदमयं वाऽपि शालिक्षोदमयं च वा ।

चन्द्रहासेन विधिवत् तत्तन्मन्त्रेण पातयेत् ॥
परेऽह्नि नित्यमाचर्य पञ्चगव्यं पिवेत् ततः ।
ब्राह्मणान् भोजयेत् तत्र पञ्चविंशतिसंख्यकान् ॥
पञ्च पञ्च गृहीतान् वा क्रमाच्चैव दशावधि ।
ततः स्नात्वा च भुक्त्वा च निवसेदुत्तमस्थले ॥
यदि न स्याद्विप्रभोज्यं तदा निर्धनतां व्रजेत् ।
तेन चेन्निर्धनत्वं स्यात् तदा देवः प्रकुप्यति ॥
त्रिरात्रं वाऽथ षड्रात्रं गोपयेत् कुलसाधनम् ।
शय्यायां यदि गच्छेद्वा तदा व्याधी प्रजायते ॥
गीतं श्रुत्वा च वधिरो निश्चक्षुर्नृत्यदर्शनात् ।
यदि वक्ति दिने वाक्यं तदा स मूकतां व्रजेत् ॥
पञ्चदशदिनान्ता हि देहे देवस्य संस्थितिः ।
गोब्राह्मणानां देवानां निन्दां कुर्यान्न कुत्र चित् ॥
देवगोब्राह्मणादींश्च प्रत्यहं तु स्पृशेच्छुचिः ।
प्रातर्नित्यक्रियान्ते तु विल्वपत्रोदकं पिवेत् ॥
ततः स्नायात् तु तीर्थादौ प्राप्ते षोडशवासरे ।
स्वाहान्तं मूलमुच्चार्य तर्पयामि नमःपदम् ॥
एवं पदत्रयादूर्ध्वं देवानां तर्पणं जलैः ।
मुनितर्पणशून्यस्य न स्याद्देवस्य तर्पणम् ॥
इत्यनेन विधानेन सिद्धिमाप्नोति निश्चितम् ।
इह भुक्त्वा वरान् दिव्यानन्ते याति हरेः पदम् ॥
अनङ्गं साङ्गमपि वा निष्फलं सफलं च वा ।
कृत्वा साधनमेवैतच्छक्तेः प्रियतमो भवेत् ॥

देव्याकृतयो बहुधा नराद्याकृतयः क चित् ॥
अवश्यं तत्र भेतव्यं न तत्र प्रत्ययः क चित् ।
भैरवा वटुकाश्चैव कुलशास्त्रपरायणाः ॥
एतच्छास्त्रप्रसङ्गेन कृत्या कुटिलविग्रहाः ।
पुत्रो भूत्वा वरयेत् तं नारी भूत्वा विमोहयेत् ॥
तस्मात् तत्त्वपरो वीर आचारे यत्नमाचरेत् ।

(भूतडामरे)

वदत्यागत्य चेष्टं वा देहस्फूर्त्तिं करोति हि ।
एतेन जायते वीरसिद्धिर्दद्यात् ततो वलिम् ॥
देवतां च गुरुं नत्वा विसृज्य हृदयं पुनः ।
स्थापयेत् तोषयेद्विद्वान् शवं तोये विनिःक्षिपेत् ॥

(वीरतन्त्रे)

सत्ये कृते वरं लब्ध्वा संत्यजेच्च च जपादिकम् ।
जातं फलमिति ज्ञात्वा जूटिकां मोचयेत् ततः ॥
संप्रक्षाल्य च संस्थाप्य जूटिकां मोचयेत् पदे ।
पदचक्रं मार्जयित्वा पूजाद्रव्यं जले क्षिपेत् ॥
शवं जलेऽथ गर्त्ते वा निःक्षिप्य स्नानमाचरेत् ।
ततस्तु स्वगृहं गत्वा वलिं दत्वा दिनान्तरे ॥
अग्निमरात्रौ तु येषां देवानां यजमानोऽहम् ।
ते गृह्णन्तु मया दत्तं वलिमिमं च सामिषम् ॥
अथ यैर्याचितश्वाश्वनरकुञ्जरशूकरान् ।
दत्वा पिष्टमयानेव कर्त्तव्यं समुपोषणम् ॥

तत्रान्तरे ।

यवक्षोदमयं वाऽपि शालिक्षोदमयं च वा ।

चन्द्रहासेन विधिवत् तत्तन्मन्त्रेण पातयेत् ॥
परेऽह्नि नित्यमाचर्य पञ्चगव्यं पिवेत् ततः ।
ब्राह्मणान् भोजयेत् तत्र पञ्चविंशतिसंख्यकान् ॥
पञ्च पञ्च गृहीतान् वा क्रमाच्चैव दशावधि ।
ततः स्नात्वा च भुक्त्वा च निवसेदुत्तमस्थले ॥
यदि न स्याद्विप्रभोज्यं तदा निर्धनतां व्रजेत् ।
तेन चेन्निर्धनत्वं स्यात् तदा देवः प्रकुप्यति ॥
त्रिरात्रं वाऽथ षड्रात्रं गोपयेत् कुलसाधनम् ।
शय्यायां यदि गच्छेद्वा तदा व्याधी प्रजायते ॥
गीतं श्रुत्वा च वधिरो निश्चक्षुर्नृत्यदर्शनात् ।
यदि वक्ति दिने वाक्यं तदा स मूकतां व्रजेत् ॥
पञ्चदशदिनान्ता हि देहे देवस्य संस्थितिः ।
गोब्राह्मणानां देवानां निन्दां कुर्यान्न कुत्र चित् ॥
देवगोब्राह्मणादींश्च प्रत्यहं तु स्पृशेच्छुचिः ।
प्रातर्नित्यक्रियान्ते तु विल्वपत्रोदकं पिवेत् ॥
ततः स्नायात् तु तीर्थादौ प्राप्ते षोडशवासरे ।
स्वाहान्तं मूलमुच्चार्य तर्पयामि नमःपदम् ॥
एवं पदत्रयादूर्ध्वं देवानां तर्पणं जलैः ।
मुनितर्पणशून्यस्य न स्याद्देवस्य तर्पणम् ॥
इत्यनेन विधानेन सिद्धिमाप्नोति निश्चितम् ।
इह भुक्त्वा वरान् दिव्यानन्ते याति हरेः पदम् ॥
अनङ्गं साङ्गमपि वा निष्फलं सफलं च वा ।
कृत्वा साधनमेवैतच्छक्तेः प्रियतमो भवेत् ॥

शवाभावे श्मशाने वा कर्त्तव्या वीरसाधना ।
ये भावा यस्य वै प्रोक्तास्तैर्भावैर्यदि नार्चयेत् ॥
ईदृशक्रमयोगेन भ्रष्टो भवति साधकः ।
नोपदिशेत् तत्र भावं न पूजां तत्र संदिशेत् ॥
श्मशानान्तं गृहीत्वा तु तावच्छुद्धिः प्रजायते ।
(वीरचूडामणौ)
अथ वाऽन्यप्रकारेण साधनं कथयामि ते ।
जपस्थानं तु संशोध्य खननादि प्रयत्नतः ॥
तन्मध्ये च वलिं दद्याल्लिखेद्यन्त्रं त्रिकोणकम् ।
तन्मध्ये च महाशङ्खं निवेश्य मुण्डपञ्चकम् ॥
तस्योपरि महाप्रेतमखण्डाङ्गं सुशोभनम् ।
उद्वर्त्तनादिकं कुर्यात् स्नापयेद्विधिपूर्वकम् ॥
परिधाप्यं रक्तवस्त्रं नेत्राञ्जनसमीरितम् ।
ताम्बूलादि मुखे दद्याल्ललाटे रक्तचन्दनम् ॥
हृदये च लिखेद्यन्त्रं पद्ममध्ये त्रिकोणकम् ।
पूजायन्त्रं ललाटे च शस्त्रेण विलिखेत् ततः ॥
मूर्ध्नि बाहौ तथा हस्ते पादे चैव तथा कटौ ।
खदिरादीनि काष्ठानि कीलान्यारोपयेत् सुधीः ॥
बन्धकं वर्द्धयेत् तत्र दृढबन्धेन बन्धयेत् ।
षट्पात्रेषु वलिं दद्यात् कीले कीले पृथक् पृथक् ॥
माषं मांसं तथा मत्स्यं पायसं त्रिविधाः सुराः ।
मोदकं च महापूपं दुग्धान्नोत्सर्गमाचरेत् ॥
क्रोधीशवह्निमारूढं तूर्यस्वरसमन्वितम् ।
वर्मबीजं समुच्चार्य श्मशानकालिकेति च ॥

पूर्वबीजं समालिख्य अस्त्रान्तो मन्त्र उच्यते।
मायाबीजं समुच्चार्य श्मशानभैरवाय च॥
महाकालाय देवाय सर्वविघ्नहरो भव।
बलिं गृह्ण द्विधा कुर्यात् त्रयोदशं सबिन्दुकम्॥
श्मशानवासिनो रुद्रा अस्थिमांसबलिप्रियाः।
विघ्नं निवारय सम्यग्बलिं गृह्ण द्विधा पुनः॥
विघ्नं निवारय युगं वरं चैव प्रयच्छ मे।
द्विठान्तो मन्त्र इत्युक्तो बलिरुक्तविधानतः॥
माया लज्जा तथा लक्ष्मीर्नन्दिनीशत्रयं लिखेत्।
नारायणस्तथा सूक्ष्मपरं तु मधुसूदनः॥
योगिनीभ्यः परं पश्चात् श्मशानवासिनीति च।
प्रचण्डा चण्डरूपायै कर्त्तृखर्परधारिणी॥
बलिं गृह्णापय युगं सर्वविघ्नं निवारय।
वरं देहि पदं ब्रूयाद्द्विठान्तो योगिनीबलिः॥
रौद्रं वह्निसमारूढं चतुर्दशस्वरान्वितम्।
बिन्दुनादकलाक्रान्तं क्षेत्रपालं च ङेऽन्तम्॥
श्मशानवासिने ब्रूयाच्छोणितास्थिप्रियाय च।
द्विठान्तं मन्त्रमुच्चार्य क्षेत्रपालबलिं हरेत्॥
वाराहीबीजमुद्धृत्य बीजं पश्चान्तकं पुनः।
वक्रतुण्डायेति पदं वर्म चैव समुद्धरेत्॥
बलिं गृह्णपदं ब्रूयाद्विघ्नं निवारयेति च।
सिद्धिं प्रयच्छ मे चैव अस्त्रान्तो मनुरुत्तमः॥
पादस्यापादनं कुर्यान्मदिरानन्दविग्रहः।

शवाभावे श्मशाने वा कर्त्तव्या वीरसाधना ।
ये भावा यस्य वै प्रोक्तास्तैर्भावैर्यदि नार्चयेत् ॥
ईदृशक्रमयोगेन भ्रष्टो भवति साधकः ।
नोपदिशेत् तत्र भावं न पूजां तत्र संदिशेत् ॥
श्मशानान्तं गृहीत्वा तु तावच्छुद्धिः प्रजायते ।
(वीरचूडामणौ)
अथ वाऽन्यप्रकारेण साधनं कथयामि ते ।
जपस्थानं तु संशोध्य खननादि प्रयत्नतः ॥
तन्मध्ये च वलिं दद्याल्लिखेद्यन्त्रं त्रिकोणकम् ।
तन्मध्ये च महाशङ्खं निवेश्य मुण्डपञ्चकम् ॥
तस्योपरि महाप्रेतमखण्डाङ्गं सुशोभनम् ।
उद्वर्त्तनादिकं कुर्यात् स्नापयेद्विधिपूर्वकम् ॥
परिधाप्यं रक्तवस्त्रं नेत्राञ्जनसमीरितम् ।
ताम्बूलादि मुखे दद्याल्ललाटे रक्तचन्दनम् ॥
हृदये च लिखेद्यन्त्रं पद्ममध्ये त्रिकोणकम् ।
पूजायन्त्रं ललाटे च शस्त्रेण विलिखेत् ततः ॥
मूर्ध्नि बाहौ तथा हस्ते पादे चैव तथा कटौ ।
खदिरादीनि काष्ठानि कीलान्यारोपयेत् सुधीः ॥
बन्धकं वर्द्धयेत् तत्र दृढबन्धेन बन्धयेत् ।
षट्पात्रेषु वलिं दद्यात् कीले कीले पृथक् पृथक् ॥
माषं मांसं तथा मत्स्यं पायसं त्रिविधाः सुराः ।
मोदकं च महापूपं दुग्धान्नोत्सर्गमाचरेत् ॥
क्रोधीशवह्निमारूढं तूर्यस्वरसमन्वितम् ।
वर्मबीजं समुच्चार्य श्मशानकालिकेति च ॥

पूर्वबीजं समालिख्य अस्त्रान्तो मन्त्र उच्यते ।
मायाबीजं समुच्चार्य श्मशानभैरवाय च ॥
महाकालाय देवाय सर्वविघ्नहरो भव ।
वलिं गृह्ण द्विधा कुर्यात् त्रयोदशं सविन्दुकम् ॥
श्मशानवासिनो रुद्रा अस्थिमांसवलिप्रियाः ।
विघ्नं निवारय सम्यग्वलिं गृह्ण द्विधा पुनः ॥
विघ्नं निवारय युगं वरं चैव प्रयच्छ मे ।
द्विठान्तो मन्त्र इत्युक्तो वलिरुक्तविधानतः ॥
माया लज्जा तथा लक्ष्मीर्नन्दिनीशत्रयं लिखेत् ।
नारायणास्तथा सूक्ष्मपरं तु मधुसूदनः ॥
योगिनीभ्यः परं पश्चात् श्मशानवासिनीति च ।
प्रचण्डा चण्डरूपायै कर्त्तृखर्परधारिणी ॥
वलिं गृह्णापय युगं सर्वविघ्नं निवारय ।
वरं देहि पदं ब्रूयाद्द्विठान्तो योगिनीवलिः ॥
रौद्रं वह्निसमारूढं चतुर्दशस्वरान्वितम् ।
विन्दुनादकलाक्रान्तं क्षेत्रपालं च ङेऽन्तम् ॥
श्मशानवासिने ब्रूयाच्छोणितास्थिप्रियाय च ।
द्विठान्तं मन्त्रमुच्चार्य क्षेत्रपालवलिं हरेत् ॥
वाराहीबीजमुद्धृत्य बीजं पश्चान्तकं पुनः ।
वक्रतुण्डायेति पदं वर्म चैव समुद्धरेत् ॥
वलिं गृह्णपदं ब्रूयाद्विघ्नं निवारयेति च ।
सिद्धिं प्रयच्छ मे चैव अस्त्रान्तो मनुरुत्तमः ॥
पादस्यापादनं कुर्यान्मदिरानन्दविग्रहः ।

हृदयोपरि महावीरः शक्तिं चैव शवोपरि ॥
विवस्त्रा मुक्तकेशी च कर्तृखर्परधारिणी ।
प्रक्षाल्य कुलद्रव्येण कुलचक्रं प्रपूजयेत् ॥
धूपदीपादिनैवेद्यैः पञ्चभूतवलिं हरेत् ।
यथाशक्ति जपं कुर्यात् मूलमन्त्रं समर्पयेत् ॥
विपरीतपरा नीवी मैथुनं च शवोपरि ।
अयुतं च जपेत् तत्र सर्वसिद्धीश्वरो भवेत् ॥
यदा वै भयभीतोऽसौ भक्षयन्ति च तत्क्षणात् ।
देहि देहि यदा ब्रूयात् तदा छागवलिं हरेत् ॥
वलिदानं विना हिंसा न कर्त्तव्या कदा चन ।
पुरश्चरणतो मन्त्रसिद्धिर्भवति निश्चितम् ॥

(मुण्डमालायाम्)

अथ वाऽन्यप्रकारेण कुर्याद्वै वीरसाधनम् ।
संग्रामे पतितान् प्रेतानानीय विधिपूर्वकम् ॥
अष्टदिक्षु विधायाष्टौ नवमं मध्यसंस्थकम् ।
रज्ज्वा रज्ज्वा रज्जुनाथ रोपिते दृढकीलके ॥
चन्दनादिभिरभ्युक्ष्य सुगन्धिकुसुमादिभिः ।
अलङ्कृत्य प्रयत्नेन मध्यमस्याथ मस्तकम् ॥
ललाटे पूजयेद्देवीमुपचारैः समुज्ज्वलैः ।
वलिं दद्यादष्टदिक्षु माषमांसैः सुराशवैः ॥
पायसैर्मधुसंयुक्तैः कुसुमैरक्षतैस्तथा ।
ततो जपं प्रकुर्वीत शवस्य हृदि निर्भयः ॥
उपविश्यासने शोणे व्याघ्रचर्मविनिर्मिते ।
पञ्चायुतं च जप्त्वाऽथ पूर्ववत् कल्पयेद्वलिम् ॥

व्याघ्रवानरभल्लूकशृगालोल्कामुखानथ ।
दृष्ट्वाऽथ न भयं कुर्यान्मायामेव विचिन्तयेत् ॥
ततोऽनुभावं लब्ध्वाऽथ दद्याच्छागादिकं बलिम् ।
तथाऽक्लिष्टमना भूत्वा शवं निःक्षिप्य वारिणि ॥
द्विजेभ्यो दक्षिणां दद्यात् साधकेभ्यो विशेषतः ।
सुवेशाभ्यस्तथा स्त्रीभ्यः कुमारीभ्यः प्रयत्नतः ॥
वसनं भूषणं तद्वन्मधुरद्रव्यभोजनम् ।
स्वयं तथैव भुञ्जीत नराणां तु विवर्जयेत् ॥
एतेन तु महासिद्धिर्जायते भुवि दुर्लभा ।
राज्यं श्रियं परानन्दो वैरिराष्ट्रजयं तथा ॥
जगन्मोहनवश्यादि कविताकौशलं पुनः ।
संग्रामे च तमुद्दिश्य साधकं वैरिवाहिनी ॥
पलायते प्रगल्भाऽपि किं पुनः क्षुद्रवैरिणः ।
नानाविधाष्टसिद्धीनां साधको भाजनं भवेत् ॥
इदं मयोक्तं देवेशि न प्रकाश्यं कदा चन ।
एतत् ते परमं गोप्यं विशेषात् पशुसंसदि ॥
रहस्यमेतत् परममागमस्यैकजीवितम् ।

इति वीरसाधनविधिः ।

बिभ्रत्यद्भुतभूतिभूतपवचो वैचित्र्यचित्रामृत-
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
नव्येऽस्मिन् नरदेवनिर्मितपुरश्चर्यार्णवे सप्तमः
सद्युक्तिस्फुटमौक्तिकोत्कररुचोत्तुङ्गस्तरङ्गो गतः ॥

इति श्रीमन्महाराजाधिराजप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे मन्त्रसिद्धिलक्षणोपायपुरश्चरणभेदनिरूपणं नाम सप्तमस्तरङ्गः ॥

# अथ गणेशादिमन्त्रास्तत्पुरश्चरणविशेषाश्च प्रदर्श्यन्ते ।



तत्रादौ विघ्नराजमन्त्र उक्तो (मेरुतन्त्रे)

असिद्धगुरुणा दत्तो मन्त्रः स्याद्बहुविघ्नदः ।
तत्रादौ साधयेद्विघ्नराजमन्त्रं ततः पुनः ॥
निष्पापस्य पुरश्चर्याबलात् सिद्ध्येन्मनूत्तमः ।
तत्राम्नायविभेदेन सर्वतन्त्रेषु गोपितम् ॥
एकबीजात्मकं वक्ष्ये विघ्नमन्त्रं सुसिद्धिदम् ।
तत्रादौ वैदिकाना तु गकारः केवलो मतः ॥
दक्षिणानां विन्दुयुक्तो द्विविन्दुः पूर्वमार्गिणाम् ।
एतद्द्वययुतः प्रश्चादूर्ध्वाम्नाये च गौमिति ॥
ग्लौमुत्तरे गोमति च पातालाम्नायमीरितम् ।
गणपोऽस्य मुनिश्छन्दो निवृद्विघ्नोऽस्य देवता ॥
गणं जपाय स्वाहा हृत्कमेकदंष्ट्राय हुँफट् ।
अचलकर्णिने नमः शिखा प्रोक्ताऽथ वर्म तु ॥
गजवक्त्राय च नमो नेत्रमस्त्रमुदीर्यते ।
महादशमचण्डाय हुँ फडेतच्च वैदिकैः ॥
षड्दीर्घयुक्तबीजेन तान्त्रिको न्यासमाचरेत् ।

अथ ध्यानम् ।

रक्ताम्बरं रक्तवर्णं रक्तगन्धानुलेपनम् ।
रक्तपुष्पैः पूज्यमानं तुन्दिलं चन्द्रमौलिनम् ॥
त्रिनेत्रं वामनं बिभ्रद्बीजपूरं च शुण्डया ।
वामदक्षोर्ध्वयोः पाशाङ्कुशौ चक्रं वरस्त्वधः ॥
पद्मासनं सर्पभूषं ध्यायेद्विघ्नविनायकम् ।

(शारदायाम्)

सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं
दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्बीजपूराभिरामम् ।
बालेन्दुद्योतिमौलिं करिपतिवदनं दानपूरार्धगण्डं
भोगीन्द्राबद्धमौलिं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥

अस्य मन्त्रस्य पुरश्चरणमुक्तं (मेरुतन्त्रे)

लक्षमेकं मनुं जप्त्वा जुहुयात् तद्दशांशतः ।

(शारदायां तु)

वेदलक्षं जपेन्मन्त्रं दशांशं जुहुयात् ततः—इत्युक्तम् ।

तथा—

मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः ।
नारिकेलैस्तिलैर्मोचैर्होमं कुर्यात् पृथक् पृथक् ॥
सहस्रमेकं द्विशतं पञ्चाशत्प्रमितं तथा ।
दलैस्त्रिमधुराक्तैः स्याद्धोमः काम्योऽथ कथ्यते ॥
दौग्धान्नेन घृताक्तेन होमोऽभीष्टफलप्रदः ।
लक्ष्मीकामो नारिकेलैश्चतुर्थ्यां जुहुयात् तथा ॥

मोचं कदलीफलम् ।

अथ लक्ष्मीगणेशमन्त्रस्तत्रैव ।

वक्ष्येऽथ दक्षिणाम्नाये लक्ष्मीगणपतिं सुराः ।
गजलक्ष्मीसमायुक्तमयं योगोऽतिदुर्लभः ॥
श्रीगँ सौम्याय वोच्चार्य महागणपतिं तथा ।
ङेऽन्तमुक्त्वा वरवरदोक्त्वा सर्वजनं वदेत् ॥
मे वशमानय स्वाहेत्येकोनत्रिंशदक्षरः ।
अन्तर्यामी मुनिश्छन्दो गायत्री निवृदन्विता ॥
देवो लक्ष्मीगणेशोऽत्राथाद्यबीजद्वयेन तु ।

षड्दीर्घयुक्तेनाङ्गानि जातियुक्तानि कारयेत् ॥

अथ ध्यानम् ।

हेमाभं पीतवसनं चक्रशङ्खरदाभयान् ।
दक्षोर्ध्वकरमारभ्य दक्षिणाधःकरावधि ॥
दधतं शुण्डया स्वर्णघटं पद्मोपरि स्थितम् ।
वामाङ्काविष्टलक्ष्म्या चाश्लिष्टं दक्षभुजेन च ॥

अस्य पुश्चरणं तत्रैवोक्तम् ।

लक्षं जपो हुनेद्बिल्वसमिधो मधुरप्लुताः ।
तर्पणादि ततः कृत्वा काम्यकर्मादि साधयेत् ॥
हुनेच्चतुस्सहस्राणि श्रीफलैर्मधुराप्लुतैः ।
महालक्ष्मीकरो होमः पुत्रमित्रकलत्रदः ॥

अथ शक्तिगणेशमन्त्रस्तन्त्रान्तरे ।

पञ्चान्तको वह्निसंस्थो वामनेत्रार्धचन्द्रवान् ।
मायासंपुटितस्त्र्यर्णो मन्त्रः शक्तिगणेशितुः ॥

(मेरुतन्त्रे)

अक्षरोऽयं विराट् छन्दो मुनिर्भार्गव ईरितः ।
देवता शक्तिगणपः षडङ्गानि समाचरेत् ॥
षड्दीर्घयुग्गकारेण ततो ध्यायेद्गजाननम् ।

ध्यानं यथा—

दक्षोर्ध्वे चाङ्कुशं वामे पाशं वामे त्वधःकरे ।
बीजपूरं स्वदन्तं तु दक्षिणे स्वर्णवर्णकम् ॥
पुष्करे मोदकं बिभ्रत् कर्णयोर्दीर्घचामरे ।

अस्य मन्त्रस्य पुरश्चरणं तत्रैवोक्तम् ।

लक्षमेकं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ।
तद्दशांशं प्रजुहुयादपूपैर्घृतसंप्लुतैः ॥

एवं सिद्धमनुर्मन्त्री काम्यकर्माणि साधयेत् ।

अथ क्षिप्रप्रसादनगणेशमन्त्रो (निबन्धे)

संवर्त्तको नेत्रयुतः पार्श्वौ वह्न्यासने स्थितः ।
प्रसादनाय हृन्मन्त्रः स्वबीजाढ्यो दशाक्षरः ॥

(मेरुतन्त्रे)

ऋषिर्गणक आख्यातश्छन्दः प्रोक्तं विराडिति ।
देवता कथितः क्षिप्रप्रसादनविनायकः ॥
षड्दीर्घभाजा बीजेन कुर्यादङ्गक्रियां मनोः ।

अथ ध्यानं (शारदायाम्)

पाशाङ्कुशौ कल्पलतां विषाणं
दधत् सुतुण्डाहितबीजपूरः ।
रक्तस्त्रिनेत्रस्तरुणेन्दुमौलि-
र्हारोज्ज्वलो हस्तिमुखोऽवताद्वः ॥

अस्य पुरश्चरणं (मेरुतन्त्रे)

लक्षमेकं जपेन्मन्त्रं *त्रिस्वाद्वक्तैस्तिलैर्हुनेत् ।
पूर्वोदिताष्टद्रव्यैर्वा तर्पणादि ततश्चरेत् ॥

अथ वक्रतुण्डमन्त्रस्तत्रैव ।

वक्रतुण्डाय हुँ चेति प्रोक्तो मन्त्रः षडक्षरः ।
ह्रस्वं तु कवचं स्त्रीभिर्जप्तव्यं सर्वसिद्धिदम् ॥
भार्गवो मुनिराख्यातोऽनुष्टुप् छन्द उदाहृतम् ।
देवता वक्रतुण्डोऽस्य सुरासुरनमस्कृतः ॥
षड्भिर्मन्त्रगतैर्वर्णैः षडङ्गानि प्रकल्पयेत् ।

अथ ध्यानम् ।

उद्यद्दिनेश्वररुचिं पाशाङ्कुशवराभयान् ।
हस्तैर्दधानं स्मेरास्यमरुणं चिन्तयेद्धृदि ॥

---

* त्रिमध्वक्तैरिति ३ पु० पा. ।

पुरश्चरणमाह ।

वर्णलक्षं जपेन्मन्त्रं जुयात् तद्दशांशतः ।
अष्टद्रव्यैः पुरा प्रोक्तैर्मधुराक्तैर्यथाविधि ॥

अथ हेरम्बमन्त्रः (शारदायाम्)

पञ्चान्तको विन्दुयुतो वामकर्णविभूषितः ।
तारादिहृदयान्तोऽयं हेरम्बमनुरीरितः ॥
चतुर्वर्णात्मको नृणां चतुर्वर्गफलप्रदः ।

(मेरुतन्त्रे)

मुनिर्गणक आख्यातो गायत्री छन्द ईरितम् ।
पञ्चवक्त्रोऽस्य हेरम्बो देवता सिंहवाहनः ॥
षड्दीर्घबीजयुक्तेन षडङ्गविधिरीरितः ।

ध्यानं तु (शारदायाम्)

मुक्ताकाञ्चननीलकुन्दघुसृणच्छायैस्त्रिनेत्रान्वितै-
र्नागास्यैर्हरिवाहनं शशधरं हेरम्बमर्कप्रभम् ।
दृप्तं दानमभीतिमोदकरदान् टङ्कं शिरोऽक्षात्मिकां
मालां मुद्गरमङ्कुशं त्रिशिखकं दोर्भिर्दधानं भजे ॥

अस्य पुरश्चरणमुक्तं (मेरुतन्त्रे)

लक्षत्रयं जपित्वा तं तिलैर्हुत्वा दशांशतः ।
मधुरत्रयसंयुक्तैस्तर्पणादि समाचरेत् ॥
एवं सिद्धमनुर्मन्त्री प्रयोगानाचरेत् ततः ।

अथ हरिद्रागणेशमन्त्रस्तन्त्रान्तरे ।

पञ्चान्तको धरासंस्थो विन्दुभूषितमस्तकः ।
एकाक्षरो महामन्त्रः सर्वकामफलप्रदः ॥

यद्वा मन्त्रान्तरम् ।

मन्त्रोद्धारं प्रवक्ष्यामि शृणुष्व कमलानने ।
इन्द्रबीजं समुद्धृत्य निजबीजं समुद्धरेत् ॥

चतुर्दशस्वरेणाढ्यं विन्दुभूषितमस्तकम् ।
एकाक्षरी महाविद्या कथिता पद्मयोनिना ॥
बीजेन दीर्घयुक्तेन कराङ्गन्यासकल्पना ।

मन्त्रान्तराणि विस्तरभयादुपेक्षितानि ।

अथ ध्यानम् ।

हरिद्राभं चतुर्बाहुं हारीतवसनं विभुम् ।
पाशाङ्कुशधरं देवं मोदकं दन्तमेव च ॥

अस्य पुरश्चरणमुक्तं (मेरुतन्त्रे)

वेदलक्षं जपित्वाऽन्ते हरिद्राचूर्णमिश्रितैः ।
दशांशं तण्डुलैर्हुत्वा ब्राह्मणानपि भोजयेत् ॥

अथ महागणपतिमन्त्रो ( मेरुतन्त्रे ) ।

ऊर्ध्वाम्नाये प्रवक्ष्यामि गणेशान् सिद्धिदायकान् ।
भुक्तिमुक्तिप्रदं तत्र महागणपतिं शृणु ॥
तारः श्रीबीजहृल्लेखा कामो भूबीजमेव च ।
गणेशबीजं गणपतये वरवरेति च ॥
दसर्वजनं मे वशमानयाग्निवधूरिति ।
अष्टाविंशतिवर्णोऽयं गणकोऽस्य मुनिर्मतः ॥
निवृद्गायत्रिका छन्दो महागणपतिः सुरः ।
गँ बीजं ह्रीं च शक्तिः स्याद्दीर्घषट्कयुतस्तु गः ॥
तारादिबीजषट्केन पृथग्युक्तेन कारयेत् ।
षडङ्गानि मनोरस्य जातियुक्तान्यथाचरेत् ॥
अथ वा तारपूर्वेण दीर्घषट्कयुतेन च ।
स्वबीजेनाङ्गुलिन्यासं षडङ्गानि समाचरेत् ॥

अथ ध्यानम् ।

ऐक्षवे जलधौ द्वीपे नवरत्नमये शुभे ।

तत्तरङ्गलसत्तोयैर्धौते शीतमहीतले ॥
तत्तोयगणसंपृक्तगन्धावाहनिषेविते ।
कल्पपादपसंशोभिभूभागे समलङ्कृते ॥
नानाकुसुमसङ्कीर्णे नानापक्षिविराजिते ।
अनेकफलसंकीर्णे सेविते चाऽप्सरोगणैः ॥
उद्यद्बालातपज्योतिश्चन्द्रज्योत्स्नासमाकुले ।
विलसत्पद्मरागौघकुट्टिमारुणभूतले ॥
कल्पपादपपुष्पस्थषट्पदस्वनमञ्जुले ।
पारिजातं कल्पतरुं तस्य मध्ये विचिन्तयेत् ॥
युगपदृतुषट्केन खचितं पुष्पशोभितम् ।
नवरत्नमयं तस्याधस्तात् सिंहासनं स्मरेत् ॥
तन्मध्ये लिपिपद्मं च षडारं तस्य मध्यतः ।
कर्णिकायां गणेशं च तत्संस्थं च महागणम् ॥
(शारदायाम्)
षट्कोणान्तस्त्रिकोणस्थं महागणपतिं स्मरेत् ।
हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसा-
श्लिष्टं स्वप्रियया सुपद्मकरया स्वाङ्कस्थया सन्ततम् ।
बीजापूरगदाधनुस्त्रिशिखयुक्चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशान् हस्तैर्वहन्तं भजे ॥
गण्डपालीगलद्दानपानलालसमानसान् ।
द्विरेफान् कर्णतालाभ्यां वारयन्तं मुहुर्मुहुः ॥
कराग्रधृतमाणिक्यकुम्भवक्त्रविनिःसृतैः ।
रत्नवर्षैः प्रीणयन्तं साधकान् मदविह्वलम् ॥
माणिक्यमुकुटोपेतं रत्नाभरणभूषितम् ।

अस्य मन्त्रस्य पुरश्चरणमुक्तं (मेरुतन्त्रे)

एकादशायुतं जप्त्वा सहस्रोत्तरमादरात् ।
दशांशं जुहुयादष्टद्रव्यैरेकाक्षरोदितैः ॥
तर्पयित्वा दशांशेन चाभिषिक्तोऽणुना ततः ।
ब्राह्मणान् भोजयेत् सम्यक् षड्रसैर्भूरिदक्षिणाम् ॥
दत्वा प्रणम्य विसृजेदेवं सिद्धो भवेन्मनुः ।

(शारदायां तु)

ध्यायेन्मन्त्रं जपेन्मन्त्री चतुर्लक्षं समाहितः ।
चतुस्सहस्रसंयुक्तं चत्वारिंशत्सहस्रकम्—इत्युक्तम् ॥

अथ विरिञ्चिगणनायकमन्त्रो (मेरुतन्त्रे)

अथातः संप्रवक्ष्यामि पूर्वाम्नायगणेश्वरान् ।

विरञ्चिविघ्नेशमुक्ता—

अथान्यत् संप्रवक्ष्यामि ब्रह्मणा समुपासितम् ।
काश्यां ब्रह्मेशसौम्यस्थं विरिञ्चिगणनायकम् ॥
ह्रीँ विरिञ्चिपदं प्रोक्त्वा ङेऽन्तं गणपतिं ततः ।
प्राग्वद्वरवरेत्यादि षड्विंशत्यक्षरो मनुः ॥
वेदपञ्चेषुपञ्चेषुद्व्यर्णैरुक्तं षडङ्गकम् ।

तथा—

अस्य ध्यानं प्रवक्ष्यामि ह्यूर्ध्वमूर्ध्वकरेषु च ।
बीजपूरं गदां चापं चक्रं मालां च दक्षिणे ॥
वामे पद्मं पाशबाणान् दन्तं रत्नाढ्यकुम्भकम् ।
पद्मद्वयकरां पुष्टिमङ्कस्थामरुणप्रभाम् ॥
आलिङ्गयन्तमरुणं स्रवन्मदकपोलकम् ।
त्रिनेत्रं पीतवसनं दृढमुत्थापितध्वजम् ॥
किरीटिनं कुण्डलिनं ध्यायेद्देवं गजाननम् ।

अस्य पुरश्चरणम् ।

वेदलक्षमिता प्रोक्ता सर्वेषां तु पुरस्क्रिया ।
मधुरत्रयसंयुक्तैः पूर्वोक्तैरष्टभिर्हुनेत् ॥

सर्वेषामिति । अत्र विस्तरभयादुपेक्षितानां विरिञ्चिविघ्नेशादिमन्त्राणाम् ।
अथ विघ्नगणेशमन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि पश्चिमाम्नायसिद्धिदान् ।
नानाश्चर्यकरान् काशीसंस्थितान् गणनायकान् ॥
महागणपतेरंशाश्चतुःषष्टिविनायकाः ।
एकैकान्ते गृहीत्वा तु योगिनीं चेटिकामपि ॥
स्वर्णभूमिं समासाद्य यावदन्तर्गृहं मम ।
अष्टावरणकैरष्टौ संस्थिताः सिद्धिदायकाः ॥
तत्राष्टौ काशिकाबाह्ये स्वर्गभूमौ समास्थिताः ।
योजनैकं बहिः काश्यां कीर्त्तितः परिधिस्तु सः ॥
गँ विघ्नाय नमः प्रोक्तो मन्त्र एव षडक्षरः ।
क्षिप्रप्रसादनसममष्टानां साधनं स्मृतम् ॥

पुरश्चरणे विशेषमाह तत्रैव ।

वेदायुतं जपेन्मन्त्रं होमश्च घृतपायसैः ।
प्रयोगाः क्षिप्रमेवात्र क्षिप्रमेव च सिद्धयः ॥

अथोच्छिष्टगणेशमन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि उत्तराम्नायसिद्धिदान् ।
वदेद्धस्तिपिशाचीति लिखेत् स्वाहा नवाक्षरः ॥
कङ्कालोऽस्य मुनिश्छन्दो विराडुच्छिष्टनामकः ।
गणेशो देवता प्रोक्तः सर्वसंपत्प्रदायकः ॥
द्वित्रिद्विद्विद्विभिश्चास्य पञ्चाङ्गविधिरीरितः ।

अस्य ध्यानं तन्त्रान्तरे ।

रक्तमूर्त्तिं गणेशानं सर्वाभरणभूषितम् ।
रक्तवस्त्रं त्रिनेत्रं च रक्तपद्मासनास्थितम् ॥
चतुर्भुजं महाकायं द्विदन्तं सस्मिताननम् ।
इष्टं च दक्षिणे वामे दधन्तमभयं करे ॥
पाशाङ्कुशौ च हस्ताभ्यां जटामण्डलमण्डितम् ।
ललाटं चन्द्ररेखाढ्यं सर्वालङ्कारभूषितम् ॥
सर्वाभीष्टप्रदं ध्यायेदुच्छिष्टगणनायकम् ।

अस्य पुरश्चरणं ( भैरौ )

नवलक्षं जपः प्रोक्तः काम्यकर्माण्यथ ब्रुवे ॥

मन्त्रान्तरमाह तत्रैव ।

अथान्यमस्य वक्ष्यामि द्वादशार्णं महामनुम् ।
ॐ ह्रीँ गँ हस्तिपिशाचि लिखेत् स्वाहेति मन्त्रकः ॥
नवार्णमन्त्रवत् सर्वं ध्यानपूजाजपादिकम् ।

पुरश्चरणमाह ।

पुरश्चर्याऽर्कलक्षं स्यात् प्रयोगादि च पूर्ववत् ॥

इति गणेशप्रकरणम् ।

अथ सूर्यमन्त्रः ।

( शारदायाम् )

तारो घृणिर्भृगुः पश्चाद्वामकर्णविभूषितः ।
वह्न्यासनो मरुच्छेषः सनेत्रोऽद्रिस्य पश्चिमः ॥
अष्टाक्षरो मनुः प्रोक्तो भानोरभिमतप्रदः ।
देवभागो मुनिः प्रोक्तो गायत्री छन्द ईरितम् ॥
आदित्यो देवता प्रोक्तो दृष्टादृष्टफलप्रदः ।
सत्याय हृदयं प्रोक्तं ब्रह्मणे शिर ईरितम् ॥
विष्णवे स्याच्छिखा वर्म रुद्राय परिकीर्त्तितम् ।

४१

अग्नये नेत्रमाख्यातं सर्वायास्त्रमुदाहृतम् ॥
तेजो ज्वाला मणिं हुँ फट् द्विठान्ताः पृथगीरिताः ।

न्यासान्तराणि तत्रैव द्रष्टव्यानि ।

अथ ध्यानं ।

रक्ताब्जयुग्माभयदानहस्तं
केयूरहाराङ्गदकुण्डलाढ्यम् ।
माणिक्यमौलिं दिननाथमीडे
बन्धूककान्तिं विलसत्त्रिनेत्रम् ॥

अस्य पुरश्चरणं तत्रैवोक्तम् ।

वसुलक्षं जपेन्मन्त्रं समिद्भिः क्षीरशाखिनाम् ।
तत्सहस्रं प्रजुहुयात् क्षीराक्ताभिर्जितेन्द्रियः ॥

अथ मन्त्रान्तरं तत्रैव ।

आकाशमग्निदीर्घेन्दुसंयुतं भुवनेश्वरी ।
सर्गान्वितो भृगुर्भानोस्त्र्यक्षरो मनुरीरितः ॥
आधारादिपदाग्रान्तं कण्ठादाधारकावधि ।
मूर्धादिकण्ठपर्यन्तं क्रमाद्बीजत्रयं न्यसेत् ॥
षड्दीर्घस्वरयुक्तेन मध्येनाङ्गानि कल्पयेत् ।

अथ ध्यानम् ।

रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्तजगतामधिपं भजामि ।
पद्मद्वयाभयवरान् दधतं कराब्जै-
र्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ॥

अथास्य पुरश्चरणम् ।

भानुलक्षं जपेन्मन्त्रमन्नाज्येन दशांशतः ।
तिलैर्वा मधुरासिक्तैर्जुहुयाद्विजितेन्द्रियः ॥

(मेरुतन्त्रे)

अथ मन्त्रान्तरं वक्ष्ये दिनेशस्य षडक्षरम् ।
हँ खँ खखोल्काय वाऽथ खखोल्कायाग्निगेहिनी ॥
मुनिर्ब्रह्मा च गायत्री छन्दः सवितृदैवतम् ।
सूक्ष्मरूपायाग्निवधूमन्त्रेण हृदयं मतम् ॥
सूक्ष्माकारायाग्निवधूरिति मन्त्रेण शीर्षकम् ।
सूक्ष्मबालाय स्वाहेति कवचं च सनेत्रकम् ॥
सूक्ष्मकाय हुँ फडिति शस्तं पञ्चाङ्गमीरितम् ।
मन्त्रवर्णैः षडङ्गं स्याद्ध्यानमस्योच्यतेऽधुना ॥
रक्तपद्मद्वयं हस्तैर्बिभ्राणं वरदाभये ।
बन्धूकाभं त्रिनेत्रं च रविं ध्यायेत् सुभूषितम् ॥

अथास्य पुरश्चरणं तत्रैव ।

लक्षमेकं जपेन्मन्त्रं नियतात्मा जितेन्द्रियः ।
जुहुयात् तद्दशांशेन विल्वाश्वत्थपलाशजैः ॥
उदुम्बरसमुद्भूतैस्त्रिमध्वक्तैः समिद्वरैः ।
तर्पणादि ततः कुर्यात् प्राक्प्रोक्तविधिना सुधीः ॥

अथ मन्त्रान्तरं (शारदायाम्)

वियदर्धेन्दुलसितं तदादिः सर्गसंयुतः ।
अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः सुरपादपः ॥
ऋषिर्ब्रह्मा स्मृतो देवी गायत्री छन्द ईरितम् ।
देवता जगतामादिः संप्रोक्तो गिरिजापतिः ॥
हसा षड्दीर्घयुक्तेन कुर्यादङ्गक्रियां मनोः ।

ध्यानम् ।

उद्यद्भानुस्फुरिततडिदाकारमूर्धाम्बिकेशं
पाशाभीती वरदपरशू सन्दधानं कराब्जैः ।

दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं
सौम्याग्नेयं वपुरवतु वश्चन्द्रचूडं त्रिनेत्रम् ॥

अथ पुरश्चरणम् ।

भानुलक्षं जपेन्मन्त्रं पायसेन ससर्पिषा ।
दशांशं जुहुयात् सम्यक् ततः सिद्धो भवेन्मनुः ॥

अथ मार्त्तण्डभैरवमन्त्रस्तत्रैव ।

आकाशमग्निपवनसाद्यान्तार्घीशविन्दुमत् ।
मार्त्तण्डभैरवं नाम बीजमेतदुदाहृतम् ॥
पुटितं विम्बबीजेन सर्वकामफलप्रदम् ।
ठान्तं दहननेत्रेन्दुसहितं तदुदाहृतम् ॥
पञ्चह्रस्वाद्यबीजेन पञ्चमूर्त्तीः प्रविन्यसेत् ।
मध्यमादिकनिष्ठान्तमङ्गुलीषु क्रमादिमाः ॥
सूर्याख्यो भास्करो भानुस्ततो रविदिवाकरौ ।
शिरोवदनहृद्गुह्यपाददेशेषु ताः पुनः ॥
दीर्घयुक्तेन बीजेन नेत्राङ्गानि प्रविन्यसेत् ।
व्यापकं मूलबीजेन कुर्वीत तदनन्तरम् ॥

ध्यानम् ।

हेमाम्भोजप्रवालप्रतिमनिजरुचिं चारुखट्वाङ्गपद्मौ
चक्रं शक्तिं सपाशं सृणिमतिरुचिरामक्षमालां कपालम् ।
हस्ताम्भोजैर्दधानं त्रिनयनविलसद्वेदवक्त्राभिरामं
मार्त्तण्डं वल्लभार्धं मणिमयमुकुटं हारदीप्तं भजामः ॥

अथ पुरश्चरणम् ।

लक्षत्रयं जपेन्मन्त्री बीजं विम्बपुटीकृतम् ।
दशांशं कमलैः फुल्लैर्जुहुयान्मधुरोक्षितैः ॥

इति सूर्यप्रकरणम् ।

अथ विष्णुमन्त्राः ।

( शारदायाम् )

अथ वक्ष्ये महामन्त्रान् विष्णोः सर्वार्थसाधकान् ।
येषां संस्मरणात् सन्तो भवाब्धेः पारमाश्रिताः ॥
तारं नमःपदं पश्चान्नरौ दीर्घसमन्वितौ ।
पवनो णायमन्त्रोऽयं प्रोक्तो वस्वक्षरात्मकः ॥
साध्यो नारायणः प्रोक्तो मुनिश्छन्द उदाहृतम् ।
मन्त्रस्य देवी गायत्री देवता विष्णुरव्ययः ॥
क्रुद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतम् ।
वीरोल्काय शिखा प्रोक्ता व्युल्काय कवचं मतम् ॥
सहस्रोल्कायास्त्रमुक्तमङ्गक्लृप्तिरियं मता ।
भूयोवर्णैर्मनोः षड्भिः षडङ्गानि समाचरेत् ॥
अवशिष्टौ पुनर्वर्णौ विन्यसेत् कुक्षिपृष्ठयोः ।

अथ ध्यानम् ।

उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभि पार्श्वद्वयम् ।
कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभो-
द्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥

अथ पुरश्चरणम् ।

विकारलक्षं प्रजपेन्मनुमेनं समाहितः ।
तद्दशांशं सरसिजैर्जुहुयान्मधुराप्लुतैः ॥

विकारलक्षं षोडशलक्षम् ।

अथ मन्त्रान्तरं तत्रैव ।

प्रणवो हृद्भगवते वासुदेवाय कीर्त्तितः ।
प्रधानं वैष्णवे तन्त्रे मन्त्रोऽयं द्वादशाक्षरः ॥
ऋषिः प्रजापतिश्छन्दो गायत्री परिकीर्त्तिता ।

देवताऽस्य मनोः प्रोक्तो वासुदेवो मनीषिभिः ॥
तारेण हृदयं प्रोक्तं नमसा शिर ईरितम् ।
चतुर्वर्णैः शिखा प्रोक्ता पञ्चार्णैः कवचं मतम् ॥
समस्तेन भवेदस्त्रमङ्गकल्पनमीरितम् ।

अथ ध्यानम् ।

विष्णुं शारदचन्द्रकोटिसदृशं शङ्खं रथाङ्गं गदा-
मम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम् ।
आबद्धाङ्गदहारकुण्डलमहामौलिं स्फुरत्कङ्कणां
श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम् ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं दीक्षितो विजितेन्द्रियः ।
तत्सहस्रं प्रजुहुयात् तिलैराज्यपरिप्लुतैः ॥

अथ लक्ष्मीवासुदेवमन्त्रस्तत्रैव ।

हृल्लेखाबीजयुगलं रमाबीजयुगं ततः ।
लक्ष्म्यन्ते वासुदेवाय हृदन्तः प्रणवादिकः ॥
चतुर्दशाक्षरैः प्रोक्तो मन्त्रोऽयं सुरपादपः ।
हृदयं शक्तिबीजाभ्यां रमाभ्यां शिर ईरितम् ॥
लक्ष्म्या प्रोक्ता शिखा वर्म वासुदेवाय ईरितम् ।
नमः सास्त्रं समादिष्टं सर्वं तारादि कल्पयेत् ॥

ध्यानम् ।

विद्युच्चन्द्रनिभं वपुः कमलजावैकुण्ठयोरेकतां
प्राप्तं स्नेहवशेन रत्नविलसद्भूषाभरालङ्कृतम् ।
विद्यापङ्कजदर्पणान् मणिमयं कुम्भं सरोजं गदां
शङ्खं चक्रममूनि बिभ्रदमितां दिश्याच्छ्रियं वः सदा ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं तत्सहस्रं सरोरुहैः ।
होमं कुर्याद्विकासितैर्मधुरत्रयसंयुतैः ॥
पूजा स्याद्वैष्णवे पीठे द्वादशाक्षरवर्त्मना ।
पायसेन कृतो होमो लक्ष्मीवश्यप्रदायकः ॥
मधुराक्तैस्तिलैर्हुत्वा सर्वकार्याणि साधयेत् ।

(विष्वक्सेन्याम्)

अथ मन्त्रान्तरं वक्ष्ये विष्णोः सर्वार्थसाधकम् ।
ङेऽन्तं विष्णुं समुद्धृत्य हृदयं बाणवर्णकः ॥
भवाब्धेः सेतुभूतोऽयमव्यक्ताद्यः षडक्षरः ।

अव्यक्तः प्रणवः ।

नारदोऽस्य मुनिश्छन्दो गायत्री विष्णुरव्ययः ।
देवता मन्त्रवर्णैस्तु षडङ्गानि प्रकल्पयेत् ॥

ध्यानम् ।

शङ्खचक्रगदापद्मधरं लक्ष्मीसमावृतम् ।
पीताम्बरं घनश्यामं ध्यायेद्विष्णुं सनातनम् ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं त्रिमध्वक्तैस्तिलैर्हुनेत् ।
तर्पणादि ततः कुर्यादेवं सिद्धो भवेन्मनुः ॥

अथ मत्स्यमन्त्रो (मेरुतन्त्रे)

एक एवाभवन्मत्स्यावतारः कल्प आदिमे ।
तस्य मन्त्रं प्रवक्ष्यामि भुक्तिमुक्तिप्रदायकम् ॥
तारो नमो भगवते मँ मत्स्याय रमां वदेत् ।
द्वादशाक्षरमन्त्रोऽयं मुनिर्ब्रह्मा समीरितः ॥
गायत्री छन्द उद्दिष्टं देवता मीनविग्रहः ।

भगवान् स रमानाथो बीजं श्रीमँ च कीलकम् ॥

मन्त्रपदैः कराङ्गन्यासौ कार्यौ ।

अथ ध्यानम् ।

नाभ्याधो रोहितसम आकण्ठं च नराकृतिः ।
घनश्यामश्चतुर्बाहुः शङ्खचक्रगदाधरः ॥
शृङ्गीमत्स्यनिभो मूर्धा लक्ष्मीवक्षोविराजितः ।
पद्मचिह्नितसर्वाङ्गः सुन्दरश्चारुलोचनः ॥

पुरश्चरणमाह ।

जपेद्द्वादशसाहस्रं त्रिमध्वक्तैस्तिलैर्हुनेत् ।
प्रत्यहं तद्दशांशेन वैशाखे कार्त्तिके तथा ॥
माघे च मार्गशीर्षे च हविष्याशी जितेन्द्रियः ।
आरभ्य भाद्राबहुलमष्टमीषोडशाहकम् ॥
लक्ष्मीमनुं जपेन्नित्यमिदं चापि कलाशतम् ।
तथैव होमः कर्त्तव्यस्तथाऽन्यदिवसेषु तु ॥
तर्पयेद्द्वादशशतं तिलतण्डुलचन्दनैः ।
आद्यन्तयोः शतं चाष्टौ तर्पयेच्च तथा श्रियम् ॥
रक्तोत्पलैर्वा पद्मैर्वा मालत्याद्यैः सुगन्धिभिः ।
एवं कृते वर्षमेकं मन्त्रसिद्धिः प्रजायते ॥
नित्यं द्वादशविप्रांश्च श्रीरूपां च सुवासिनीम् ।
भोजयेत् पूजनं चास्य चरेत् तोयाशये सदा ॥

तथा—

एवं सिद्धमनुर्मन्त्री जायते सिद्धिभाजनम् ।
एतद्युक्तं शतं मन्त्रं जपेदष्टोत्तरं शतम् ॥
तद्देवतादिने सिद्धः पुस्तकादेव जायते ।
अकुण्ठितप्रयोगेषु न पुनस्तस्य संस्कृतिः ॥

एतत्पल्लविता मन्त्रा मम सिध्यन्ति पार्वति ।
एतत्संपुटिताः सर्वे वैदिकाः सिद्धिदाः कलौ ॥
अनेन ग्रथिता जप्ताः कौले स्युर्द्रुतसिद्धिदाः ।
गाणेशा वैष्णवाः सौराः सिद्धिं दद्युर्विदर्भिताः ॥
यद्बलात् सर्वमन्त्राणां स्वयं सिद्धिः प्रजायते ।
तस्मान्नोक्तो नान्यतन्त्रे मेरुतन्त्रे प्रकाशितः ॥

अथ कूर्ममन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि कूर्ममन्त्रं महाद्भुतम् ।
एकः कूर्मावतारोऽभून्मथ्यमाने महोदधौ ॥
तारो नमो भगवते कुँ कूर्माय धराधर ।
धुरन्धराय णस्यान्ते सिद्धवर्णो मतो मनुः ॥
प्रकृतिश्छन्द उदितं कश्यपोऽस्य मुनिर्मतः ।
देवता भगवान् विष्णुर्मतः कच्छपरूपधृक् ॥
धराधरेत्यादिशक्तिः कुँ बीजं स्वेष्टसिद्धये ।
नियोगो देवता ध्यानं शङ्खचक्रगदाधरम् ॥
पीताम्बरं कूर्मपृष्ठं न्यस्तलाङ्गूलशोभितम् ।
दीर्घग्रीवं महाग्राहं गिलन्तं रक्तलोचनम् ॥
मन्त्रवर्णैः षडङ्गानि जपो लक्षचतुष्टयम् ।
आज्यहोमस्तर्पणं तु चन्दनोत्पलवारिभिः ॥

अथ वराहमन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि वराहस्य मनून् शुभान् ।
कल्पे जाताश्चतुर्वर्णा अवतारा रमापतेः ॥
तारो नमो भगवते वराहेति च संवदेत् ।

रूपाय भूर्भुवः सुवः पतये भूपतीति च ॥
त्वं मे देहि दापयेति स्वाहान्तः सुरवर्णकः ।

(शारदायाम्)

भार्गवो मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ।
देवताऽऽदिवराहोऽस्य मन्त्रस्य कथितो बुधैः ॥
एकदंष्ट्राय हृदयं व्योमोल्काय शिरः स्मृतम् ।
शिखा तेजोऽधिपतये विश्वरूपाय वर्म च ॥
महादंष्ट्राय अस्त्रं स्यात् पञ्चाङ्गमिति कल्पयेत् ।

अथ ध्यानम् ।

आपादं जानुदेशाद्वरकनकनिभं नाभिदेशादधस्तान्-
मुक्ताभं कण्ठदेशात् तरुणरविनिभं मस्तकान्नीलभासम्।
ईडे हस्तैर्दधानं रथचरणदरौ खड्गखेटौ गदाख्यां
शक्तिं दानाभये च क्षितिधरणलसद्दंष्ट्रमाद्यं वराहम् ॥

अस्य पुरश्चरणं तत्रैव ।

लक्षमेकं जपेन्मन्त्रं मधुराक्तैः सरोरुहैः ।
जुहुयात् तद्दशांशेन पीठे विष्णोः प्रपूजयेत् ॥

अथ मन्त्रान्तराणि ( मेरुतन्त्रे )

अथान्यं संप्रवक्ष्यामि वराहाष्टाक्षरं परम् ।
ॐ भूर्वराहाय नमो मुनिर्ब्रह्मा समीरितः ॥
जगती छन्द उद्दिष्टं वराहो देवता स्मृतः ।
पदैः समस्तमन्त्रेण पञ्चाङ्गानि प्रकल्पयेत् ॥

ध्यानम् ।

कृष्णाङ्गं नीलवक्त्रं च मलिनं पद्मसंस्थितम् ।
पृथ्वीशक्तियुतं ध्यायेच्छङ्खं चक्राम्बुजं गदाम् ॥
भूलक्ष्मीकान्तिरतिभिः समन्तात् परिवारितम् ।

वर्मासिवाह्निश्च कलौ द्रुतसिद्धिप्रदायकम् ॥
जपपूजादिकं सर्वमस्य पूर्ववदाचरेत् ।
एतं मनुं यः प्रभजेत् स भवेच्च धरापतिः ॥
इमित्येकाक्षरो मन्त्रो वराहस्य प्रकीर्त्तितः ।
हयग्रीवो मुनिः प्रोक्तश्छन्दोऽनुष्टुप् च देवता ॥
वराहो दीर्घयुक्तेन बीजेनैवाङ्गकल्पनम् ।
प्राग्वद्ध्यायेद्रक्तवर्णं पूजाद्यं पूर्ववद्भवेत् ॥
भूरित्येकाक्षरं बीजं सर्वं प्राग्वत् समीरितम् ।
पीतवर्णं सदा ध्यायेद्द्वापरे द्रुतसिद्धिदम् ॥

अथ धरणीमन्त्रः ( शारदायाम् )

हृदयं भगवत्यै स्याद्धरण्यै तदनन्तरम् ।
धरण्यन्ते धरेद्वन्द्वं द्विठान्तोऽयं ध्रुवादिकः ॥
एकोनविंशत्यर्णाढ्यं धराहृदयमीरितम् ।
वराहोऽस्य मुनिः प्रोक्तश्छन्दो निवृदुदाहृतम् ॥
देवता सर्वभूतानां प्रकृतिर्वसुधा मता ।
हृदयं त्रिभिराख्यातं चतुर्भिः शिर ईरितम् ॥
त्रिभिः शिखा समुद्दिष्टा पञ्चभिः कवचं मतम् ।
द्वाभ्यां नेत्रं समाख्यातं द्वाभ्यामस्त्रं पुनर्भवेत् ॥
मन्त्रवर्णैः षडङ्गानि कुर्यादेवं विधानवित् ।

ध्यानम् ।

श्यामां विचित्रांशुकरत्नभूषणां
पद्मासनां तुङ्गपयोधराननाम् ।
इन्दीवरं द्वे नवशालिमञ्जरीं
शुकं धानां वसुधां भजामः ॥

पुरश्चरणमाह ।

लक्षमेनं जपेन्मन्त्री धराहृदयमादरात् ।
ससर्पिषा पायसेन जुहुयात् तद्दशांशतः ॥
तां विष्णोः पूजयेत् पीठे वक्ष्यमाणविधानतः ।
स जयति जगतां नाथः करुणावरुणालयो नृहरिः ।
शरणीकृतयच्चरणा भवजलधिं तुलयन्ति गोष्पदेन ॥
अथ दुस्तरसंसारसागरोत्तारसेतवः ।
चतुर्णां पुरुषार्थानामसाधारणहेतवः ॥
उच्यन्ते चन्द्रचूडेन तन्त्रेषु प्रकटीकृताः ।
मन्त्राः श्रीदिव्यसिंहस्य ब्रह्माद्यैः समुपासिताः ॥

( मेरुतन्त्रे )

अथातः संप्रवक्ष्यामि नृसिंहस्य मनून् शुभाम् ।
प्रतिमन्वन्तरं चाऽयमवतारो हरेर्भवेत् ॥
द्वीपान्तरे नृसिंहस्तु चतुर्दशसु मूर्त्तिषु ।
आकल्पं वसते तत्र भक्तानुग्रहकारकः ॥
आदिमन्वन्तरे जातो नृसिंहो वक्ष्यतेऽधुना ।
द्वात्रिंशद्वर्णको गोप्यो भुक्तिमुक्तिप्रदो यतः ॥

(विष्वक्सेन्यां) ब्रह्मनारदसंवादे ।

मन्त्रराजं प्रवक्ष्यामि शृणुष्वावहितो मुने ।
यत्प्रसादादविकलं सृजामि सकलं जगत् ॥
आदौ विष्णुं समुद्धृत्य शार्ङ्गिणं वलिसंस्थितम् ।
प्रद्युम्नसहितं पश्चादुद्धरेद्*भूमिबालकम् ॥
सगोविन्दं ततः प्रीतियुक्तं बलिनमुद्धरेत् ।

* भूधरं तत इति २-३-४-५ पु० पा० ।

वैकुण्ठान्ते वराहं च नारायणसमन्वितम् ॥
समाधववृषघ्नाख्यं वृषं नरकजिद्गतम् ।
शङ्खर्षणान्तमधुसूदनादिभ्यां समन्वितम् ॥
बालस्थं च मुशल्यन्तमुद्धरेच्च बलानुजम् ।
वीरभागनिरुद्धाद्यसंयुतं हरिमुद्धरेत् ॥
हंसान्ते बलिनाऽऽक्रान्तं भूधरं च ततो हरिम् ।
वासुदेवान्वितं विश्वमूर्त्यन्तं त्रिविष्णुसंयुतम् ॥
सानिरुद्धं च गदिनं शूलाढ्यं सत्रिविक्रमम् ।
विन्दुमाधवसंयुक्तं हंसहसांन्तमिन्दुकम् ॥
गोविन्दयुग्विश्वमूर्त्तिं वृषहर्याद्यमिन्दुकम् ।
भूधरान्तं ततः सत्यं बलिं प्रद्युम्नसंयुतम् ॥
स ामेनाद्यं वैकुण्ठं हरिं सपुरुषोत्तमम् ।
सविष्णुमेतदुभयं द्विरुद्धृत्यान्तिमे शिरः ॥
दद्यात् ततः सात्त्वतान्तं पुरुषोत्तमपूर्वजम् ।
सकेशवान्त्यमुद्धृत्य वैकुण्ठपुरुषोत्तमौ ॥
योगिनौ विश्वमूर्त्तेश्च दशमं सेन्दुमुद्धरेत् ।
द्वात्रिंशदक्षरात्माऽयं मन्त्रराजः सुरद्रुमः ॥
धर्मार्थकाममोक्षाणां बीजभूतोऽयमद्भुतः ।
अद्यस्तूलौघदहनो भवतीति विनाशनः ॥
यन्महावैष्णवं धाम परब्रह्मेति गीयते ।
स्वप्रकाशं जगद्व्यापि सच्चिदानन्दलक्षणम् ॥
तदेव त्वं विजानीहि मन्त्ररूपमिदं मुने ।
न नृसिंहात् परो देवो नैतन्मन्त्रात् परो मनुः ॥

न तद्ध्यानात् परं ध्यानं संसारभयनाशनम् ।
भगवद्भक्तितत्त्वज्ञैरुपास्योऽयं महामनुः ॥
न प्रकाश्यस्त्वया वत्स देवानामपि दुर्लभः ।
अनेकमन्त्रकोटीनां चूडामणिरयं मनुः ॥
यथा नृसिंहो भगवान् देवतानां शिरोमणिः ।
यन्नामस्मरणादेव न पुनर्जायते भवः ॥
किं पुनः श्रद्धया भक्त्या भजतां तत्पदाम्बुजम् ।
सकृदुच्चरितं येन नृसिंहेत्यक्षरत्रयम् ॥
धर्मराजभटैस्तस्य किमर्थं दृश्यते मुखम् ।
चतुर्णामपि वेदानां सारांशस्त्वेक एव हि ॥
नृसिंहेति नृसिंहेति नृसिंहेति च कीर्त्तनम् ।

(मेरुतन्त्रे)

लोभाधिक्यात् कलियुगे न गुरुर्न च देवता ।
एकं श्रेयस्करं प्रोक्तं नृहरेर्नामगर्जनम् ॥

(संहितायाम्)

अथोक्तमन्त्रराजस्य ऋष्यादीन् शृणु नारद ।
ऋषिर्ब्रह्माऽहमुद्दिष्टश्छन्दोऽनुष्टुबुदाहृतम् ॥
देवता श्रीनृसिंहोऽस्य देवदेवो जगद्गुरुः ।
ध्रुवमाये बीजशक्ती नारसिंहस्तु कीलकम् ॥
उदात्तस्तु स्वरः प्रोक्तो वर्णः शुक्ल उदाहृतः ।
धर्मार्थकाममोक्षार्थे विनियोगः प्रकीर्त्तितः ॥

(मेरुतन्त्रे)

वेदवेदाष्टषट्षट्कं वेदार्णैः स्यात् षडङ्गकम् ।

अथ ध्यानम् ( संहितायाम्)

क्षीरार्णवे सितद्वीपे कल्पवृक्षवनं स्मरेत् ।

नानापुष्पफलाकीर्णां मुक्तारत्नौघवर्षणाम् ॥
विकसद्वालमन्दारपुष्पामोदमनोहरम् ।
कुसुमान्तर्मधुस्वादमत्तालिकुलसंकुलम् ॥
कोकिलालापमुखरं नानापक्षिगणान्वितम् ।
ऋतुषट्केन युगपत् सेव्यमानं सुखास्पदम् ॥
उत्फुल्लाम्बुजकह्लारकुमुदोत्पलशालिभिः ।
हंसकारण्डवाकीर्णैः सरोभिरुपशोभितम् ॥
तस्य मध्ये स्फुरद्दीप्ति चिन्तयेन्मणिमण्डपम् ।
तदन्तःपद्मरागौघकुट्टिमारक्तभूतले ॥
नानारत्नप्रभोद्भासिस्वर्णसिंहासनोपरि ।
भोगीन्द्रभोगतल्पे च पद्ममष्टदलं स्मरेत् ॥
तत्कर्णिकासमासीनं श्रीनृसिंहं विचिन्तयेत् ।
चन्द्रकोटिप्रतीकाशं भास्वत्पीताम्बरावृतम् ॥
ज्वलत्कालानलप्रख्यज्वालामालिदुरासदम् ।
चक्रं सुदर्शनं चापं सबाणं वरमुद्रिकाम् ॥
अभयाख्यां तथा मुद्रां निजभक्तेषु सार्थिकाम् ।
धारयन्तं महाबाहुं चतुर्भिः करपल्लवैः ॥
सोमसूर्याग्निनयनमीषद्व्यानाननाम्बुजम् ।
स्फुरत्सौदामिनीजिह्वं दंष्ट्राद्भुतमुखाम्बुजम् ॥
तप्तचामीकरप्रख्यजटामण्डलमण्डितम् ।
हैमं किरीटं बिभ्राणं भास्वन्मणिगणोज्ज्वलम् ॥
श्रीवत्सकौस्तुभोरस्कं स्फुरन्मकरकुण्डलम् ।
योगपट्टपिनद्धाङ्गं वनमालाविराजितम् ॥

हारकेयूरमञ्जीरस्फुरत्काञ्चीगुणादिभिः ।
भूषितं भूषणैर्दिव्यैर्नानारत्नोपकल्पितैः ॥
ज्वलन्मणिशिखादीप्तफणीन्द्रफणपङ्क्तिभिः ।
कृतच्छत्रं स्वतेजोभिर्भासयन्तं दिशो दश ॥
कल्पान्तकालदहनज्वालजालविडम्बिभिः ।
ललाटनयनज्वालैर्दुर्निरीक्ष्यं सुरैरपि ॥
स्ववामाङ्कगतां लक्ष्मीं तप्तजाम्बुनदप्रभाम् ।
शुद्धक्षौमपरीधानां नानालङ्कारभूषिताम् ॥
वराभयं पद्मयुग्मं बिभ्राणां करपङ्कजैः ।
शरत्पूर्णेन्दुवदनां मन्दस्मितमुखाम्बुजाम् ॥
आश्लिष्यन्तं कृताश्लेषामानन्दोत्फुल्ललोचनाम् ।
भारत्या दक्षिणे देशे स्तूयमानं हि सर्वदा ॥
शङ्खचक्रगदापद्मधारिभिर्वनमालिभिः ।
इन्द्रनीलनिभैर्वीरैः पार्षदैः परितो वृतम् ॥
ब्रह्मादिभिः सुरगणैः सनकाद्यैर्महर्षिभिः ।
योगिभिः सिद्धगन्धर्वैरप्सरोभिश्च सेवितम् ॥
अतिप्रसन्नवदनं भक्ताभीष्टवरप्रदम् ।
एवंविधमनिर्देश्यमवाङ्मनसगोचरम् ॥
दिव्यसिंहं हृदि ध्यायेत् परमात्मानमच्युतम् ।
एवं ध्यात्वा महाविष्णुं दिव्यकेशरिणं विभुम् ॥
कर्मबन्धादिनिर्मुक्तः प्राप्नुयाद्वैष्णवीं तनुम् ।
सान्द्रानन्दमयं शान्तं नित्यविज्ञानविग्रहम् ॥
हृत्पद्मे नृहरिं ध्यात्वा साक्षान्नारायणो भवेत् ।

आदिषोडशचक्रस्थमथ वा विन्दुवर्जितम् ।
अनादिमपरिच्छिन्नं योगिगम्यमतीन्द्रियम् ॥
परात्परतरं नित्यं निरुपाधिमनाविलम् ।
स्वतःप्रकाशं जगतः साक्षिभूतं निरञ्जनम् ॥
ज्योतिर्मयं नरहरिं ध्यात्वा ब्रह्ममयो भवेत् ।
अथ वा विश्वमखिलं भावयेन्नृहरेस्तनुम् ॥
जीवन्मुक्तो भवेत् सद्यो निराधिरकुतोभयः ।

ध्यानान्तरमुक्तं (शारदायाम्)

माणिक्याद्रिसमप्रभं निजरुचा संत्रस्तरक्षोगणं
जानुन्यस्तकराम्बुजं त्रिनयनं रत्नोल्लसद्भूषणम् ।
बाहुभ्यां धृतशङ्खचक्रमनिशं दंष्ट्रोग्रवक्त्रोल्लस-
ज्ज्वालाजिह्वमुदग्रकेशनिचयं वन्दे नृसिंहं विभुम् ॥

(मेरुतन्त्रे)

वामे शङ्खमरिं दक्षे जानुविन्यस्तबाहुकम् ।
ग्रसन्तं दैत्यराजानं कृशानूपमतेजसा ॥
दंष्ट्राप्रदीप्तवदनं ललज्जिह्वं त्रिलोचननम् ।
सुरैश्च मुनिभिर्लक्ष्म्या कृताञ्जलिकया स्तुतम् ॥

कामनाभेदेन ध्यानभेदा उक्तास्तत्रैव ।

काम्यप्रयोगसिद्ध्यर्थं ध्यानभेदान् वदाम्यहम् ।
उद्यत्सहस्रार्कभासं त्रिनेत्रं भीषणाकृतिम् ॥
वज्रतुल्येक्षणं वह्निकान्तिं नानाभुजैर्वृतम् ।
नखैर्दारितदैत्येशं रक्तधाराक्तकायकम् ॥
क्रूरकर्मादिविषये स्मरेद्देवं भयानकम् ।
विश्वरूपमयं ध्यानं नृहरेः प्रोच्यतेऽधुना ॥

नृसिंहं तं महाभीमं कालानलसमप्रभम् ।
अक्षमालाधरं रौद्रं कण्ठं हारेण शोभितम् ॥
नागयज्ञोपवीतं च पञ्चाननसुशोभितम् ।
चन्द्रमौलिं नीलकण्ठं प्रतिवक्त्रं त्रिलोचनम् ॥
भुजैः परिघसंकाशैर्दशाभिश्चोपशोभितम् ।
अक्षसूत्रं गदां पद्मं शङ्खं गोक्षीरसन्निभम् ॥
धनुश्च मुशलं चैव बिभ्राणं चक्रमुत्तमम् ।
खड्गं शूलं च बाणं च नृहरिं रुद्रगोपनम् ॥
इन्द्रनीलकनीलाभं चन्द्राभं स्वर्णसन्निभम् ।
पूर्वोदयोत्तरज्वालदूर्ध्वास्यं सर्ववर्णकम् ॥
एवमुग्रहरिं ध्यायेत् सर्वव्याधिनिवृत्तये ।
ध्येयो यदा महत् कर्म तदा षोडशहस्तवान् ॥
नृसिंहः सर्वलोकेशः सर्वाभरणभूषितः ।
द्वौ विदारणकर्माहौ द्वौ चान्त्रोद्धरणक्षमौ ॥
चक्रशङ्खधरावन्यावन्यौ बाणधनुर्धरौ ।
खड्गखेटधरावन्यौ द्वौ गदापद्मधारिणौ ॥
पाशाङ्कुशधरावन्यौ द्वौ रिपोर्मुकुटार्पितौ ।
इति षोडशदोर्दण्डमण्डितं नृहरिं विभुम् ॥
ध्यायेदम्बुजनीलाभमुग्रकर्मण्यनन्यधीः ।
ध्येयो महत्तमे कार्ये तदा षड्विंशहस्तवान् ॥
नृसिंहः सर्वभूषाढ्यः सर्वसिद्धिकरः प्रभुः ।
दक्षिणे खड्गचक्रे च परशुं पाशमेव च ॥
हलं च मुशलं सम्यगभयं चाङ्कुशं तथा ।

पट्टिशं भिन्दिपालं च खेटतोमरमुद्गरान् ॥
वामभागकरैः शङ्खं खड्गं पाशं च शूलकम् ।
हुताशनं वरं शक्तिं सम्यग्मृरामयकुण्डिकाम् ॥
कार्मुकं तर्जनीमुद्रां गदां डमरुसर्पकान् ।
करद्वन्द्वैः क्रमाच्छत्रोर्जानुमस्तकपत्तलम् ॥
ऊर्ध्वीकृताभ्यां हस्ताभ्यां मन्त्रमालाधरं हरिम् ।
अधःस्थिताभ्यां हस्ताभ्यां हिरण्यकविदारणम् ॥
प्रियङ्करं च भक्तानां दैत्यानां च भयङ्करम् ।
नृसिंहं संस्मरेद्दिव्यं महामृत्युभयापहम् ॥
अथोच्यते ध्यानमन्यन्मुखरोगहरं परम् ।
विषरोगहरं मृत्युहरं शत्रुभयावहम् ॥
स्वर्णौघतुल्ये गरुडे स्थितं पूर्णेन्दुवर्णकम् ।
सुमुखं विद्युदाभासनेत्रत्रयविराजितम् ॥
सुभूषं पीतवसनं सङ्खचक्रवराभयान् ।
धारयन्तं चतुर्भिश्च करैः क्ष्वेडादिनाशकम् ॥
अपमृत्युमहाकृत्यानाशकं नृहरिं स्मरेत् ।

(शारदायाम्)

उद्यत्कोटिरविप्रभं नरहरिं कोटीरहारोज्ज्वलं
दंष्ट्राभीममुखं लसन्नखमुखैर्दीर्घैरनेकैर्भुजैः ।
निर्भिन्नासुरनाथमग्निशशभृत्सूर्यात्मनेत्रत्रयं
विद्युत्पुञ्जजटाकलापभयदं वह्निं वमन्तं भजे ॥
सौम्ये सौम्यं स्मरेत् कार्यक्रूरे क्रूरमिमं भजेत् ।

पुरश्चरणमाह (मेरौ)

अष्टलक्षं जपेन्मन्त्रं दीक्षितो विजितेन्द्रियः ।

तत्सहस्रं प्रजुहुयाद्घृताक्तहविषाऽनले ॥
तर्पणं मार्जनं कृत्वा ब्राह्मणाराधनं तथा ।
कुर्यात् संसिद्धमन्त्रस्तु प्रयोगानाचरेत् ततः ॥
(शारदायां तु)
वर्णलक्षं जपेन्मन्त्रं तत्सहस्रं घृतप्लुतैः ।
पायसान्नैः प्रजुहुयाद्विधिवत्पूजितेऽनले ॥
एवं कृते भवेन्मन्त्री सिद्धमन्त्रः प्रतापवान्—इत्युक्तम् ।
अथ मन्त्रभेदा (मेरुतन्त्रे)
अथातः संप्रवक्ष्यामि द्वितीयं नृहरिं विभुम् ।
(संहितायाम्)
अथ वक्ष्ये नृसिंहस्य बीजरूपं मनूत्तमम् ।
संवर्त्तो वह्निमारूढो मनुस्वरविभूषितः ॥
बिन्दुनादकलाक्रान्तो भुक्तिमुक्तिप्रदो मनुः ।
अत्रिरस्य मुनिः प्रोक्तो गायत्री छन्द ईरितम् ॥
देवता नृहरिः प्रोक्तः सुरासुरनमस्कृतः ।
षड्दीर्घभाजा बीजेन षडङ्गानि प्रकल्पयेत् ॥
ध्यानपूजादिकं सर्वं मन्त्रराजोदितं चरेत् ।
अस्य पुरश्चरणमुक्तं (मेरुतन्त्रे)
एकलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ।
तद्दशांशं हुनेत् सम्यग्घृताक्तैः पायसैः शुभैः ॥
तर्पयेच्छुद्धसलिलैः कृत्वा चात्माभिषेचनम् ।
ब्राह्मणान् सम्यगाराध्य सिद्धमन्त्रः समाचरेत् ॥
मन्त्रराजोदितान् सर्वान् प्रयोगानत्र साधकः ।
तत्रैव ।
अथातः संप्रवक्ष्यामि तृतीयं नृहरेर्मनुम् ।

(शारदायाम्)

पाशः शक्तिर्नरहरिरङ्कुशो वर्म फडूमनुः ।
षडक्षरो नरहरेः कथितः सर्वकामदः ॥
ऋषिर्ब्रह्मा समुद्दिष्टः पङ्क्तिश्छन्द उदाहृतम् ।
देवता नरसिंहोऽस्य षड्बीजैरङ्गकल्पना ॥

अथ ध्यानम् ।

कोपादालोलजिह्वं विवृतनिजमुखं सोमसूर्याग्निनेत्रं
पादादानाभिरक्तप्रभमुपरिसितं भिन्नदैत्येन्द्रगात्रम् ।
शङ्खं चक्रं सपाशाङ्कुशकुलिशगदादारुणान्युद्वहन्तं
भीमं तीक्ष्णाग्रदंष्ट्रं मणिमयविविधाकल्पमीडे नृसिंहम् ॥

पुरश्चरणमाह ।

ऋतुलक्षं जपेदेनं घृतेन जुहुयात् ततः ।
तत्सहस्रं समिद्धेऽग्नौ तोषयेद्द्विजौर्गुरुम् ॥

( मेरुतन्त्रे )

अथातः संप्रवक्ष्यामि तुर्यमन्वन्तरोद्भवम् ।
ज्वालामालिनृसिंहस्य मनुं भूतादिनाशकम् ॥

(शारदायाम्)

बीजं नमो भगवते नरसिंहाय तत्परम् ।
स्याज्ज्वालामालिने पश्चाद्दीप्तदंष्ट्राय तत्परम् ॥
अग्निनेत्राय सर्वादिरक्षोघ्नाय पदं वदेत् ।
सर्वभूतविनाशान्ते नकारो दीर्घवान्मरुत् ॥
एवं ज्वरविनाशान्ते नायार्णो दहयुग्मकम् ।
पचद्वयं रक्षयुग्मं हुँ फट्स्वाहा ध्रुवादिकः ॥
सप्तषष्ट्यक्षरैः प्रोक्तो ज्वालामालिमहामनुः ।
हृत् त्रयोदशभिः प्रोक्तं शिरो दशभिरीरितम् ॥

शिखैकादशभिः प्रोक्ता वर्माष्टादशभिर्मतम् ।
वर्णैर्द्वादशभिर्नेत्रमस्त्रं स्यात् करणाक्षरैः ॥
एवमङ्गानि विन्यस्य चिन्तयेन्मन्त्रदेवताम् ।

ध्यानम् ।

प्रज्वलन् प्रलयानलाभमयुग्मनेत्रमनारतम् ।
भासुरं शिखिनः शिखाभिरुपदंष्ट्रमुखाम्बुजम् ॥
रक्षसां भयदं विकीर्णसटाकलापविभीषणम् ।
शङ्खचक्रकृपाणखेटकधारिणं नृहरिं भजे ॥

अथ पुरश्चरणम् ।

लक्षमेकं जपेन्मन्त्रं तद्दशांशं समाहितः ।
कपिलाज्येन जुहुयात् समिद्धे हव्यवाहने ॥

(मेरुतन्त्रे)

अथातः संप्रवक्ष्यामि यो जातः पञ्चमे विभुः ।
मन्वन्तरे स लक्ष्मीकः सेव्यते यो गृहस्थितैः ॥

(संहितायाम्)

अथ लक्ष्मीनृसिंहस्य मन्त्रं वक्ष्ये सुदुर्लभम् ।
तारेन्दिराशक्तिरमाः शूलिनं पुरुषोत्तमम् ॥
लक्ष्मीप्रियपदं ङेऽन्तं नित्यमामुदितोत्तरम् ।
चेतसं तादृशं प्रोक्त्वा लक्ष्मीश्रितपदोत्तरम् ॥
अर्धदेहपदं ङेऽन्तं रमा माया रमा च हृत् ।
सुरवर्णो मनुः प्रोक्तश्चतुर्वर्गफलप्रदः ॥
मुनिः प्रजापतिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
लक्ष्मीनृसिंहो भगवान् देवताऽस्य प्रकीर्तितः ॥
स्वबीजेन षडङ्गानि कृत्वा न्यासान्तरं चरेत् ।

तदुक्तं (मेरुतन्त्रे)

पुरस्तात् केशवः पातु चक्री जाम्बूनदप्रभः ।
पश्चान्नारायणः शार्ङ्गी नीलजीमूतसन्निभः ॥
इन्दीवरदलश्यामो माधवोर्ध्वगदाधरः ।
गोविन्दो दक्षिणे पार्श्वे धन्वी चन्द्रप्रभो महान् ॥
उत्तरे हलधृग्विष्णुः पद्मकिञ्जल्कसन्निभः ।
आग्नेय्यामरविन्दाक्षो मुशली मधुसूदनः ॥
त्रिविक्रमः खड्गपाणिर्नैर्ऋत्यां ज्वलनप्रभः ।
वायव्यां वामनो वज्री तरुणादित्यदीप्तिमान् ॥
ऐशान्यां पुण्डरीकाक्षः श्रीधरः पट्टिशायुधः ।
विद्युत्प्रभो हृषीकेशो वायव्यां दिशि मुद्गरी ॥
हृत्पद्मं पद्मनाभो मे सहस्रार्कसमप्रभः ।
सर्वायुधः सर्वशक्तिः सर्वज्ञः सर्वतो मुखः ॥
इन्द्रगोपकसंकाशः पाशहस्तोऽपराजितः ।
सबाह्याभ्यन्तरं देहं व्याप्य दामोदरः स्थितः ॥
एवं सर्वत्र निश्छिद्रं नामद्वादशपञ्जरम् ।
प्रविष्टोऽहं न मे किञ्चिद्भयमस्ति कदा चन ॥
इति न्यासं विधायादौ लक्ष्मीनरहरिं स्मरेत् ।

ध्यानं यथा ।

सर्पेन्द्रभोगशयनः सर्पेन्द्रफणाच्छत्रवान् ।
आलिङ्गितश्च रमया दीप्तया चन्द्रसन्निभः ॥
पद्मचक्रवराभीतिधरस्त्र्यक्षेन्दुशेखरः ।

(संहितायां) तु मन्त्रराजोक्तमेव ध्यानमुक्तम् ।

पुरश्चरणमाह ।

षष्ट्युत्तरं त्रिलक्षं तु प्रजपेत् तत्सहस्रकम् ।
मध्वक्तमल्लिकापुष्पैर्जुहुयान्मन्त्रवित्तमः ॥
अभ्यर्च्य सलिले देवं तर्पयेन्मनुना ततः ।
अभिषिञ्चेत् स्वमूर्धानं ब्राह्मणान् भोजयेत् ततः ॥
ततः प्रयोगान् कुर्वीत साधको निजवाञ्छितान् ।

तत्रैव ।

अथातः संप्रवक्ष्यामि षष्ठमन्वन्तरेऽभवत् ।
लक्ष्म्या सह नृसिंहोऽ यस्तन्मन्त्रः सर्वकामदः ॥
ॐ श्रीँ लक्ष्मीनृसिंहाय मनुरष्टाक्षरो मतः ।
मुनिः प्रजापतिश्छन्दोऽनुष्टुब्लक्ष्मीहरिः सुरः ॥
षड्दीर्घयुक्तं क्ष्रौँ बीजैः षडङ्गविधिरीरितः ।
ध्यानपूजादिकं सर्वं षडक्षरवदीरितम् ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं तद्दशांशं घृतप्लुतैः ।
पायसैर्जुहुयान्मन्त्री तर्पणादि ततश्चरेत् ॥
अथातः संप्रवक्ष्यामि यो जातः सप्तमे हरिः ।
जय जय श्रीनृसिंह मनुरष्टाक्षरो मतः ॥
ऋष्याद्यष्टार्णवत् प्रोक्तं पूजा चास्य षडर्णवत् ।
एकार्णवत् प्रयोगाँश्च गृहस्थः साधयेच्छुचिः ॥
अथातः संप्रवक्ष्यामि त्वष्टमे यस्तु जायते ।
दशावतारनृहरिर्दक्षसावर्णिकान्तरे ॥
ॐ क्ष्रौँ नमो भगवते नृसिंहाय संवदेत् ।
ॐ क्ष्रौँ च मत्स्यरूपाय कूर्मरूपाय तद्वयात् ॥

ॐ क्ष्रौँ वराहरूपाय ततो बीजद्वयं वदेत् ।
नृसिंहरूपाय ततो वेदादि क्ष्रौँ वदेत् ततः ॥
प्रोक्त्वा वामनरूपाय त्रिधा बीजद्वयं वदेत् ।
रामाय तच्च कृष्णाय तद्वयं कल्किने वदेत् ॥
जयशब्दद्वयान्ते तु शालग्रामनिवासिने ।
दिव्यसिंहायेति चोक्त्वा वदेत् पश्चात् स्वयम्भुवे ॥
पुरुषाय नमस्तारः क्ष्रौमेकोनशतार्णकः ।
अद्विजेन तु बुद्धाय वक्तव्यं बीजपूर्वकम् ॥
तदा मन्त्रः समाख्यातश्चतुरूर्ध्वशताक्षरः ।
छन्दोऽतिजगती प्रोक्तमृषिरत्रिः प्रकीर्त्तितः ॥
दशावतारनृहरिर्देवता सर्वकामदः ।
षड्दीर्घयुक्तबीजेन षडङ्गानि प्रकल्पयेत् ॥
मन्त्रराजवदेवास्य ध्यानपूजादिकं भवेत् ।
यजेत् षडङ्गपूजान्ते मत्स्यादीनवतारकान् ॥

अथ पुरश्चरणम् ।

अयुतं प्रजपेन्मन्त्रं साज्येन हविषा ततः ।
जुहुयात् तद्दशांशेन तर्पणादि ततश्चरेत् ॥
काम्यकर्माणि सर्वाणि मन्त्रराजवदेव हि ।
अस्य संसेवनाद्विप्रा ब्रह्मचर्यादिविच्युताः ॥
नृसिंहरूपतां प्राप्य जाताः स्थाननृसिंहकाः ।
आविशंति च ते देहे सम्यक् कुर्वन्ति पूजिताः ॥
अथातः संप्रवक्ष्यामि जायते नवमे तु यः ।
नरसिंहो बीरनामा शृणु तत्साधनं प्रिये ॥

बाले च तरुणे वृद्धे प्रयोगार्थं मनुत्रयम् ।
प्रोक्तं संसाधिके वक्रशुद्धे सिद्धास्त्रयोऽपि च ॥
तारो नमो भगवते बीजान्ते नरपदं वदेत् ।
सिंहायेति ततः प्रोक्त्वा ज्वालामालापदं वदेत् ॥
पिनद्धाङ्गाय इत्युक्त्वा अग्निनेत्राय संवदेत् ।
सर्वभूतविनाशेति नायेत्युक्त्वा द्विधा दह ॥
पच युग्मं रक्षयुग्मं ह्रीँ श्रीँ रक्षाग्निगेहिनी ।
चतुष्पञ्चाशदर्णोऽयं मन्त्रः प्रथम ईरितः ॥
वर्णाः षोडशपूर्वस्य लिने दीप्तपदं वदेत् ।
दंष्ट्राय चाग्निनेत्राय सर्वरक्षो-पदं ततः ॥
घ्नायोक्त्वा सर्वभूतेति ङेऽन्तं विनाशनं वदेत् ।
सर्वज्वरविनाशाय हनद्वन्द्वं दहद्वयम् ॥
पचयुग्मं बन्धयुग्मं हुँ फट् स्वाहा क्वगार्णकः ।
तृतीयमथ वक्ष्यामि पूर्वार्णा गजबाहवः ॥
विनाशनाय चान्ते स्यात पूर्वसर्वपदं त्रिधा ।
मध्ये भूतज्वरदोषपदानि त्रीणि योजयेत् ॥
हनादिचतुरन्ते तु रक्षयुग्मं च मां च माम् ।
हुँ फट्स्वाहा नवकृतिवर्णतुल्यो मतो मनुः ॥
मन्त्रराजोक्तवच्चास्य पूजाध्यानजपादिकम् ।
मालामन्त्रा इमे ख्याता द्रुतसिद्धिविधायकाः ॥
अथातः संप्रवक्ष्यामि दशमे जायते तु यः ।
ॐ क्ष्रौँ महानृसिंहाय नमोऽन्तो दशवर्णकः ॥
वामदेवो मुनिश्छन्दो विराड्देवो नृसिंहकः ।

षड्दीर्घयुक्स्वबीजेन षडङ्गन्यासमाचरेत् ॥
ध्यानपूजापुरश्चर्या होमो लक्ष्मीनृसिंहवत् ।
वर्णलक्षं जपेन्मन्त्रं प्रयोगोऽष्टाक्षरोदितः ॥
अथातः संप्रवक्ष्यामि मन्त्रमेकादशस्य तु ।
ॐ क्ष्रौँ नमो भगवते नरसिंहाय मन्त्रकः ॥
त्रयोदशार्ण उद्दिष्टो भुक्तिमुक्तिप्रदायकः ।
वामदेवो मुनिः प्रोक्तो जगती छन्द ईरितम् ॥
देवतानरसिंहोऽत्र स्वबीजेनाङ्गकल्पनम् ।
ध्यानपूजाप्रयोगादि षडक्षरवदीरितम् ॥
अथातः संप्रवक्ष्यामि द्वादशे जायते तु यः ।
काश्यां स वसते नित्यं दुष्टबुद्धिप्रचालकः ॥
तारं सहस्रारज्वालावर्त्तिने क्ष्रौँ हनद्वयम् ।
हुँ फट्स्वाहा चोनविंशवर्णो मन्त्र उदाहृतः ॥
मुनिर्जयन्त आख्यतश्छन्दो गायत्रमुच्यते ।
सुदर्शननृसिंहोऽस्य देवता परिकीर्त्तितः ॥
चक्रराजाय हृत् प्रोक्तं ज्वालाचक्राय वै शिरः ।
गजचक्राय च शिखा कवचं त्वस्य संमतम् ॥
असुरान्तकचक्राय ह्यस्त्राय फडितीरितम् ।
सुदर्शनायेति मनुः पञ्चाङ्गमेतदीरितम् ॥

अथ ध्यानम् ।

चक्राणां तु सभामध्ये कालाग्निसदृशप्रभम् ।
चतुर्भुजं त्रिवृत्तास्यं चतुश्चक्रधरं हरिम् ॥
तप्तकाञ्चनसंकाशं त्रिनेत्रं चाद्यविग्रहम् ।

ध्यायेत् समस्तदुःखघ्नं तादृग्लक्ष्म्या समन्वितम् ॥

अथ पुरश्चरणम् ।

रविलक्षं जपेन्मन्त्रं तद्दशांशं तिलैः शुभैः ।
हुनेत् पुष्पैस्ततश्चापि चत्वारिंशत्सहस्रकम् ॥
पुनराज्येन जुहुयात् सहस्रं च नमस्क्रियाः ।
तर्पणादि ततः कृत्वा प्रयोगानाचरेत् ततः ॥
अथातः संप्रवक्ष्यामि भुक्तिमुक्तिप्रदायकम् ।
जातं त्रयोदशे देवं नृहरिं क्ष्रौँ तु संपुटः ॥
मायया भोगदाता स्यात् प्रणवेन च मोक्षदः ।
अस्य पूजाप्रयोगाद्यमेकाक्षरसमं भवेत् ॥
अथातः संप्रवक्ष्यामि जातं मन्वन्तरे विभुम् ।
अभयाख्यो नृसिंहोऽयं समस्तभयनाशनः ॥
तारो नमो भगवते नरसिंहाय हृद्वदेत् ।
तेजस्तेजस इत्युक्त्वा आविराविर्भवेति च ॥
वज्रनख वज्रदंष्ट्र कर्माशयान् द्वी रन्धय ।
तमो द्विग्रस वह्निस्त्री वेददभयमात्मनि ॥
भूयिष्ठा ॐ क्ष्रौमिति च द्विषष्ट्यर्णो मनुर्मतः ।
मुनिः शुकोऽतिजगती छन्दः प्राग्वदिवाखिलम् ॥
चतुर्दशनृसिंहानां साधनं वेदबोधितम् ।
तदत्र कथितं देवा भुक्तिमुक्तिप्रदायकम् ॥

अथ वामनमन्त्रा (मेरुतन्त्रे)

अथातः संप्रवक्ष्यामि वामनस्य शुभान् मनून् ।
मन्वन्तरं तपत्येकं सुरेशं वाधते परम् ॥

पुनर्ददाति हरये त्रैलोक्यं स वलिर्नृपः ।
एकं मन्वन्तरं शक्रः स्वयमेवाभवद्बलिः ॥
एवं षड्वामनाः कल्पे तेषां मन्त्रान् वदाम्यहम् ।

षड्वामनाश्च तन्त्रान्तरे ।

दधिवामनयज्ञेशवामनौ भोगवामनः ।
बालको वामनो विश्वरूपोऽन्यो वलिवामनः ॥

तत्र दधिवामनमन्त्रः (शारदायाम्)

तारो हृद्विष्णवे पश्चाद्ङेन्तः सुरपतिर्भवेत् ।
महाबलाय ठद्वन्द्वं मनुरष्टादशाक्षरः ॥
ऋषिरिन्दुर्विराट्छन्दो देवता दधिवामनः ।
हृदेकेन शिरो द्वाभ्यां शिखा त्रिभिरुदाहृतम् ॥
कवचं पञ्चभिः प्रोक्तं नेत्रं तावद्भिरक्षरैः ।
द्वाभ्यामस्त्रमिति प्रोक्तः प्रकारोऽङ्गस्य सूरिभिः ॥

अथ ध्यानम् ।

मुक्तागौरं नवमणिलसद्भूषणं चन्द्रसंस्थं
भृङ्गाकारैरलकनिकरैः शोभिवक्त्रारविन्दम् ।
हस्ताग्राभ्यां कनककलशं शुद्धतोयाभिपूर्णं
दध्यन्नाढ्यं कनकचषकं धारयन्तं भजामः ॥

अथ पुरश्चरणम् ।

गुणलक्षं जपेन्मन्त्रं तद्दशांशं घृतप्लुतैः ।
पायसान्नैः प्रजुहुयाद्दध्यन्नैर्वा यथाविधि ॥

वामनमन्त्रभेदास्तु (मेरौ) द्रष्टव्याः ।

अथ त्रिविक्रममन्त्रा (मेरौ)

अथातः संप्रवक्ष्यामि मन्त्रं त्रैविक्रमं परम् ।
तारो नमो भगवते व्याहृतित्रितयं वदेत् ॥

व्यापकाय परं पश्चाद्ङेऽन्तं चापि त्रिविक्रमम् ।
विंशत्यर्णो महामन्त्रो गतराज्यप्रदायकः ॥
पदपञ्चकसर्वेण षडङ्गविधिरीरितः ।
मुनयो बालिखिल्याः स्युश्छन्दो गायत्रमीरितम् ॥
देवता विश्वरूपोऽयं त्रिविक्रम उदाहृतः ।

ध्यानम् ।

दक्षाङ्घ्रिव्याप्तपातालं वामाङ्घ्रिव्याप्तभूतलम् ।
दक्षिणां पुनरुत्थाप्य स्वर्गव्याप्तिकरं हरिम् ॥
बलिदत्तैः कुशतिलतोयैः संप्रस्रवत्करम् ।
अभयं वामहस्तेन कुर्वन्तं च सुरेश्वरम् ॥
गङ्गौघधौतपादाब्जं ध्यायेद्ब्रह्मादिकस्तुतम् ।

अथ पुरश्चरणम् ।

विंशल्लक्षं जपेन्मन्त्रं तिलतण्डुलसर्षपैः ।
त्रिमध्वक्तैर्हुनेत् पश्चात् तर्पणाद्यं च कारयेत् ॥
एवं सिद्धमनुर्मन्त्री लभते वाञ्छितं फलम् ।

अथ परशुराममन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि राममन्त्रं महाद्भुतम् ।
आकल्पमेक एवायं जामदग्न्यो महाबलः ॥
ब्रह्मक्षेत्राय विद्महे क्षत्रियान्ताय धीमहि ।
तन्नो रामः प्रचोदयात् .... .... ॥

तथा ।

श्रीमत्परशुरामस्य गायत्र्येषा महाद्भुता ।
राज्यकृत् कलिभूपानां सर्वतन्त्रेषु गोपिता ॥
भरद्वाजो मुनिः प्रोक्तो गायत्री छन्द ईरितम् ।

श्रीमान् परशुरामोऽस्य देवता भक्तवत्सलः ॥
अष्टेषुत्रिद्विबाह्वब्धिवर्णैः प्रोक्तं षडङ्गकम् ।

अथ ध्यानम् ।

सात्त्विकं श्वेतवर्णं च भस्मोद्धूलितविग्रहम् ।
अग्निहोत्रस्थलासीनं नानामुनिगणावृतम् ॥
कम्बलासनमारूढं स्वर्णतारकुशाङ्गुलिम् ।
श्वेतवस्त्रद्वयोपेतं जुह्वन्तं शान्तमानसम् ॥
ध्यायेच्च राजसं रामं कुङ्कुमारुणविग्रहम् ।
किरीटिनं कुण्डलिनं परश्वब्जवराभयान् ॥
करैर्दधन्तं तरुणं विप्रक्षत्रौघसंवृतम् ।
पीताम्बरधरं कामरूपं बालनिरीक्षितम् ॥
ध्यायेच्च तामसं क्षत्ररुधिराक्तपरश्वधम् ।
आरक्तनेत्रं कर्णस्थब्रह्मसूत्रं यमप्रभम् ॥
धनुष्टङ्कारसंघोषसंत्रस्तभुवनत्रयम् ।
चतुर्बाहुं मुशलिनं संक्रुद्धभ्रातृसंयुतम् ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं सिताज्यघृतपायसैः ।
हुनेद्ब्राह्मणभोज्यान्तं कृत्वा सिद्धो भवेन्मनुः ॥
ब्रह्मकर्मरतो नित्यं गायत्रीजपतत्परः ।
स एव जायते सिद्धो नान्यो विप्रः कदा चन ॥

तथा—

फिरङ्गा यवनाश्चीनाः खुरासानाश्चलेन्धुजाः ।
रामभक्तं प्रदृष्ट्वैते त्रसन्ति प्रणमन्ति च ॥

अथ श्रीरघुनाथमन्त्रा (वशिष्ठसंहितायाम्)

कृष्णं द्वैपायनं व्यासं गुरुं सत्यवतीसुतम् ।

व्यापकाय परं पश्चाद्‌ङेऽन्तं चापि त्रिविक्रमम् ।
विंशत्यर्णो महामन्त्रो गतराज्यप्रदायकः ॥
पदपञ्चकसर्वेण षडङ्गविधिरीरितः ।
मुनयो वालिखिल्याः स्युश्छन्दो गायत्रमीरितम् ॥
देवता विश्वरूपोऽयं त्रिविक्रम उदाहृतः ।

ध्यानम् ।

दक्षाङ्घ्रिव्याप्तपातालं वामाङ्घ्रिव्याप्तभूतलम् ।
दक्षिणं पुनरुत्थाप्य स्वर्गव्याप्तिकरं हरिम् ॥
वलिदत्तैः कुशतिलतोयैः संप्रस्रवत्करम् ।
अभयं वामहस्तेन कुर्वन्तं च सुरेश्वरम् ॥
गङ्गौघधौतपादाब्जं ध्यायेद्ब्रह्मादिकस्तुतम् ।

अथ पुरश्चरणम् ।

विंशल्लक्षं जपेन्मन्त्रं तिलतण्डुलसर्षपैः ।
त्रिमध्वक्तैर्हुनेत् पश्चात् तर्पणाद्यं च कारयेत् ॥
एवं सिद्धमनुर्मन्त्री लभते वाञ्छितं फलम् ।

अथ परशुराममन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि राममन्त्रं महाद्भुतम् ।
आकल्पमेक एवायं जामदग्न्यो महाबलः ॥
ब्रह्मक्षेत्राय विद्महे क्षत्रियान्ताय धीमहि ।
तन्नो रामः प्रचोदयात् .... .... ॥

तथा ।

श्रीमत्परशुरामस्य गायत्र्येषा महाद्भुता ।
राज्यकृत् कलिभूपानां सर्वतन्त्रेषु गोपिता ॥
भरद्वाजो मुनिः प्रोक्तो गायत्री छन्द ईरितम् ।

श्रीमान् परशुरामोऽस्य देवता भक्तवत्सलः ॥
अष्टेषुत्रिद्विबाह्वब्धिवर्णैः प्रोक्तं षडङ्गकम् ।

अथ ध्यानम् ।

सात्त्विकं श्वेतवर्णं च भस्मोद्धूलितविग्रहम् ।
अग्निहोत्रस्थलासीनं नानामुनिगणावृतम् ॥
कम्बलासनमारूढं स्वर्णतारकुशाङ्गुलिम् ।
श्वेतवस्त्रद्वयोपेतं जुह्वन्तं शान्तमानसम् ॥
ध्यायेच्च राजसं रामं कुङ्कुमारुणविग्रहम् ।
किरीटिनं कुण्डलिनं परश्वब्जवराभयान् ॥
करैर्दधन्तं तरुणं विप्रक्षत्रौघसंवृतम् ।
पीताम्बरधरं कामरूपं बालनिरीक्षितम् ॥
ध्यायेच्च तामसं क्षत्ररुधिराक्तपरश्वधम् ।
आरक्तनेत्रं कर्णस्थब्रह्मसूत्रं यमप्रभम् ॥
धनुष्टङ्कारसंघोषसंत्रस्तभुवनत्रयम् ।
चतुर्बाहुं मुशलिनं संक्रुद्धभ्रातृसंयुतम् ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं सिताज्यघृतपायसैः ।
हुनेद्ब्राह्मणभोज्यान्तं कृत्वा सिद्धो भवेन्मनुः ॥
ब्रह्मकर्मरतो नित्यं गायत्रीजपतत्परः ।
स एव जायते सिद्धो नान्यो विप्रः कदा चन ॥

तथा—

फिरङ्गा यवनाश्चीनाः खुरासानाश्चलेन्धुजाः ।
रामभक्तं प्रदृष्ट्वैते त्रसन्ति प्रणमन्ति च ॥

अथ श्रीरघुनाथमन्त्रा (वशिष्ठसंहितायाम्)

कृष्णं द्वैपायनं व्यासं गुरुं सत्यवतीसुतम् ।

समाधिस्थं मुनिं शान्तं प्रसन्नादित्यतेजसम् ॥
गङ्गातीरे महापुण्ये समासीनं तपोनिधिम् ।
शौनकः परिपप्रच्छ साष्टाङ्गं प्रणिपत्य च ॥

श्रीशौनक उवाच ।

अयि प्रसादसुमुख कुरुष्व मयि मानसम् ।
त्वत्प्रसादान्महामन्त्रा विहिता बहवो मया ॥
करुणारसपूर्णाभ्यां नेत्राभ्यां मां विलोकय ।
सच्चिदानन्दमात्मानं ज्ञातवान् ब्रह्मशास्वतम् ॥
इदानीं श्रोतुमिच्छामि मन्त्रं साङ्गं सहार्चनम् ।
रामात्मनाऽवतीर्णस्य विष्णोरमिततेजसः ॥
ब्रूहि मे भगवन् सर्वं श्रोतुं योग्योऽस्म्यहं यदि ।
असौ भाग्येन लोकोऽयं दारिद्र्येण च पीडितः ॥
येन सौभाग्यमतुलं महदैश्वर्यसम्भवम् ।
शास्त्रज्ञानं कवित्वं च सर्वज्ञत्वं लभेन्नरः ॥

श्रीव्यास उवाच ।

साधु पृष्टं त्वया ब्रह्मन् कथये सकलं तव ।
ब्रह्मणा कथितं पूर्वं वशिष्ठाय महात्मने ॥
वशिष्ठोऽपि स्वपुत्राय मत्पित्रे दत्तवान्मनुम् ।
प्रसन्नहृदयः शुद्धः पिता मे करुणानिधिः ॥
कुरुक्षेत्रे महापुण्ये सूर्यपर्वणि दत्तवान् ।
मया च साधितो मन्त्रो जपहोमार्चनादिभिः ॥
इतः पूर्वं मया नोक्तो मन्त्रराजस्तु कस्य चित् ।
एवं परम्पराप्रोक्तं भक्त्या मन्त्रं शृणुष्व मे ॥

अयोग्याय न दातव्यो मन्त्रराजस्त्वया मुने ।
यत्नेन गोपय त्वं च रहस्यं श्रीप्रसिद्धिदम् ॥

शिष्यलक्षणमुक्त्वा—

ईदृग्विधाय शिष्याय मन्त्रं दद्यात् तु नान्यथा ।
यदन्यथा वदेत् तस्मिन् देवता शापदा भवेत् ॥

मन्त्रोद्धारमाह ।

मान्तान्तं विन्दुसंयुक्तं नारायणविभूषितम् ।
बीजमेतत् समुद्धृत्य विन्दुहीनं पुनश्च तत् ॥
भान्तं चाकारसंयुक्तं मान्तान्तां नतिमुद्धरेत् ।
एतत् षडक्षरं मन्त्रं सर्वैश्वर्यप्रदायकम् ॥
सर्वसौभाग्यजननं सर्वलोकवशङ्करम् ।
विद्यासिद्धिकरं नृणां महदाज्ञाकरं मुने ॥
ऋषिर्ब्रह्माऽस्य मन्त्रस्य गायत्रं छन्द उच्यते ।
रामाख्यं वैष्णवं धाम देवता परिकीर्त्तिता ॥
जानीयात् प्रथमं वर्णं बीजं शक्तिं नतिं तथा ।

मन्त्रार्थमाह (रामार्चनचन्द्रिकायाम्)

श्रीराममन्त्रराजस्य सम्यगर्थोऽभिधीयते ।
रकारो वह्निवचनः प्रकाशे पर्यवस्यति ॥
सच्चिदानन्दरूपोऽस्य परमात्मार्थ उच्यते ।
व्यञ्जनं निष्कलं ब्रह्म प्राणो मायेति च स्वरः ॥
व्यञ्जनैः स्वरसंयोगो विद्धि तत्प्राणयोजनम् ।
रेफे ज्योतिर्मये तस्मात् कृतमाकारयोजनम् ॥
मकारोऽभ्युदयार्थत्वान्मायात्मेति च कथ्यते ।
तस्मादनेन बीजेन समायं ब्रह्म उच्यते ॥

समाधिस्थं मुनिं शान्तं प्रसन्नादित्यतेजसम् ॥
गङ्गातीरे महापुण्ये समासीनं तपोनिधिम् ।
शौनकः परिपप्रच्छ साष्टाङ्गं प्रणिपत्य च ॥

श्रीशौनक उवाच ।

अयि प्रसादसुमुख कुरुष्व मयि मानसम् ।
तत्प्रासादान्महामन्त्रा विहिता बहवो मया ॥
करुणारसपूर्णाभ्यां नेत्राभ्यां मां विलोकय ।
सच्चिदानन्दमात्मानं ज्ञातवान् ब्रह्मशास्वतम् ॥
इदानीं श्रोतुमिच्छामि मन्त्रं साङ्गं सहाचर्नम् ।
रामात्मनाऽवतीर्णस्य विष्णोरमिततेजसः ॥
ब्रूहि मे भगवन् सर्वं श्रोतुं योग्योऽस्म्यहं यदि ।
असौ भाग्येन लोकोऽयं दारिद्र्येण च पीडितः ॥
येन सौभाग्यमतुलं महदैश्वर्यसम्भवम् ।
शास्त्रज्ञानं कवित्वं च सर्वज्ञत्वं लभेन्नरः ॥

श्रीव्यास उवाच ।

साधु पृष्टं त्वया ब्रह्मन् कथये सकलं तव ।
ब्रह्मणा कथितं पूर्वं वशिष्ठाय महात्मने ॥
वशिष्ठोऽपि स्वपुत्राय मत्पित्रे दत्तवान्मनुम् ।
प्रसन्नहृदयः शुद्धः पिता मे करुणानिधिः ॥
कुरुक्षेत्रे महापुण्ये सूर्यपर्वणि दत्तवान् ।
मया च साधितो मन्त्रो जपहोमार्चनादिभिः ॥
इतः पूर्वं मया नोक्तो मन्त्रराजस्तु कस्य चित् ।
एवं परम्पराप्रोक्तं भक्त्या मन्त्रं शृणुष्व मे ॥

अयोग्याय न दातव्यो मन्त्रराजस्त्वया मुने ।
यत्नेन गोपय त्वं च रहस्यं श्रीप्रसिद्धिदम् ॥

शिष्यलक्षणमुक्त्वा—

ईदृग्विधाय शिष्याय मन्त्रं दद्यात् तु नान्यथा ।
यदन्यथा वदेत् तस्मिन् देवता शापदा भवेत् ॥

मन्त्रोद्धारमाह ।

मान्तान्तं विन्दुसंयुक्तं नारायणविभूषितम् ।
बीजमेतत् समुद्धृत्य विन्दुहीनं पुनश्च तत् ॥
भान्तं चाकारसंयुक्तं मान्तान्तां नतिमुद्धरेत् ।
एतत् षडक्षरं मन्त्रं सर्वैश्वर्यप्रदायकम् ॥
सर्वसौभाग्यजननं सर्वलोकवशङ्करम् ।
विद्यासिद्धिकरं नृणां महदाज्ञाकरं मुने ॥
ऋषिर्ब्रह्माऽस्य मन्त्रस्य गायत्रं छन्द उच्यते ।
रामाख्यं वैष्णवं धाम देवता परिकीर्त्तिता ॥
जानीयात् प्रथमं वर्णं बीजं शक्तिं नतिं तथा ।

मन्त्रार्थमाह (रामार्चनचन्द्रिकायाम्)

श्रीराममन्त्रराजस्य सम्यगर्थोऽभिधीयते ।
रकारो वह्निवचनः प्रकाशे पर्यवस्यति ॥
सच्चिदानन्दरूपोऽस्य परमात्मार्थ उच्यते ।
व्यञ्जनं निष्कलं ब्रह्म प्राणो मायेति च स्वरः ॥
व्यञ्जनैः स्वरसंयोगो विद्धि तत्प्राणयोजनम् ।
रेफे ज्योतिर्मये तस्मात् कृतमाकारयोजनम् ॥
मकारोऽभ्युदयार्थत्वान्मायात्मेति च कथ्यते ।
तस्मादनेन बीजेन समायं ब्रह्म उच्यते ॥

( रामोपनिषदि )

स्वप्रकाशः स्वयं ज्योतिः स्वानुभूत्येकचिन्मयः ।
तदेव मन्त्रराजस्य मनुराड्ब्रह्मवाचरः स्मृतः ॥
अखण्डैकरसानन्दस्तारको ब्रह्मवाचकः ।
रामायेति सुविज्ञेयः सत्यानन्दचिदात्मकः ॥
नमःपदं सुविज्ञेयं पूर्णानन्दैकविग्रहम् ।
सदा नमन्ति हृदये सर्वे देवा मुमुक्षवः ॥

आद्यबीजभेदात् षड्विधोऽयं मन्त्रस्तदुक्तं ( मेरुतन्त्रे )

अथातः संप्रवक्ष्यामि भुक्तिमुक्तिप्रदायकान् ।
राममन्त्रान् स भगवान् प्रतिमन्वन्तरे ह्यभूत् ॥
युगानां परिवर्त्तेन कल्पे शक्रावतारकः ।
तत्राद्यस्य प्रवक्ष्यामि मन्त्रराजं षडक्षरम् ॥
रामाय नम इत्येष राँ क्लीँ ह्रीँ ऐँ तु पूर्वकः ।
श्रीताराद्यश्च षड्वर्णः षड्विधः परिकीर्त्तितः ॥
ब्रह्मा संमोहनः शक्तिर्दक्षिणामूर्त्तिरेव च ।
अगस्त्यः श्रीशिवः प्रोक्तो मुनयोऽनुक्रमादिमे ॥
छन्दो गायत्रसंज्ञं च श्रीरामो देवता मतः ।

षडक्षरस्यैव भूयांसः प्रभेदास्तत्रैवोक्ताः ।

पञ्चाशन्मातृकामन्त्रवर्णः प्रत्येकपूर्वकः ।
लक्ष्म्यादिर्वाग्भवादिश्च मन्मथादिर्ध्रुवादिकः ॥
रामचन्द्रस्तथा भेदाः शतद्वयमिता अमी ।
रामभद्रेति शब्देन चैवं भेदाः शतद्वयम् ॥
रमाबीजादिकानां तु विश्वामित्रो मुनिर्मतः ।
वाग्बीजपूर्वकाणां तु दक्षिणामूर्त्तिरुच्यते ॥

कामबीजादिपूर्वेषां मुनिः संमोहनो मतः ।
तारादिपूर्वकाणां तु श्रीशिवः प्रोच्यते मुनिः ॥
श्रीमायामन्मथैकैकबीजाद्यन्तगतो यदा ।
रामभद्रो रामचन्द्रः षोढा षड्वर्ण उच्यते ॥
षोढा नमोऽन्तः प्राक् प्रोक्तः फट्कारान्तः स एव हि ।
षोढा स्याद्वह्निजायान्तः स एवं षड्विधो मतः ॥
चतुःशतं चतुर्विंशभेदास्तेन निरूपिताः ।

तथा ।

तारादिर्मुक्तये ह्येष रमादिर्भुक्तये भवेत् ।
वाक्सिद्धये च वागादिः सर्ववश्याय मान्मथः ॥
ताराद्यैः पुटितान् मन्त्रान् सर्वार्थं विनियोजयेत् ।

तथा ।

ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यन्धुषु पादयोः ।
बीजैः षड्दीर्घसंयुक्तैः षडङ्गविधिरीरितः ॥

(वशिष्ठसंहितायाम्)

आधारे भावयेच्छक्तिं चिदानन्दस्वरूपिणीम् ।
उद्यदादित्यसंकाशमाधारं तत्प्रभामयम् ॥
आधारभावनामेवं संभाव्य मुनिसत्तम ।
ततः समुत्थितं तेजः शिखारूपं च चिन्तयेत् ॥
विद्युत्कोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
सुषुम्नामुखमुन्मील्य प्रापयेदुपदेशतः ॥
ब्रह्माध्वनाऽऽनयेदूर्ध्वं द्वादशान्तेन्दुमण्डलम् ।
प्रापय्य विधिना बुद्ध्या स्रावयेत् तत् सुधामृतम् ॥
ततः परिगलच्छुद्धसुधाधाराभिरावृतम् ।

निजदेहं जगत् सर्वमेकीभूतं विचिन्तयेत् ॥
निष्प्रपञ्चं निराकारं निरवद्यं निरञ्जनम् ।
अशून्यशून्योपरमं सदसद्भाववर्जितम् ॥
अखण्डानन्दमात्मानं भावयेन्मुनिसत्तम ।
देवतागुरुमन्त्राणां भावयेदैक्यमात्मनः ॥
एवं संचिन्तयेन्मन्त्री मन्त्रं प्रतिदिनं जपेत् ।
ऐहिकानखिलान् भोगान् भुक्त्वा चान्ते पदं व्रजेत् ॥
उपसंहृत्य तत् तेजो यद्वा हृदयपङ्कजे ।
रामं ज्योतिर्मयं ध्यायेत् सर्वलोकैकसाक्षिणम् ॥
जगदुद्भूतिसम्भूतिपरिभूतिकरं हरिम् ।
देवासुरमनुष्यैश्च योगिवृन्दैश्च सेवितम् ॥

अथ ध्यानम् ।

चतुर्भुजं शङ्खचक्रगदापङ्कजधारिणम् ।
किरीटहारकेयूररत्नकुण्डलमण्डितम् ॥
एवं ध्यात्वा जपेन्मन्त्रं षट्सहस्रं दिने दिने ।
वाचः श्रियः पतिर्भूत्वा कविर्भवति वत्सरात् ॥

ध्यानान्तरमाह ।

ध्यायेत् कल्पतरोर्मूले सौवर्णमण्डपं मुने ।
तन्मध्ये पुष्पकाख्यं च विमानं दिव्यमुत्तमम् ॥
मध्ये सिंहासनं तस्य नानारत्नविभूषितम् ।
तन्मध्येऽष्टदलं पद्ममुद्यदादित्यसन्निभम् ॥
श्रीराममेनं तन्मध्ये समासीनं महामुने ।
सम्यग्ज्ञानमयीं मुद्रां दधानं दक्षिणे करे ॥

तेजःप्रकाशनं वामं जानुमूर्धनि चापरम् ।
जानकीवल्लभं देवमिन्द्रनीलसमप्रभम् ॥
उद्यानिरतं देवं द्विभुजं रघुनन्दनम् ।
वशिष्ठवामदेवादिमुनिभिः परिवारितम् ॥
वामभागे समासीनां सीतां काञ्चनसन्निभाम् ।
भजतां कामदां नित्यं रक्तोत्पलकराम्बुजाम् ॥
लक्ष्मणं पश्चिमे भागे धृतच्छत्रसुचामरम् ।
पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ॥
एवं ध्यात्वा जपेन्मन्त्रं ज्ञानलक्ष्म्योश्च भाजनम् ।

( शारदायामपि )

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥

( मेरुतन्त्रे )

वीरासनसमारूढं व्याख्यामुद्रोपशोभितम् ।
वामोरुन्यस्ततद्धस्तं सीतालक्ष्मणसंयुतम् ॥

तन्त्रान्तरे पूर्वोक्तध्यानमुक्त्वा—

एवं तद्ध्यानमात्रेण सर्वपापैः प्रमुच्यते ।
राममिन्दीवरश्यामं पद्मपत्रायतेक्षणम् ॥
ध्यात्वा तु हृदयाम्भोजे ये जपन्ति षडक्षरम् ।
करामलकवज्ज्ञेया मुक्तिस्तेषां महात्मनाम् ॥

( वशिष्ठसंहितायाम् )

शास्त्रज्ञानं कवित्वं च षण्मासाज्जायते मुने ।

निजदेहं जगत् सर्वमेकीभूतं विचिन्तयेत् ॥
निष्प्रपञ्चं निराकारं निरवद्यं निरञ्जनम् ।
अशून्यशून्योपरमं सदसद्भाववर्जितम् ॥
अखण्डानन्दमात्मानं भावयेन्मुनिसत्तम ।
देवतागुरुमन्त्राणां भावयेदैक्यमात्मनः ॥
एवं संचिन्तयेन्मन्त्री मन्त्रं प्रतिदिनं जपेत् ।
ऐहिकानखिलान् भोगान् भुक्त्वा चान्ते पदं व्रजेत् ॥
उपसंहृत्य तत् तेजो यद्वा हृदयपङ्कजे ।
रामं ज्योतिर्मयं ध्यायेत् सर्वलोकैकसाक्षिणम् ॥
जगदुद्भूतिसम्भूतिपरिभूतिकरं हरिम् ।
देवासुरमनुष्यैश्च योगिवृन्दैश्च सेवितम् ॥

अथ ध्यानम् ।

चतुर्भुजं शङ्खचक्रगदापङ्कजधारिणम् ।
किरीटहारकेयूररत्नकुण्डलमण्डितम् ॥
एवं ध्यात्वा जपेन्मन्त्रं षट्सहस्रं दिने दिने ।
वाचः श्रियः पतिर्भूत्वा कविर्भवति वत्सरात् ॥

ध्यानान्तरमाह ।

ध्यायेत् कल्पतरोर्मूले सौवर्णमण्डपं मुने ।
तन्मध्ये पुष्पकाख्यं च विमानं दिव्यमुत्तमम् ॥
मध्ये सिंहासनं तस्य नानारत्नविभूषितम् ।
तन्मध्येऽष्टदलं पद्ममुद्यदादित्यसन्निभम् ॥
श्रीराममेनं तन्मध्ये समासीनं महामुने ।
सम्यग्ज्ञानमयीं मुद्रां दधानं दक्षिणे करे ॥

तेजःप्रकाशनं वामं जानुमूर्धनि चापरम् ।
जानकीवल्लभं देवमिन्द्रनीलसमप्रभम् ॥
उद्यानानिरतं देवं द्विभुजं रघुनन्दनम् ।
वशिष्ठवामदेवादिमुनिभिः परिवारितम् ॥
वामभागे समासीनां सीतां काञ्चनसन्निभाम् ।
भजतां कामदां नित्यं रक्तोत्पलकराम्बुजाम् ॥
लक्ष्मणं पश्चिमे भागे धृतच्छत्रसुचामरम् ।
पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ॥
एवं ध्यात्वा जपेन्मन्त्रं ज्ञानलक्ष्म्योश्च भाजनम् ।

( शारदायामपि )

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥

( मेरुतन्त्रे )

वीरासनसमारूढं व्याख्यामुद्रोपशोभितम् ।
वामोरुन्यस्ततद्धस्तं सीतालक्ष्मणसंयुतम् ॥

तन्त्रान्तरे पूर्वोक्तध्यानमुक्त्वा—

एवं तद्ध्यानमात्रेण सर्वपापैः प्रमुच्यते ।
राममिन्दीवरश्यामं पद्मपत्रायतेक्षणम् ॥
ध्यात्वा तु हृदयाम्भोजे ये जपन्ति षडक्षरम् ।
करामलकवज्ज्ञेया मुक्तिस्तेषां महात्मनाम् ॥

( वशिष्ठसंहितायाम् )

शास्त्रज्ञानं कवित्वं च षण्मासाज्ज्ञायते मुने ।

जपतां मन्त्रिणामेवं जपयोगेन धीमताम् ॥
पुरश्चरणकृत्येन विनाऽपि फलदो मनुः ।

अस्य पुरश्चरणमुक्तं (मेरुतन्त्रे)

वर्णलक्षं जपेन्मन्त्रं दशांशं मधुरप्लुतैः ।
विल्वपत्रैः फलैः पुष्पैस्तिलैर्वा पङ्कजैर्हुनेत् ॥

अथ मालामन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि लक्ष्मणोपासितं मनुम् ।
तारो नमो भगवते ङेऽन्तः स्याद्रघुनन्दनः ॥
रक्षोघ्नविशदायेति मधुरेति पदं ततः ।
प्रसन्नवदनायेति ततश्चामिततेजसे ॥
वलायेति च रामाय विष्णवे नम इत्ययम् ।
सप्तचत्वारिंशद्वर्णो मालामन्त्र उदाहृतः ॥
मुनिः पितामहश्छन्दः स्यादनुष्टुप् च देवता ।
राज्याभिषिक्तो रामश्चोँ बीजं शक्तिर्नमोऽस्त्विति ॥
सप्तर्तुसप्तदशषड्रससङ्ख्यैः षडङ्गकम् ।

तथा ।

ध्यानं दशाक्षरं प्रोक्तं लक्षमेकं जपेन्मनुम् ।
विल्वैः प्रसूनैः पत्रैर्वा तिलैस्त्रिमधुना युतैः ॥
मधुरत्रययुक्तेन पायसेनाथ वाऽम्बुजैः ।
होमं दशांशतः कुर्यात् तथा सर्वत्र तर्पणम् ॥
मार्जनं भोजयेद्विप्रान् प्रयोगादि च पूर्ववत् ।

दशाक्षरमन्त्रो वक्ष्यते ।
मन्वन्तरभेदेन श्रीराममन्त्रभेद उक्तस्तत्रैव ।

अथातः संप्रवक्ष्यामि स्वारोचिषसमुद्भवम् ।

रामस्यैकाक्षरं मन्त्रं कीर्त्यते स तु रामिति ॥
ब्रह्मा मुनिः स्याद्गायत्रं छन्दो रामोऽस्य देवता ।
मूर्त्तिपञ्जरनामानं तत्त्वन्यासं च कारयेत् ॥
षड्दीर्घार्धेन्दुयुक्तेन बीजेनैव षडङ्गकम् ।
ध्यानपूजादिकं प्राग्वद्रानुलक्षं जपेन्मनुम् ॥
अथातः संप्रवक्ष्यामि तृतीयान्तर्मनोर्विधिम् ।
राम एत्येष कथितो द्व्यक्षरो भुक्तिमुक्तिदः ॥
एकाक्षरोक्तमृष्यादि स्यादाद्येन षडङ्गकम् ।
ध्यानपूजाप्रयोगादि सर्वं ज्ञेयं षडर्णवत् ॥
एवं पुरश्चरणमपि ज्ञेयम् ।
अथातः संप्रवक्ष्यामि चतुर्थान्तर्मनोर्विधिम् ।
तारमायारमानङ्गवाक्स्वबीजैश्च षड्विधः ॥
द्व्यक्षरो मन्त्रराजस्तु त्र्यक्षरः परिजायते ।
न्यासपूजाप्रयोगादि सर्वं पूर्ववदाचरेत् ॥
अथातः संप्रवक्ष्यामि पञ्चमान्तर्मनोर्विधिम् ।
द्व्यक्षरश्चन्द्रभद्रान्तो द्विविधश्चतुरक्षरः ॥
ऋषिन्यासार्चनाद्यं तु सर्वं पूर्ववदाचरेत् ।
विशेषतश्चतुर्वर्गफलदोऽयं मतो मनुः ॥
अथातः संप्रवक्ष्यामि षष्ठमन्वन्तरोद्भवम् ।
रामाय नम इत्येष मनुः पञ्चाक्षरो मतः ॥
विश्वामित्रो मुनिः प्रोक्तः पङ्क्तिश्छन्दोऽस्य देवता ।
रामभद्रो बीजशक्ती प्रथमार्णनती क्रमात् ॥
भ्रूमध्ये हृदि नाभ्यधो पादयोर्विन्यसेन्मनुम् ।
षडङ्गं पूर्ववद्यद्वा मन्त्रार्णैर्मनुनाऽस्त्रकम् ॥

जपतां मन्त्रिणामेवं जपयोगेन धीमताम् ॥
पुरश्चरणकृत्येन विनाऽपि फलदो मनुः ।

अस्य पुरश्चरणमुक्तं (मेरुतन्त्रे)

वर्णलक्षं जपेन्मन्त्रं दशांशं मधुरप्लुतैः ।
बिल्वपत्रैः फलैः पुष्पैस्तिलैर्वा पङ्कजैर्हुनेत् ॥

अथ मालामन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि लक्ष्मणोपासितं मनुम् ।
तारो नमो भगवते ङेऽन्तः स्याद्रघुनन्दनः ॥
रक्षोघ्नविशदायेति मधुरेति पदं ततः ।
प्रसन्नवदनायेति ततश्चामिततेजसे ॥
बलायेति च रामाय विष्णवे नम इत्ययम् ।
सप्तचत्वारिंशदर्णो मालामन्त्र उदाहृतः ॥
मुनिः पितामहश्छन्दः स्यादनुष्टुप् च देवता ।
राज्याभिषिक्तो रामश्चों बीजं शक्तिर्नमोऽस्त्विति ॥
सप्तर्तुसप्तदशषड्रससङ्ख्यैः षडङ्गकम् ।

तथा ।

ध्यानं दशाक्षरं प्रोक्तं लक्षमेकं जपेन्मनुम् ।
बिल्वैः प्रसूनैः पत्रैर्वा तिलैस्त्रिमधुना युतैः ॥
मधुरत्रययुक्तेन पायसेनाथ वाऽम्बुजैः ।
होमं दशांशतः कुर्यात् तथा सर्वत्र तर्पणम् ॥
मार्जनं भोजयेद्विप्रान् प्रयोगादि च पूर्ववत् ।

दशाक्षरमन्त्रो वक्ष्यते ।
मन्वन्तरभेदेन श्रीराममन्त्रभेद उक्तस्तत्रैव ।

अथातः संप्रवक्ष्यामि स्वारोचिषसमुद्भवम् ।

रामस्यैकाक्षरं मन्त्रं कीर्त्यते स तु रामिति ॥
ब्रह्मा मुनिः स्याद्गायत्रं छन्दो रामोऽस्य देवता ।
मूर्त्तिपञ्जरनामानं तत्त्वन्यासं च कारयेत् ॥
षड्दीर्घार्धेन्दुयुक्तेन बीजेनैव षडङ्गकम् ।
ध्यानपूजादिकं प्राग्वद्रामानुलक्षं जपेन्मनुम् ॥
अथातः संप्रवक्ष्यामि तृतीयान्तर्मनोर्विधिम् ।
राम एत्येष कथितो द्व्यक्षरो भुक्तिमुक्तिदः ॥
एकाक्षरोक्तमृष्यादि स्यादाद्येन षडङ्गकम् ।
ध्यानपूजाप्रयोगादि सर्वं ज्ञेयं षडर्णवत् ॥

एवं पुरश्चरणमपि ज्ञेयम् ।

अथातः संप्रवक्ष्यामि चतुर्थान्तर्मनोर्विधिम् ।
तारमायारमानङ्गवाक्स्वबीजैश्च षड्विधः ॥
द्व्यक्षरो मन्त्रराजस्तु त्र्यक्षरः परिजायते ।
न्यासपूजाप्रयोगादि सर्वं पूर्ववदाचरेत् ॥
अथातः संप्रवक्ष्यामि पञ्चमान्तर्मनोर्विधिम् ।
द्व्यक्षरश्चन्द्रभद्रान्तो द्विविधश्चतुरक्षरः ॥
ऋषिन्यासार्चनाद्यं तु सर्वं पूर्ववदाचरेत् ।
विशेषतश्चतुर्वर्गफलदोऽयं मतो मनुः ॥
अथातः संप्रवक्ष्यामि षष्ठमन्वन्तरोद्भवम् ।
रामाय नम इत्येष मनुः पञ्चाक्षरो मतः ॥
विश्वामित्रो मुनिः प्रोक्तः पङ्क्तिश्छन्दोऽस्य देवता ।
रामभद्रो बीजशक्ती प्रथमार्णनती क्रमात् ॥
भ्रूमध्ये हृदि नाभ्यधो पादयोर्विन्यसेन्मनुम् ।
षडङ्गं पूर्ववद्यद्वा मन्त्रार्णैर्मनुनाऽस्त्रकम् ॥

ध्यानमाह ।

मध्ये वनं कल्पतरोर्मूले पुष्पलतासने ।
लक्ष्मणेन प्रगुणितमक्ष्णः कोणेन सायकम् ॥
अवेक्षमाणं जानक्या कृतव्यजनमीश्वरम् ।
जटाभारलसच्छीर्षं श्यामं मुनिगणावृतम् ॥
लक्ष्मणेन धृतच्छत्रमथ वा पुष्पकोपरि ।
दशास्यमथनं शान्तं ससुग्रीवविभीषणम् ॥
विजयार्थी विशेषेण वर्णलक्षं जपेन्मनुम् ।
प्राग्वद्धोमस्तर्पणादि प्रयोगाद्यं च साधयेत् ॥
अथातः संप्रवक्ष्यामि मन्त्रं सावर्णिकोद्भवम् ।
तारादिषड्भिः संयुक्तो द्वेधा सप्ताक्षरो मनुः ॥
अष्टाक्षरो द्वादशधा कीर्त्तितो राज्यदायकः ।
सर्वं षडर्णवज्ज्ञेयं ध्यानपूजाजपादिकम् ॥
अथातः संप्रवक्ष्यामि मन्त्रान् नवमसम्भवान् ।
तारो रामश्चतुर्थ्यन्तः क्रोधोऽस्त्रं वह्निवल्लभा ॥
अष्टार्णोऽयं परो मन्त्रो मुन्यादिः स्यात् षडर्णवत् ।
नाशकः सर्वदोषाणां सङ्ग्रामविजयप्रदः ॥
अथातः संप्रवक्ष्यामि मन्त्रान् दशमसम्भवान् ।
ॐ ह्रीँ नमश्च रामाय ह्रीमित्यष्टाक्षरः परः ॥
ऋषिः सदाशिवः प्रोक्तो गायत्रं छन्द उच्यते ।
शिवोमारामचन्द्रोऽस्य देवता परिकीर्त्तितः ॥
दीर्घया मायया ऽङ्गानि तारपञ्चार्णयुक्तया ।
ॐनमो रामाय ह्रीँ हृदयाय नमः—इत्यादि ।

ध्यानपुरश्चरणे प्राह ।

रामं त्रिनेत्रं सोमार्धधारिणं शूलिनं वरम् ।
भस्मोद्धूलितसर्वाङ्गं कपर्दिनमुपास्महे ॥
रामाभिरामां सौन्दर्यसीमां सोमावतंसिनीम् ।
पाशाङ्कुशधनुर्बाणधरां ध्यायेत् त्रिलोचनाम् ॥
रामशक्तिं तु सीताख्यां वर्णलक्षं जपेन्मनुम् ।
होमपूजादिकं सर्वं षडक्षरवदीरितम् ॥
विशेषतो भोगदाता सङ्ग्रामविजयप्रदः ।
अथैकादशसम्भूतान् राममन्त्रान् वदाम्यहम् ॥
सप्तार्णयौ मनू प्रोक्तौ षड्भिस्तारादिकैः पृथक् ।
संपुटौ ते द्वादशधा नवार्णा मनवः सुराः ॥
ध्यानपूजादिकं सर्वं तेषां सप्तार्णवद्भवेत् ।
अथातः संप्रवक्ष्यामि द्वादशान्तरसम्भवम् ॥
जानकीवल्लभो ङेऽन्तः स्वाहान्तश्च हुमादिकः ।
दशाक्षरोऽयं मन्त्रः स्याद्वशिष्ठोऽस्य मुनिश्च राट् ॥
छन्दश्च देवता रामः सीतापाणिपरिग्रहः ।
आद्यं बीजं द्विठः शक्तिरङ्गं षड्दीर्घको मतः ॥
शिरोललाटभ्रूमध्यतालुकण्ठेषु हृद्यपि ।
नाभ्यन्धुजानुपादेषु दशार्णान् विन्यसेन्मनोः ॥

ध्यानमाह ।

अयोध्यानगरे रत्नचिते सौवर्णमण्डपे ।
मन्दारपुष्पैराबद्धविताने तोरणान्विते ॥
सिंहासनसमारूढं पुष्पकोपरि राघवम् ।
रक्षोभिर्हरिभिर्देवैर्दिव्ययानगतैः शुभैः ॥

संस्तूयमानं मुनिभिः प्रहृष्टैरुपसेवितम् ।
सीतालङ्कृतवामाङ्गं लक्ष्मणेनोपशोभितम् ॥
श्यामं प्रसन्नवदनं सर्वाभरणभूषितम् ।
ध्यायन्नेवं जपेन्मन्त्रं वर्णलक्षमनन्यधीः ॥
जपपूजाप्रयोगादि सर्वमस्य षडर्णवत् ।
अथ त्रयोदशे जातं राममन्त्रं वदाम्यहम् ॥
रामो ङेऽन्तो धनुष्पाणिस्तथा स्याद्वह्निसुन्दरी ।
दशाक्षरो मुनिर्ब्रह्मा विराट् छन्दोऽस्य देवता ॥
राक्षसान्तकरो रामो राँ बीजं परिकीर्त्तितम् ।
स्वाहा शक्तिश्च बीजेन षडङ्गानि समाचरेत् ॥
वर्णन्यासं तथा ध्यानं पौरश्चरणिकं विधिम् ।
दशाक्षरोक्तवत् कुर्याच्चापबाणधरं स्मरेत् ॥
विशेषाज्जयदश्चायं भ्रष्टराज्यप्रदायकः ।

एवं हनुमदाद्युपासिता मन्त्रा ( मेरौ ) द्रष्टव्याः ।
अथ रामगायत्री तत्रैव ।

अथातः संप्रवक्ष्यामि शत्रुघ्नोपासितां पराम् ।
जयदां रामगायत्रीमुपास्यां सूर्यवंशजैः ॥
दाशरथये विद्महे सीतावल्लभाय धीमहि तन्नो रामः प्रचोदयात् ।
एषा स्याद्रामगायत्री भक्तानां भुक्तिमुक्तिदा ।
जन्मप्रभृति यत् पापं दशभिर्यातिमक्षयम् ॥
पुरा कृतं शतेनैव सहस्रेण जपेन वा ।
पुरश्चरणमस्याश्च चतुर्लक्षजपो विधिः ॥
यच्च यावच्च पूजादि सर्वं पूर्ववदाचरेत् ।
तारादिरेषा गायत्री मुक्तिमेव प्रयच्छति ॥

मायादिरपि वैश्वर्यं रमादिश्च श्रियं पराम्।
मदनेनापि संयुक्तो संमोहयति मेदिनीम् ॥

अथ सीतामन्त्रो (वशिष्ठसंहितायाम्)

श्रीबीजं पूर्वमुच्चार्य सीतायै पदमुद्धरेत्।
वह्निजायान्वितो मन्त्रो भजतां कल्पभूरुहः ॥
जनकोऽस्य ऋषिः प्रोक्तो गायत्री छन्द उच्यते।
सीताख्या या जगद्धात्री देवता सा जगन्मयी ॥

(मेरुतन्त्रे)

सीता भगवती प्रोक्ता श्रीबीजं शक्तिरन्त्यकौ।
दीर्घस्वरयुजाऽऽद्येन षडङ्गानि प्रकल्पयेत् ॥
पूजयेद्वैष्णवे पीठे ध्यायेद्राघवसंयुताम्।
स्वर्णाभामम्बुजकरां रामालोकनतत्पराम् ॥

पुरश्चरणमाह।

वर्णलक्षं जपेन्मन्त्रमिष्टार्थं साधयेत् ततः।

अथ बलरामन्त्रस्तन्त्रान्तरे।

तारान्ते बलभद्राय हृदयं वसुवर्णवान्।
मनिस्तु जैमिनिश्छन्दो गायत्रं देवताऽस्य च ॥
बलरामो मन्त्रवर्णैर्द्विरावृत्त्या षडङ्गकम्।

अथ ध्यानम्।

शुभ्राभ्रगौरं नीलाभं वसनं रेवतीप्रियम्।
दधानं सीरमुशले बलरामं समाश्रये ॥

अथ पुरश्चरणम्।

वर्णलक्षं जपेन्मन्त्रं जुहुयात् तद्दशांशतः-इति।

अथ श्रीकृष्णमन्त्राः (मेरुतन्त्रे)

अथातः संप्रवक्ष्यामि कृष्णमन्त्रान् महाद्भुतान्।
कृष्णः स एव भगवान् कलिद्वापरसन्धिगः ॥

वर्धयेत् कलिधर्माणां भक्तानां तारणाय सः ।
एकसप्ततिरूपोऽसौ प्रतिमन्वन्तरे भवेत् ॥
तदुक्ताचरणान्मोक्षस्तत्कृताचरणाच्च्युतिः ।
इति तत्त्वं समाख्यातं विभवस्य भवस्य च ॥
जातश्चाद्ये कलियुगे नानागोपीरते रतः ।
तत्कर्म कुर्वतां पातस्तत्सामर्थ्यं विभाविना ॥
स्वधर्मनिरतानां तु कलौ जन्म प्रजायते ।
तस्य मन्त्रं प्रवक्ष्यामि भुक्तिमुक्तिप्रसाधनम् ॥
गोपीजनवल्लभाय स्वाहामन्त्रो दशाक्षरः ।

( गौतमीये )

गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ।
अयं दशाक्षरो मन्त्रो दृष्टादृष्टफलप्रदः ॥
बीजपूर्वो जपश्चास्य रहस्यं कथितं मुने ।
लुप्तबीजस्वभावत्वाद्दशाक्षरमिहोच्यते ॥

(बृहद्गौतमीये)

भोगमोक्षैकनिलयो लुप्तबीजो दशाक्षरः ।
उद्धारे तु पृथक् तेन कामबीजं महामुने ॥
यद्योगात् फलदो मन्त्रो नान्यथा कल्पकोटिभिः ।

(मेरुतन्त्रे)

नारदोऽस्य मुनिः प्रोक्तो विराट् छन्द उदाहृतम् ।
देवता नन्दपुत्रः क्लीँ बीजं शक्तिः शिखिप्रिया ॥
आविशुः पूर्वपदकैस्त्रैलोक्यरक्षणादिकैः ।
असुरान्तादिकैश्चक्रशब्दैः स्वाहान्तकैश्चरेत् ॥
जातियुक्तैश्च पञ्चाङ्गं तथा पञ्चाङ्गुलीष्वपि ।

हृदये शीर्षके चैव शिखायां कवचे तथा ॥
अस्त्रे पार्श्वद्वये कट्यां पृष्ठे मूर्धनि च क्रमात्।
न्यासान्तराण्युक्त्वा ध्यानमाह।
एवं कृत्वा विधानेन मन्त्री मन्त्रकलेवरम्।
त्रय्यन्तबोधितं नित्यं कृष्णं ध्यायेज्जगत्पतिम् ॥
पूर्वं वृन्दावनं रम्यं स्मरेत् पूर्वं विराजितम्।
नवीनपल्लवोद्रेकफलसम्पत्तिसंयुतम् ॥
मधुपैः कृतझङ्कारैः कीराद्यैश्च निनादितम्।
आदित्यतनयापार्श्वलहरीकणशीतलम् ॥
तस्मिन् वने कल्पतरुं नवपल्लवशोभितम्।
स्वर्णशाखाग्रसंयुक्तं नवरत्नफलान्वितम् ॥
दिव्यामृतौघवर्षेण स्रवन्तं विश्वमुच्छ्रितम्।
ज्वलद्रत्नसमाबद्धां पुष्परेणुविभूषिताम् ॥
षडूर्मिरहितां मन्त्री तस्याधस्ताद्भुवं स्मरेत्।
माणिक्यकुट्टिमं तत्र योगपीठं विचिन्तयेत् ॥
पद्ममष्टदलं तत्र यथोक्तं रक्तवर्णकम्।
तस्य मध्ये सुखासीनं कृष्णं ध्यायेदनन्यधीः ॥
उद्यदादित्यसंकाशं प्रसन्नवदनं विभुम्।
इन्द्रनीलमणिप्रख्यं स्निग्धदीर्घशिरोरुहम् ॥
मायूरेण सुपिच्छेन राजमानोत्तमाङ्गकम्।
भ्रमराक्रान्तकल्पद्रुपुष्पसंशोभिमस्तकम् ॥
कुटिलालकविभ्राजद्भालं कर्णाकृतोत्पलम्।
गोरोचनाक्ततिलकं पूर्णचन्द्रनिभं स्मरेत् ॥
पद्मनेत्रं दीप्तमणिमकराकृतिकुण्डलम्।

कपोलस्थललावण्यविजितस्वच्छदर्पणाम् ॥
अत्यद्भुतोन्नासिकं च पक्वबिम्बफलाधरम् ।
दाडिमीबीजरदनं कम्बुसुन्दरकन्धरम् ॥
आरण्यपल्लवैः पुष्पैः कृतग्रैवेयसंपदम् ।
कौस्तुभप्रभया दीप्तविशालोन्नतवक्षसम् ॥
श्रीवत्सकाङ्कितोरस्कं वृषस्कन्धं च हारिणम् ।
आजानुलम्बिदोर्दण्डं वलित्रययुतोदरम् ॥
क्षुद्रघण्टिकया बद्धकटिं ग्रैवेयराजितम् ।
चक्रशङ्खलसत्पद्मपीतांशुकपटादिभिः ॥
कुलिशप्रमुखैश्चिह्नैरङ्कितस्वच्छपत्तलम् ।
मुखाम्बुजसमासक्तवंशच्छिद्रार्पिताङ्गुलिम् ॥
तदुत्थदिव्यसद्रागश्रवणाहृतमानसम् ।
अपाङ्गैः प्राणिजातं तु मोहयन्तमनारतम् ॥
परमानन्दसन्दोहसंपूर्णीकृतमानसम् ।
मुखपद्मसमासक्तस्वान्तनेत्राभिरावृतम् ॥
गोभिरूध्नभराक्रान्तमन्दयानाभिरेव च ।
कवलीकृतसंत्यक्तघासलेशाभिरप्यलम् ॥
प्रस्तुतस्तनपानेन संभृताननिर्गतैः ।
डिण्डीरपिण्डसंयुक्तैर्दुग्धैर्दृष्टिमनोहरैः ॥
वंशवादनसोद्गीतगीताकर्णनलालसैः ।
उत्तम्भिनीकृतश्रोत्रपुटयुग्मैश्च तर्णकैः ॥
किंविषाणान्तरोद्भूतिजातकण्डूतिमस्तकैः ।
परस्परविमर्दार्थं खुरस्पर्शमहीतलैः ॥

स्निग्धैर्गुरुभिरुत्पुच्छैः सुशोभिगलकम्बलैः ।
वत्सवत्सासमूहैश्च संवृतं तदनन्तरम् ॥
कृतहुंभाष*वज्जालैर्गुरुदीर्घककुद्वरैः ।
उच्चकर्णपुटापीतवेणुशब्दसुधारसैः ॥
सवयस्कैश्च गायद्भिर्नृत्यद्भिस्तुल्यभूषणैः ।
नानावेषधरैर्गोपैः संस्तुवद्भिः समावृतम् ॥
मधुराकृतिभिर्बालैरस्पष्टाद्भुतभाषणैः ।
शार्दूलनखसंक्लृप्तगलाकल्पैस्तथाऽऽवृतम् ॥
ततो गोपपुरन्ध्रीणां स्मरेद्वृन्दं समाहितः ।
तद्भावभावकल्लोलसंजीवितमनोभवम् ॥
वल्लवीवल्लवगवां देववृन्दं बहिः स्मरेत् ।
संमुखे देवदेवस्य काङ्क्षन्तं धनसंचयम् ॥
ऋषिसङ्घं तथा दक्षे वेदाध्ययनतत्परम् ।
धर्मार्थिभिः स्मरेत् पश्चात् सनकप्रमुखाँस्तथा ॥
वामे सस्त्रीकयोगीन्द्रान् यक्षगन्धर्वकिन्नरान् ।
सिद्धिविद्याधराँश्चापि चारणानप्सरोगणान् ॥
अनेकश्रुतिसंपूर्णवीणावादनतत्परम् ।
आकाशे नारदं ध्यायेन्मुनिवर्यं गतस्मयम् ॥

अथ पुरश्चरणम् ।

ततः पूर्वोक्तविधिना दीक्षितः प्रजपेन्मनुम् ।
मन्त्रार्थं चिन्तयेन्मन्त्री नियमस्थो जितेन्द्रियः ॥
चत्वारिंशत् सहस्राणि श्वेतपद्माक्षमालया ।
पश्चान्मन्त्रस्य सिद्ध्यर्थं दशलक्षं जपेत् सुधीः ॥

* शब्दजालैरिति ४ पु० पा०

लक्षं हुनेद्रक्तपद्मैः सितासर्पिर्मधुप्लुतैः ।
शर्कराघृतयुक्तेन हविर्द्रव्येण वा हुनेत् ॥
तर्पयेत् सलिलैः शुद्धैश्चन्द्रचन्दनवासितैः ।
आत्माभिषेकं कृत्वाऽथ भूदेवान् पूजयेत् ततः ॥
नानाविधैर्भक्ष्यभोज्यैस्ताम्बूलैश्च सदक्षिणैः ।
ततो निजगुरुं सम्यक् प्रणिप्रत्य यथाविधि ॥
धनधान्याम्बराद्यैश्च वित्तशाठ्यविवर्जितः ।
तोषयेत् परया भक्त्या निजकार्यस्य सिद्धये ॥
ततः सिद्धमनुर्मन्त्री प्रयोगान् निजवाञ्छितान् ।
कुर्याद्भक्तियुतः सम्यङ्नित्यनैमित्तिके रतः ॥
तत्काले देवकीजातं शङ्खचक्रगदाम्बुजान् ।
दधतं पीतवसनं सुन्दरं गगनप्रभम् ॥
निशायामे चतुर्थ्यां तु ध्यात्वा लक्षं जपेन्मनुम् ।
त्रिमध्वक्तैस्तद्दशांशं किंशुकप्रसवैर्हुनेत् ॥
वीर्यं प्रज्ञां स्मृतिं प्राप्य कवीनामग्रणीर्भवेत् ।

अथ मन्त्रान्तरं ( शारदायाम् )

कृष्णाय पदमाभाष्य गोविन्दाय ततः परम् ।
गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ॥
कामबीजादिराख्यातो मनुरष्टादशाक्षरः ।
नारदोऽस्य मुनिः प्रोक्तो गायत्रं छन्द उच्यते ॥
देवता कथितः कृष्णः सर्वकामफलप्रदः ।
चतुष्करणवेदाब्धिनेत्रसङ्ख्याक्षरक्रमात् ॥
पञ्चाङ्गानि मनोः कुर्यान्मन्त्रविज्जातिसंयुतैः ।

ध्यानम् ।

स्मरेद्वृन्दावने रम्ये मोहयन्तमनारतम् ।

गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः ॥
आत्मनो वदनाम्भोजप्रेषिताक्षिमधुव्रताः ।
पीडिताः कामबाणेन चिरमालिखनोत्सुकाः ॥
मुक्ताहारलसत्पीनतुङ्गस्तनभराननाः ।
स्रस्तधम्मिल्लवसना मन्दस्खलितभाषणाः ॥
दन्तपङ्क्तिप्रभोद्भासिस्यन्दमानाधराञ्चिताः ।
विलोभयन्तीर्विविधैर्विभ्रमैर्भावगर्वितैः ॥
फुल्लेन्दीवरकान्तिमिन्दुवदनं वर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं करवेणुवादनपरं दिव्याङ्गभूषं भजे ॥

अथ पुरश्चरणम् ।

मन्त्रमेनं यथान्यायमयुतद्वितयं जपेत् ।
जुहुयादरुणाम्भोजैर्दशांशं सुसमाहितः ॥

अथ मन्त्रान्तराण्युक्तानि ( मेरुतन्त्रे )

अथातः संप्रवक्ष्यामि क्रमाज्जाता युगत्रये ।
ये मन्त्रा दशवर्णस्य भेदाः सिद्धिविधायकाः ॥
काममायेन्दिरापूर्वो मायाश्रीकामपूर्वकः ।
लक्ष्मीमायास्मराद्यश्च मन्त्रराजो दशाक्षरः ॥
त्रयोदशाक्षरो मन्त्रस्त्रय एते युगत्रये ।
मुन्याद्यन्तविधिस्तेषां पङ्क्त्यामुक्तविधानतः ॥

पङ्क्त्यामिति दशाक्षर इत्यर्थः ।

ध्यानं तृतीयमन्त्रे तु दशार्णवदुदाहृतम् ।
विंशार्णोक्तं द्वितीये तु प्रथमेऽथ निगद्यते ॥

दरारिचापसद्बाणमुद्गराब्जकराम्बुजम् ।
वेणुमादाय हस्ताभ्यां वादयन्तं मुदाऽन्वितम् ॥
रविमण्डलगं कृष्णं ध्यायेदिष्टफलाप्तये ।

अथ पुरश्चरणम् ।

बाणलक्षं जपित्वाऽग्नौ दशांशं हविषा हुनेत् ।
तर्पणादि ततः कृत्वा सिद्धमन्त्रः समाचरेत् ॥

अथ मन्त्रान्तरं तत्रैव ।

अथातः संप्रवक्ष्यामि सप्तविंशतिके कलौ ।
तारो नमो भगवते वासुदेवाय वै वदेत् ॥
द्वादशार्णो मनुः प्रोक्तो नारदोऽस्य मुनिर्मतः ।
गायत्री छन्द इत्युक्तं श्रीकृष्णो देवता मतः ॥
चन्द्रनेत्राब्धिबाणार्णैः संपूर्णाङ्गकल्पना ।

ध्यानमाह ।

कल्पद्रुमतले रम्ये रत्नसिंहासने शुभे ।
सर्वलक्षणसंपूर्णं निविष्टं नन्दनन्दनम् ॥
प्रस्तुतस्तनभारेण गोवृन्देन युतं स्मरेत् ।
मेघश्यामं करे दण्डौ हस्ताभ्यां बिभ्रतं तथा ॥
पद्मायताक्षं शक्रस्य हस्तिकुम्भामृतस्य तु ।
धारया सिच्यमानं तु ध्यातव्यो विष्णुरव्ययः ॥

पुरश्चरणमाह ।

एवं संचिन्त्य देवेशं वर्णलक्षं जपेन्मनुम् ।
तत्सहस्राणि गोक्षीरैर्जुहुयात् तर्पयेत् ततः ॥

अथ मन्त्रान्तरं तन्त्रान्तरे ।

तारं हृद्भगवते रुक्मिणीवल्लभाय ठद्वयम् ।
नारदोऽस्य मुनिः प्रोक्तश्छन्दोऽनुष्टुप् प्रकीर्त्तितम् ॥

रुक्मिणीवल्लभो देवः पञ्चाङ्गं मान्त्रिकैः पदैः ।

ध्यानम् ।

तापिञ्छच्छविरङ्कगां प्रियतमां स्वर्णप्रभामम्बुज-
प्रोद्यद्वामभुजां स्वबाहुलतया ऽऽश्लिष्यत्सचित्तास्मयाम्।
श्लिष्यन्तीं स्वयमन्यहस्तविलसत्सौवर्णवेत्रश्चिरं
पायाद्वोऽशनसूनपीतवसनो नानाविभूषो हरिः ॥

अथ पुरश्चरणम् ।

ध्यात्वैवं रुक्मिणीनाथं जपेल्लक्षममुं मनुम् ।
अयुतं जुहुयात् पद्मैररुणैर्मधुराप्लुतैः ॥

अथ मन्त्रान्तरं ( मेरौ )

अथातो नगवेदाख्ये क्लीँ कृष्णायाग्निगेहिनी ।
षडक्षरो मन्त्रराजो जपध्यानादि पूर्ववत् ॥

दशार्णवदित्यर्थः । एवं भूयांसो मन्त्रभेदा विस्तरभयादुपेक्षिताः ।

अथ बुद्धमन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि बौद्धमन्त्रं महाफलम् ।
सत्यत्वान्न द्विजादीनामधिकारो हि कर्हि चित् ॥
वाममार्गरता विप्राः कुण्डका जातिविच्युताः ।
हीना वैदिकसंस्कारैः प्रमादात् स्वेच्छतां गताः ॥
गोलकाश्च तथा जात्या कायस्थादय एव च ।
बौद्धं विष्णुं समाराध्य भुक्तिं मुक्तिं प्रयान्ति ते ॥
नमो भगवते बुद्ध संसारार्णवतारक ।
कलिकालादहं भीतः शरण्यं शरणं गतः ॥
आद्यैः पदैश्चतुर्भिश्च चरणद्वितयेन च ।
षडङ्गविधिराख्यातः पूर्णेन व्यापकं त्रिशः ॥

अथ ध्यानम् ।

पद्मे पद्मासनस्थं तमूर्वोर्न्यस्तकरद्वयम् ।

गौरं मुण्डितसर्वाङ्गं ध्यानास्तिमितलोचनम् ॥
पुस्तकासनहस्तैश्च नानाशिष्यैश्च शोभितम् ।
इन्द्रादिलोकपालैश्च नुतं श्वेताम्बरावृतम् ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं होमयेच्च घृतोदनम् ।
तुलसीमिश्रितोयैश्च भगवन्तं प्रतर्पयेत् ॥

अथ कल्किमन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि कल्किमन्त्रं महाफलम् ।
ॐ कल्किने हृदन्तोऽयं प्रोक्तो मन्त्रः षडक्षरः ॥
मन्त्रार्णैश्च षडङ्गानि पूर्णेन व्यापकं चरेत् ।

अथ ध्यानम् ।

ध्यायेन्नीलसमारूढं श्वेतोष्णीषविराजितम् ।
महाप्रतोदहस्तं च कौस्तुभोद्दामकञ्चुकम् ॥
मर्दयन्तं म्लेच्छगणं क्रोधघूर्णितलोचनम् ।
अन्तर्हितैर्देवमुनिगन्धर्वैः संस्तुतं हरिम् ॥

अथ पुरश्चरणम् ।

षड्लक्षं तु जपेन्मन्त्रं ससितैः पायसैर्हुनेत् ।
तर्पयेत् सलिलैः शुद्धैः प्रीणयेद्भूसुरानपि ॥
एवमाराधितो मन्त्रः संग्रामे विजयप्रदः ।
एतत्साधनमालोक्य दूरतो दुःक्षितीश्वराः ॥
प्रणमन्ति तथा स्वेच्छाच्छत्रवो यान्ति संशयम् ।
दिने दिने वर्द्धते श्रीर्मृतो वैकुण्ठमाप्नुयात् ॥

अथ हयग्रीवमन्त्रो ( मेरुतन्त्रे )

अथोच्यते हयग्रीवमन्त्रः सर्वसमृद्धिदः ।
हसावुकारसंयुक्तौ विन्दुना परिशोभितौ ॥

विप्रसेव्यो बीजमन्त्रो हयग्रीवस्य चादिमः ।
हसावौकारसंयुक्तौ सविन्दू क्षत्रियस्य तु ॥
हसावेकारसंयुक्तौ सविन्दुर्वैश्यजन्मनः ।
त्रिष्टुप् छन्दो मुनिर्ब्रह्मा हयग्रीवोऽस्य देवता ॥
षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ।

अथ ध्यानम् ।

कमलं जपमालां च भयं पुस्तकमेव च ।
श्वेतपद्मस्थितं गौरं श्वेतवस्त्रानुलेपनम् ॥
भक्तप्रियं हयग्रीवं वन्देऽहं दानवान्तकम् ।

अथ पुरश्चरणम् ।

वेदलक्षं जपेदन्ते दशांशं जुहुयाद्घृतैः ।
सुगन्धाद्यैस्तर्पणं स्यान्मार्जनाद्विप्रभोजनात् ॥
सिद्धो मन्त्रः प्रयोगार्हो जायते भुक्तिमुक्तिदः ।

अथ मन्त्रान्तरं ( शारदायाम् )

उद्गिरत्पदमाभाष्य प्रणवोद्गीथशब्दतः ।
सर्ववागीश्वरेत्यन्तं प्रवदेदीश्वरेत्यथ ॥
सर्ववेदमयाचिन्त्यपदान्ते सर्वमुच्चरेत् ।
बोधय द्वितयान्तोऽयं मन्त्रस्तारादिरीरितः ।
ऋषिर्ब्रह्माऽस्य संदिष्टश्छन्दोऽनुष्टुबुदाहृतम् ॥
देवता स्याद्धयग्रीवो वागैश्वर्यप्रदो विभुः ।
तारेण पादैर्मन्त्रस्य पञ्चाङ्गानि प्रकल्पयेत् ॥

अथ ध्यानम् ।

शरच्छशाङ्कप्रभमश्ववक्त्रं
मुक्तामयैराभरणैरुपेतम् ।
रथाङ्गशङ्खार्चितबाहुयुग्मं
जानुद्वयन्यस्तकरं भजामः ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं कुन्दपुष्पैर्मधुप्लुतैः ।
दशांशं वैष्णवे वह्नौ जुहुयान्मन्त्रसिद्धये ॥

अथ मन्त्रान्तरं ( मेरुतन्त्रे )

अथ मन्त्रान्तरं वक्ष्ये तीक्ष्णबुद्धिकरं वरम् ।
विश्वोत्तीर्णस्वात्मरूप चिन्मयानन्दरूपिणे ॥
तुभ्यं नमो हयग्रीव विद्याराजाय विष्णवे ।
स्वाहा सोऽहं च हंसादिरष्टत्रिंशाक्षरो मनुः ॥
तारमन्त्रपदैश्चात्र पञ्चाङ्गविधिरीरितः ।

ध्यानं पूर्ववत् ।

अथ पुरश्चरणम् ।

पुरश्चर्या तु षट्त्रिंशल्लक्षो ऽन्यत् पूर्ववन्मतम् ।

अथ चक्रमन्त्रः ( शारदायाम् )

तारो भृगुर्वियद्भूयस्तदाद्यं वह्निदीर्घयुक् ।
पावकः कवचास्त्रान्तो मनुः सप्ताक्षरः स्मृतः ॥
अहिर्बुध्न्यो मुनिः प्रोक्तश्छन्दो ऽनुष्टुबुदाहृतम् ।
देवता मुनिभिः प्रोक्ता चक्ररूपी हरिः स्वयम् ॥
आचक्राय हृदाख्यातं विचक्राय शिरः स्मृतम् ।
सुचक्राय शिखा प्रोक्ता धीचक्राय तनुच्छदम् ॥
संचक्राय स्मृतं नेत्रं ज्वालाचक्राय तत्परम् ।
षडङ्गमन्त्राः प्रत्येकं द्विठान्ता यान्ति संयुताः ॥

अथ ध्यानम् ।

कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं
रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम् ।
चक्रं शङ्खं गदाब्जे पृथुतरमुशलं चापपाशाङ्कुशान् वै
बिभ्राणं दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम् ॥

अथ पुरश्चरणम्।

अर्कलक्षं जपेन्मन्त्रं जुहुयात् तत्सहस्रकम्।
तिलैः ससर्षपैः पद्मैर्बिल्वैर्दुग्धोदनैः क्रमात्॥

अथानन्तमन्त्रस्तत्रैव।

अथान्यं संप्रवक्ष्यामि विष्णोः प्रीतिकरं मनुम्।
अनन्ताय नमश्चेति षडर्णोऽयमुदाहृतः॥
व्यासो मुनिश्च गायत्री छन्दोऽनन्तश्च देवता।
नियोगो रोगनाशार्थमन्यद्गोविन्दवद्भवेत्॥

अथ गोपालसुन्दरीमन्त्रस्तत्रैव।

अथ मार्गद्वयोपास्यां वक्ष्ये गोपालसुन्दरीम्।
मायाश्रीकामबीजानि कृष्णायेति ततो वदेत्॥
एकोनत्रिंशकं वर्णं रुद्रदेवस्वरौ तथा।
पञ्चमं च त्रपाबीजमेभिः सप्तमकूटम्॥
गोविन्दाय पदं पश्चाच्चित्रैश्वर्याद्यकूटकम्।
गोपीजनवल्लभाय ततश्च सकलत्रपाम्॥
कूटरूपां समुच्चार्य वदेद्वह्निश्च गेहिनी।
त्रयोविंशाक्षरो मन्त्रो भुक्तिमुक्तिफलप्रदः॥
मुनिर्विधाता दक्षे स्याद्वामे त्वानन्दभैरवः।
छन्दस्तु देवी गायत्री देवो गोपालसुन्दरी॥
त्रित्रिवेदाब्धिवेदाब्धिवर्णैः कूटविहीनितैः।
षडङ्गविधिरुद्दिष्टो मन्त्रवर्णान् न्यसेत् तनौ॥

न्यासान्तराण्युक्त्वा ध्यानमाह।

कमलावसुधायुक्तं ध्यायेच्छ्रीचक्रगं हरिम्।
क्षीराम्भोधौ सितद्वीपे वने कल्पद्रुमादिभिः॥
व्याप्ते तस्मिन् स्वर्णमयं चिन्तयेद्रत्नमण्डपम्।

तत्र श्रीपीठमध्ये तु स्थितं विधिमुखैः स्तुतम् ॥
पद्ममष्टदलं शङ्खं वर्णान् वंशींश्च दक्षिणैः ।
भुजैर्दधन्तं वामैस्तु चापं पाशं तथाऽङ्कुशम् ॥
त्रिपञ्चीं चारक्तवर्णं नानाभरणभूषितम् ।
पीताम्बरधरं गोपीसमूहैः परितो वृतम् ॥

अथ पुरश्चरणम् ।

लक्षमेकं जपेन्मन्त्रं जुहुयात् पायसाऽन्धसा ।
तर्पणादि ततः कुर्यान्मन्त्रसिद्धिः प्रजायते ॥

अथ श्रीधरमन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि श्रीधरस्य मनुं परम् ।
रमारुद्धं कामबीजं श्रीधराय ततो वदेत् ॥
त्रैलोक्यमोहनायेति नमोऽन्तः षोडशाक्षरः ।
ऋषिर्ब्रह्मा भवेच्छन्दो गायत्रं श्रीधरः सुरः ॥
श्रीबीजेन षडङ्गानि कुर्यात् षड्दीर्घसंयुजा ।

अथ ध्यानम् ।

उद्घाट्ये च सिते द्वीपे सर्वर्त्तुफलितद्रुमे ।
तत्र कल्पद्रुमाधस्तात् पक्षीन्द्ररचितासने ॥
शङ्खचक्रगदापद्मपाणिं चामीकरद्युतिम् ।
किरीटिनं कुण्डलिनं श्रीवत्साङ्कितवक्षसम् ॥
हृदि लक्ष्मीधरं ध्यायेच्छ्रीधरं पुरुषार्थदम् ।

अथ पुरश्चरणम् ।

लक्षमेकं जपेन्मत्रं तद्दशांशं घृतैर्हुनेत् ॥
तर्पणादि ततः कुर्यात् पूर्ववत् साधकोत्तमः ।

इति विष्णुप्रकरणम् ।

अथ शैवमन्त्राः।

(शारदायाम्)

अथ वक्ष्ये महेशस्य मन्त्रान् सर्वार्थसिद्धिदान्।
यैः पूर्वमृषयः प्राप्ताः शिवसायुज्यमञ्जसा ॥
हृदयं त्वपरं साक्षि लान्तोऽनन्तान्वितो मरुत्।
पञ्चाक्षरो मनुः प्रोक्तस्ताराद्योऽयं षडक्षरः ॥

एतन्मन्त्रार्थ उक्तो (वामदेवसंहितायाम्)

ॐकारः परिपूर्णस्य ब्रह्मणो वाचकः स्मृतः।
नमःशब्दो नमस्कारवाचकः परिकीर्त्तितः ॥
प्रह्वत्वलक्षणः प्रोक्तो नमस्कारः पुरातनैः।
प्रह्वता नाम जीवस्य शिवात् सत्यादिलक्षणात् ॥
भेदेन भासमानस्य मायया सर्वरूपतः।
सम्बन्धं नम इत्याह शिवतादात्म्यलक्षणम् ॥
सत्यज्ञानपरानन्दस्वरूपा चित् कलाऽपरा।
अतिव्यक्ततया ज्ञेया शिवशब्देन शाम्भवि ॥
वाचकोऽयं ततः शब्दो ब्रह्मणश्चित्कलात्मनः।

ऋष्यादिन्यासमाह।

वामदेवो मुनिश्छन्दः पङ्क्तिरीशोऽस्य देवता।
षड्भिर्वर्णैः षडङ्गानि कुर्यान्मन्त्रस्य देशिकः ॥

अथ ध्यानम्।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

अथ पुरश्चरणम् ।

तत्त्वलक्षं जपेन्मन्त्रं दीक्षितः शैववर्त्मना ।
तावत्सङ्ख्यासहस्राणि जुहुयात् पायसैः शुभैः ॥
ततः सिद्धो भवेन्मन्त्रः साधकाभीष्टसिद्धिदः ।

अथ मन्त्रान्तरं तत्रैव ।

षडक्षरः शक्तिरुद्धः कथितोऽष्टाक्षरो मनुः ।
ऋषिश्छन्दः पुरा प्रोक्तो देवता स्यादुमापतिः ॥
अङ्गानि पूर्वमुक्तानि सोममीशं विचिन्तयेत् ।

अथ ध्यानम् ।

बन्धूकाभं त्रिनेत्रं शशिशकलधरं स्मेरवक्त्रं वहन्तं
हस्तैः शूलं कपालं वरदमभयदं चारुहारं भजामि ।
वामोरुस्तम्भगायाः करतलविलसच्चारुरक्तोत्पलाया
हस्तेनाश्लिष्टदेहं मणिमयविलसद्भूषणायाः प्रियायाः ॥

अथ पुरश्चरणम् ।

मनुलक्षं जपेन्मन्त्रं तत्सहस्रं यथाविधि ।
जुहुयान्मधुरासिक्तैरारग्वधसमिद्वरैः ॥

मन्त्रान्तरमाह ।

सान्तः सद्यान्तसंयुक्तो विन्दुभूषितमस्तकः ।
प्रासादाख्यो मनुः प्रोक्तो भजतां सर्वसिद्धिदः ॥
षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ।
वामदेवो मुनिश्छन्दः पङ्क्तिर्देवः सदाशिवः ॥
ईशानादीन्न्यसेन्मूर्त्तीरङ्गुष्ठादिषु देशिकः ।
ईशानाख्यं तत्पुरुषमघोरं तदनन्तरम् ॥
वामदेवाह्वयं सद्यमाद्यं वीजं क्रमाद्विदुः ।

अथ ध्यानम् ।

ततः समाहितो भूत्वा ध्यायेद्देवं सदाशिवम् ।

मुक्तापीतपयोदमौक्तिकजपावर्णैर्मुखैः पञ्चभि-
स्त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम् ।
शूलं टङ्ककृपाणवज्रदहनान् नागेन्द्रघण्टाङ्कुशान्
पाशं भीतिहरं दधानममिताकल्पोज्ज्वलं चिन्तयेत् ॥

अथ पुरश्चरणम् ।

एवं ध्यात्वा जपेन्मन्त्रं पञ्चलक्षं मधुप्लुतैः ।
प्रसूनैः करवीरोत्थैर्जुहुयात् तद्दशांशकम् ॥

मन्त्रान्तरमाह ।

तारो माया वियद्बिन्दुमनुस्वरसमन्वितम् ।
पञ्चाक्षरसमायुक्तो वसुवर्णो मनुर्मतः ॥
पञ्चाक्षरोक्तवत् कुर्यादङ्गन्यासादिकं बुधः ।

ध्यानम् ।

वन्दे सिन्दूरवर्णं मणिमुकुटलसच्चारुचन्द्रावतंसं
भालोद्यन्नेत्रमीशं स्मितमुखकमलं दिव्यभूषाङ्गरागम् ।
वामोरुन्यस्तपाणेस्तरुणकुवलयं संदधत्या प्रियाया
वृत्तोत्तुङ्गस्तनाग्रे निहितकरतलं वेदटङ्केष्टहस्तम् ॥

अथ पुरश्चरणम् ।

अष्टलक्षं जपेदेवं मनुं वेदविदां वरः ।
तत्सहस्रं प्रजुहुयात् पायसान्नैर्घृतप्लुतैः ॥

अथ मृत्युञ्जयमन्त्रस्तत्रैव ।

तारं स्थिरा सकर्णेन्दुर्भृगुः सर्गविभूषितः ।
अक्षरात्मा निगदितो मनुर्मृत्युञ्जयात्मकः ॥
ऋषिः कहोलो देव्यादिर्गायत्री छन्द ईरितम् ।

मृत्युञ्जयो महादेवो देवताऽस्य समीरितः ॥
भृगुणा दीर्घयुक्तेन षडङ्गानि समाचरेत् ।

अथ ध्यानम् ।

चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वमनोहरं पशुपतिं मृत्युञ्जयं भावयेत् ॥

अथ पुरश्चरणम् ।

गुणलक्षं जपेन्मन्त्रं तद्दशांशं विशालधीः ।
जुहुयादमृताखण्डैः शुद्धदुग्धाज्यलालितैः ॥

अथ दक्षिणामूर्त्तिमन्त्रस्तत्रैव ।

अथ वक्ष्ये मन्त्ररत्नं समस्तपुरुषार्थदम् ।
अवापुर्येन जप्तेन दिव्यं ज्ञानं मुनीश्वराः ॥
दक्षिणामूर्त्तये पूर्वं तुभ्यं पदमनन्तरम् ।
वटमूलपदस्यान्ते पदं पश्चान्निवासिने ॥
ध्यानैकनिरताङ्गाय पश्चाद्ब्रूयान्नमःपदम् ।
रुद्राय शम्भवे तारशक्तिरुद्धोऽयमीरितः ॥
षट्त्रिंशदक्षरो मन्त्रः सर्वकामफलप्रदः ।
मुनिः शुकः समुद्दिष्टश्छन्दोऽनुष्टुप् समीरितम् ॥
दक्षिणामूर्त्तिनामाऽस्य देवता शम्भुरीरितः ।
षड्भिर्वर्णैर्हृदाख्यातं द्वाभ्यां शिर उदीरितम् ॥
शिखाऽष्टभिः समादिष्टा वस्ववर्णैः कवचं मतम् ।
षड्भिर्नेत्रमाख्यातं त्रिभिरस्त्रमुदाहृतम् ॥

षडेते तारशक्त्याद्यास्ताराद्यन्ताः सजातयः ।
अङ्गमन्त्राः समुद्दिष्टा यथावद्देशिकोत्तमैः ॥

अथ ध्यानम् ।

हेमाचलतटे रम्ये सिद्धकिन्नरसेविते ।
विविधद्रुमशाखाभिः सर्वतो वारितातपे ॥
सुपुष्पितैर्लताजालैराश्लिष्टकुसुमद्रुमे ।
शिलाविवरनिर्गच्छन्निर्भरानिलशीतले ॥
गायद्भृङ्गाङ्गनासङ्घे नृत्यद्बर्हिकदम्बके ।
कूजत्कोकिलसङ्घेन मुखरीकृतदिङ्मुखे ॥
परस्परविनिर्मुक्तमात्सर्यमृगसेविते ।
आद्यैः शुकाद्यैर्मुनिभिरजस्रं समुपस्थिते ॥
पुरन्दरमुखैर्देवैः सेवायातैर्विलोकितम् ।
वटवृक्षं महोच्छ्रायं पद्मरागफलोज्ज्वलम् ॥
गारुत्मतमयैः पत्रैर्निविडैरुपशोभितम् ।
नवरत्नमयाकल्पैर्लम्बमानैरलङ्कृतम् ॥
जलजैः स्थलजैः पुष्पैरामोदिभिरलङ्कृतम् ।
शृणवद्भिर्वेदशास्त्राणि शुकवृन्दैर्निषेवितम् ॥
संसारतापविच्छेदकुशलस्थलमद्भुतम् ।
विचिन्त्य तस्य मूलस्थे रत्नसिंहासने शुभे ॥
आसीनममिताकल्पं शरच्चन्द्रनिभाननम् ।
स्तूयमानं मुनिगणैर्दिव्यज्ञानाभिलाषिभिः ॥
संस्मरेज्जगतामाद्यं दक्षिणामूर्त्तिमव्ययम् ।
कैलाशाद्रिनिभं शशाङ्कशकलस्फूर्जज्जटामण्डितं

नासालोकनतत्परं त्रिनयनं वीरासनाध्यासिनम् ।
मुद्राटङ्ककुरङ्गजानुविलसत्पाणिप्रसन्नाननं
कक्षाबद्धभुजङ्गमं मुनिवृतं वन्दे महेशं परम् ॥

अथ पुरश्चरणम् ।

अयुतद्वयसंयुक्तं गुणलक्षं जपेन्मनुम् ।
तद्दशांशं तिलैः शुद्धैर्जुहुयात् क्षीरसंयुतैः ॥

अथ मन्त्रान्तरं तत्रैव ।

प्रणवो हृदयं पश्चात् ततो भगवते पदम् ।
ङेयुतं दक्षिणामूर्त्तिं मह्यं मेधामुदीरयेत् ॥
प्रयच्छ ठद्वयान्तोऽयं द्वाविंशत्यक्षरो मनुः ।
मुनिश्चतुर्मुखश्छन्दो गायत्री देवता मनोः ॥
दक्षिणामूर्त्तिराख्यातो वेदव्याख्यानतत्परः ।
ताररुद्धैः स्वरैर्दीर्घैः षड्भिरङ्गानि कल्पयेत् ॥
अथ वा मनुसम्भूतैः पदैर्वा कल्पयेत् क्रमात् ।
पूर्वोक्तवटमूलस्थं चिन्तयेन्मन्त्रनायकम् ॥

अथ ध्यानम् ।

स्फटिकरजतवर्णं मौक्तिकीमक्षमाला-
ममृतकलशविद्याज्ञानमुद्राकराग्रैः ।
दधतमुरगकक्षं चन्द्रचूडं त्रिनेत्रं
विधृतविविधभूषं दक्षिणामूर्त्तिमीडे ॥

अथ पुरश्चरणम् ।

लक्षमेकं जपेन्मन्त्रं ब्रह्मचारिव्रते स्थितः ।
जुहुयात् सघृतैः पद्मैर्दशांशं संस्कृतेऽनले ॥

अथ नीलकण्ठमन्त्रस्तत्रैव ।

लोहितोऽग्न्यासनः सद्यविन्दुमान् प्रथमं ततः ।
द्वितीयं वह्निबीजस्था दीर्घा शान्तीन्दुभूषिता ॥
तृतीयं लाङ्गली सर्गी मन्त्रो बीजत्रयान्वितः ।
नीलकठात्मकः प्रोक्तो विषद्वयहरः परः ॥
हरद्वयं वह्निजाया हृदयं परिकीर्त्तितम् ।
कपर्दिने ठयुगलं शिरोमन्त्र उदाहृतः ॥
नीलकण्ठाय ठद्वयं शिखामन्त्र उदाहृतः ।
कालकूटपदस्यान्ते विषभक्षणं ङेयुतम् ॥
हुँ फट् कवचमादिष्टं विद्वद्भिर्नीलकण्ठिने ।
स्वाहान्तमस्त्रमेतानि पञ्चाङ्गानि मनोर्विदुः ॥

अथ ध्यानम् ।

बालार्कायुततेजसं धृतजटाजूटेन्दुखण्डोज्ज्वलं
नागेन्द्रैः कृतभूषणं जपवटीं शूलं कपालं करैः ।
खट्वाङ्गं दधतं त्रिनेत्रविलसत्पञ्चाननं सुन्दरं
व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ॥

अथ पुरश्चरणम् ।

लक्षत्रयं जपेन्मन्त्रं तद्दशांशं ससर्पिषा ।
हविषा जुहुयात् सम्यक् संस्कृते हव्यवाहने ॥

अथार्धनारीश्वरमन्त्रस्तत्रैव ।

अग्निः संवर्त्तकादित्यरानिलाः षष्ठविन्दुमत् ।
चिन्तामणिरिति ख्यातं बीजं सर्वसमृद्धिदम् ॥
कश्यपो मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ।
अर्धनारीश्वरः प्रोक्तो देवता जगतां पतिः ॥
रेफादिर्व्यञ्जनः षड्भिः कुर्यादङ्गानि षट् क्रमात् ।

अथ ध्यानम् ।

नीलप्रभातरुचिरं विलसत्त्रिनेत्रं
पाशारुणोत्पलकपालत्रिशूलहस्तम् ।
अर्धाम्बिकेशमनिशं प्रविभक्तभूषं
बालेन्दुबद्धमुकुटं प्रणमामि रूपम् ॥

अथ पुरश्चरणम् ।

एकलक्षं जपेद्बीजमित्थं मन्त्री विचिन्तयेत् ।
अयुतं मधुना सिक्तैर्जुहुयात् तिलतण्डुलैः ॥

अथ शरभमन्त्रो (मेरुतन्त्रे)

ॐ खँ खाँ खँ फडुच्चार्य द्विः प्राणान् ग्रसतीति च ।
हुँ फट् सर्वशस्त्रसंहरणाय शरभेति च ॥
शाल्वाय पक्षिराजाय हुँ फट् स्वाहान्तको मनुः ।
एकचत्वारिंशदर्णो वासुदेवो मुनिः स्मृतः ॥
कालाग्निरुद्रः शरभो देवता परिकीर्त्तितः ।
छन्दस्तु जगती स्वाहा शक्तिर्बीजं खमुच्यते ॥
वेदषट्सप्तनवषण्णवार्णैरङ्गकल्पनम् ।

अथ ध्यानम् ।

चन्द्रार्काग्नित्रिनयनं कालीदुर्गाद्विपक्षकम् ।
विद्युज्जिह्वं वज्रनखं वडवाग्न्युदरं तथा ॥
व्याधिमृत्युरिपुघ्नं च चण्डवातातिवेगिनम् ।
हृद्भैरवस्वरूपं च वैरिवृन्दनिषूदनम् ॥
मृगस्त्वर्धशरीरेण पक्षाभ्यां चञ्चुना द्विजः ।
अधोवक्त्रश्चतुष्पादस्तूर्ध्ववक्त्रश्चतुर्भुजः ॥
कालान्तदहनप्रख्यो नीलजीमूतनिःस्वनः ।

अरिर्यद्दर्शनादेव विनष्टबलविक्रमः ॥
सटाच्छटोग्ररूपाय पक्षविक्षिप्तभूभृते ।
अष्टपादाय रुद्राय नमः शरभमूर्त्तये ॥

पुरश्चरणमाह ।

एवं ध्यायन् सहस्रं तु प्रजपेत् पायसं हुनेत् ।
प्रत्यहं मासषट्केण मन्त्रसिद्धिः प्रजायते ॥

अथ क्षेत्रपालमन्त्रः ( शारदायाम् )

वर्णान्त्यमौविन्दुयुक्तं क्षेत्रपालाय हृन्मनुः ।
ताराद्यो वसुवर्णोऽयं क्षेत्रपालस्य कीर्त्तितः ॥
षड्दीर्घभाजा बीजेन षडङ्गान्यस्य योजयेत् ।

अथ ध्यानम् ।

नीलाञ्जनाद्रिनिभमूर्ध्वपिशङ्गकेशं
वृत्तोग्रलोचनमुपात्तगदाकपालम् ।
आशाम्बरं भुजगभूषणमुग्रदंष्ट्रं
क्षेत्रेशमद्भुततनुं प्रणमामि देवम् ॥

अथ पुरश्चरणम् ।

लक्षमेकं जपेन्मन्त्रं जुहुयात् तद्दशांशतः ।
चरुणा घृतसिक्तेन ततः क्षेत्रेशमर्चयेत् ॥

अथापदुद्धारवटुकमन्त्रस्तत्रैव ।

उद्धरेद्वटुकं ङेऽन्तमापदुद्धारणं तथा ।
कुरुद्वयं पुनर्ङेऽन्तं वटुकं तं समुद्धरेत् ॥
एकविंशत्यक्षरात्मा शक्तिरुद्धो महामनुः ।
अभीष्टफलसंसिद्ध्यै कीर्त्तितः सुरपादपः ॥
बृहदारण्यक ऋषिश्छन्दोऽनुष्टुबुदाहृतम् ।
आपदुद्धारणो देवो भैरवो देवता बुधैः ॥

अङ्गुलीदेहवक्त्रेषु मूर्त्तीर्न्यस्येद्यथा पुरा ।
सद्यादिपञ्चह्रस्वाढ्यं शक्तिबीजपुरःसरम् ॥
वकारं पञ्चह्रस्वाढ्यमीशानादिषु योजयेत् ।
षड्दीर्घयुक्तया शक्त्या वकारेण च तद्वता ॥
अङ्गानि जातियुक्तानि प्रणवाद्यादि कल्पयेत् ।

अथ ध्यानम् ।

तस्य ध्यानं त्रिधा प्रोक्तं सात्त्विकादिविभेदतः ।
वन्दे बालं स्फटिकसदृशं कुण्डलोल्लासि वक्त्रं
दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराढ्यैः ।
दीप्ताकारं विसदवसनं सुप्रसन्नं त्रिनेत्रं
हस्ताब्जाभ्यां वटुकमनिशं शूलदण्डौ दधानम् ॥
उद्यद्भास्करसन्निभं त्रिनयनं रक्ताङ्गरागस्रजं
स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ।
नीलग्रीवमुदारभूषणधरं शीतांशुचूडोज्ज्वलं
बन्धूकारुणवाससं भयहरं देवं सदा भावयेत् ॥
ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं
दिग्वस्त्रं पिङ्गकेशं डमरुमथ सृणिं खड्गपाशाभयानि ।
नागं घण्टां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं
सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणीनूपुराढ्यम् ॥
सात्त्विकं ध्यानमाख्यातमपमृत्युनिवारणम् ।
आयुरारोग्यजननमपवर्गफलप्रदम् ॥
राजसं ध्यानमाख्यातं धर्मकामार्थसिद्धिदम् ।
तामसं शत्रुशमनं कृत्याभूतग्रहापहम् ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ।
तद्दशांशं प्रजुहुयात् तिलैर्मधुरसंयुतैः ॥

अथ पाशुपतास्त्रमन्त्रः ( शारदायाम् )

तारो वान्तो धरासंस्थो वामनेत्रेन्दुभूषितः ।
पार्श्वो वकः कर्णयुतो वर्मास्त्रान्तः षडक्षरः ॥
मनुः पाशुपतास्त्राख्यो ग्रहक्षुद्रनिवारणः ।
षड्भिर्वर्णैः षडङ्गानि हुँ फडन्तैः सजातिभिः ॥

अथ ध्यानम् ।

मध्याह्नार्कसमप्रभं शशिधरं भीमाट्टहासोज्ज्वलं
त्र्यक्षं पन्नगभूषणं शिखिशिखाश्मश्रुस्फुरन्मूर्धजम् ।
हस्ताब्जैस्त्रिशिखं समुद्गरमसिं शक्तिं दधानं विभुं
दंष्ट्राभीमचतुर्मुखं पशुपतिं दिव्यास्त्ररूपं स्मरेत् ॥

पुरश्चरणम् ।

वर्णलक्षं जपेन्मन्त्रं जुहुयात् तद्दशांशतः ।
गव्येन सर्पिषा मन्त्री संस्कृते हव्यवाहने ॥

अथ हरिहरमन्त्रस्तन्त्रान्तरे ।

मायां पूर्वं समुद्धृत्य प्रासादं तत उद्धरेत् ।
ततः शङ्करनारायणाय हृत्प्रणवादिकः ॥
त्रयोदशाक्षरो मन्त्रश्चतुर्वर्गफलप्रदः ॥
नारदोऽस्य ऋषिः प्रोक्तश्छन्दोऽनुष्टुप् प्रकीर्त्तितम् ।
त्रैलोक्यवन्द्यपादाब्जो देवता हरिशङ्करः ॥
षडङ्गानि प्रकुर्वीत दीर्घषट्काढ्यमायया ।

अथ ध्यानम् ।

शूलं चक्रं पाञ्चजन्यमभीतिं दधतं करैः ।
स्वस्वभूषाच्छनीलार्धदेहं हरिहरं भजे ॥

अथ पुरश्चरणम् ।

लक्षमेकं जपेन्मन्त्रं तद्दशांशं घृतप्लुतैः ।
पायसैर्हवनं कुर्यात् संस्कृते हव्यवाहने ॥

इति शिवप्रकरणम् ।

अथ गौरीमन्त्रः ( सिद्धान्तसंग्रहे )

ह्रीँ गौरि रुद्रदयिते योगेश्वरि पदं वदेत् ।
हुँ फट् स्वाहा षोडशार्णो गौरीमन्त्रः प्रकीर्त्तितः ॥
अजो मुनिस्तथाऽनुष्टुप् छन्दो गौर्यस्य देवता ।
मायया तु षडङ्गानि कुर्यात् षड्दीर्घयुक्तया ॥

ध्यानम् ।

हेमाभां बिभ्रतीं दोर्भिर्दर्पणाञ्जनसाधने ।
पाशाङ्कुशौ दिव्यभूषां गौरीं देवीमुपास्महे ॥

अथ पुरश्चरणम् ।

लक्षमेकं जपेन्मन्त्रं दशांशं जुहुयाद्घृतैः ।
तर्पणाद्यं ततः कृत्वा काम्यकर्माणि साधयेत् ॥
अथ मन्त्रान्तरं वक्ष्ये मायाबीजं समुद्धरेत् ।
ङेऽन्तां भवानीमुच्चार्य नमः शेषे प्रकीर्त्तयेत् ॥
न्यासजालं पुरा प्रोक्तं देवीं ध्यायेत् समाहितः ।

ध्यानं यथा ।

बालार्काभां त्रिनयनां खड्गखेटवराभयान् ।
दोर्भिर्दधानां सिंहस्थां भवानीं भावयेत् सदा ॥

अस्य पुरश्चरणं पूर्ववदेकलक्षजपः ।

इति भवानीप्रकरणम् ।

अथ गरुडमन्त्रो ( मेरुतन्त्रे )

वक्ष्येऽथ गारुडं मन्त्रं क्षिपतारोऽग्निगेहिनी ।
पञ्चाक्षरो मनुः पङ्क्तिश्छन्दोऽनन्तो मतो मुनिः ॥

देवता गरुडस्तारो बीजं शक्तिर्दहाङ्गना ।
स्वाहान्तो हृदये न्यस्यो ज्वलज्वल महामते ॥
रुद्रचूडानन स्वाहाऽङ्गस्यान्ते मस्तके न्यसेत् ।
गरुडान्ते शिखे स्वाहा शिखाया मनुरीरितः ॥
वर्ममन्त्रस्तु गरुड प्रभञ्जययुगं वदेत् ।
द्विः प्रभेदय वित्रासय दुष्टपङ्क्तिं विमर्दय ॥
स्वाहा सप्तत्रिंशदर्णो नेत्रमन्त्रोऽथ कथ्यते ।
उग्ररूपधरेत्युक्त्वा सर्वविषहरेति च ॥
भीषय द्वितयं सर्वं दहयुग्मं ततो वदेत् ।
भस्मीकुरु कुरु स्वाहा दन्तवर्णो मतो मनुः ॥
अस्त्रमन्त्रोऽप्रतिहतबलाप्रतिहतेति च ।
शासनान्ते वदेद्धुं फट् स्वाहान्तोऽष्टादशाक्षरः ॥

अथ ध्यानम् ।

चञ्चवग्रप्रचलद्भोगी भोगं मुकुटमण्डितम् ।
पक्षोच्चारितसत्सामगानं विषहरं भजे ॥

अस्य पुरश्चरणं पञ्चलक्षजपः ।

पञ्चलक्षं जपेन्मनुम् ... ... ... इति तत्रैवोक्तत्वात् ।

तथा ।

तिलैर्हुनेत् तर्पणादि कृत्वा सिद्धो मनुर्भवेत् ।
दर्शनादुरगास्तस्य नष्टा नश्येद्विषद्वयम् ॥
विष्णुभक्तिपरो भूयात् स्वयमेवारिनाशनः ।
इह लोके सुखी दीर्घजीवी भूपतिपूजितः ॥
परत्र याति वैकुण्ठम् ... ... ... इत्यादि ।

अथ कार्त्तवीर्यमन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि विंशन्मन्त्राँस्तु दक्षिणे ।

आम्नाये यत्साधकानामक्लेशादष्टसिद्धयः ॥
द्वाविंशत्तुर्यौ ताराद्यौ दक्षे वामे सतुर्यकौ ।
चतुर्दशस्वरोपेतौ शेषाम्नायेषु तद्भवेत् ॥
विन्दुयुक्तं त्वाद्यबीजं चतुर्थस्वरसंयुतम् ।
षट्त्रिंशत्तुर्यौ विन्द्वाढ्यौ द्वितीयं बीजमुच्यते ॥
कामबीजं तृतीयं स्याद्द्वादशार्णं चतुर्थकौ ॥
षष्ठस्वरेन्दुसंयुक्तौ चतुर्थं बीजमुच्यते ।
पाशो लज्जाऽङ्कुशो लक्ष्मीकवचास्त्रमिदं भवेत् ॥
बीजानां दशकं ङेऽन्तः कार्त्तवीर्यार्जुनो नमः ।
एकोनविंशत्यर्णोऽयं दत्तात्रेयो मुनिः स्मृतः ॥
छन्दोऽनुष्टुप् कार्त्तवीर्यार्जुनो देवः प्रकीर्त्तितः ।
फ्राँ ब्रामिति स्याद्धृदयं क्लीँ भ्रीमिति शिरः स्मृतम् ॥
ॐ ह्रूँ शिखा समाख्याता फ्रैँ श्रैँ कवचमीरितम् ।
हुँ फडस्त्रं समाख्यातं शेषेण व्यापकं चरेत् ॥

न्यासान्तराण्युक्त्वा ध्यानमाह ।

प्रभाकररुचिःस्वर्णकण्ठमालाविराजितः ।
ध्येयो रक्तांशुकोष्णीषी नानाकल्पविभूषितः ॥
सहस्रार्धभुजैर्बाणान् सहस्रार्धैर्धनूंषि च ।
दधट्टङ्कारशब्दैश्च त्रासिताखिलदुर्जनः ॥
सम्यग्बाणासनारूढः सप्तद्वीपधरापतिः ।
भूपालमुकुटाघृष्टपादपद्मोज्ज्वललोचनः ॥
स्थूलकायोऽतिभीमश्च रथस्थो भक्तवत्सलः ।

अथ पुरश्चरणम् ।

चतुर्लक्षं जपेन्मन्त्रं होमः कार्यः पयोन्धसा ।
तिलाज्यतण्डुलैर्वाऽपि पुरश्चर्या सरित्तटे ॥
तर्पणादि ततः कुर्यान्मन्त्रसिद्धिः प्रजायते ।

अथ मन्त्रभेदाः ।

अथातः संप्रवक्ष्यामि कार्त्तवीर्यमनोर्भिदः ।
एकानविंशत्यर्णोऽयं तारादिर्नखवर्णकः ॥
*छन्दर्षिन्यासपूजादि सर्वं पूर्ववदीरितम् ।
द्वितीयोऽयं भेद उक्तो भजतामिष्टदायकः ॥
कार्त्तवीर्यार्जुनायेति नमो मूलं नवाक्षरम् ।
फ्रौँ पूर्वको दशार्णोऽयं विराट् छन्द उदीरितम् ॥
सर्वार्थसिद्धये चास्य नियोगोऽन्यत् तु पूर्ववत् ।
न्यासपूजादिकं सर्वं भेदोऽयं तु तृतीयकः ॥
फ्रौँ श्रीँ पूर्वो नवार्णस्तु भवेदेकादशाक्षरः ।
प्राग्वन्मुन्यादिकं सर्वं छन्दस्त्रैष्टुभमुच्यते ॥
नियोगस्तम्भनायास्य चौराणां वसुहारिणाम् ।
प्राग्वत् पूजाप्रयोगादि तुर्यो भेदो निरूपितः ॥
फ्रौँ क्लीँ पूर्वो नवार्णस्तु भवेदेकादशाक्षरः ।
नरनारीनृपाणां च मोहनाय नियोजनम् ॥
मुनिश्छन्दोमुखं प्राग्वत् प्रयोगाँश्चापि साधयेत् ।
एवं तु पञ्चमो भेदो मन्त्रस्य परिकीर्त्तितः ॥
फ्रौँ भ्रूँ पूर्वो नवार्णस्तु षष्ठो भेदश्च पूर्ववत् ।
मुन्यादि भ्रमणोच्चाटद्वेषमारणकर्मकृत् ॥

---

* तान्त्रिकप्रयोगोऽयम् ।

फ्राँ ह्रीमन्ते नवार्णस्तु भेदः सप्तमको भवेत् ।
वश्यं पापक्षयं मोहं शुभं च तनुते सदा ॥
फ्राँ म्राँ नवाक्षरश्चेति ह्यष्टमोऽर्चादि पूर्ववत् ।
आकर्षणाय चौराणां नियोगः परिकीर्त्तितः ॥
फ्राँ क्राँ नवार्णो नवमो भेदः पूजादि पूर्ववत् ।
वक्‍स्तम्भे वा गतिस्तम्भे नियोगः परिकीर्त्तितः ॥
फ्राँ श्राँ नवाक्षरश्चेति दशमो भेद उच्यते ।
त्रिष्टुप् छन्दोऽन्यदखिलमूनविंशतिवद्भवेत् ॥
फ्राँ वाग्बीजं नवार्णश्च भेद एकादशः स्मृतः ।
हुँ फड्नवार्ण इति च द्वादशार्चादि पूर्ववत् ॥
तृतीयभेदस्ताराद्यो मन्त्र एकादशाक्षरः ।
त्रयोदशस्तु भेदोऽयं सर्वं पूर्ववदीरितम् ॥
एवं भेदाश्चतुर्थाद्याः सप्त प्रणवपूर्वकाः ।
द्वादशाद्याः सप्त मन्त्रा जगतीच्छन्दसो मताः ॥
प्राग्वन्मुन्यादिकं सर्वं प्रयोगः पूर्ववन्मतः ।
दक्षिणाम्नायगाश्चैते विंशन्मन्त्राः प्रकीर्त्तिताः ॥

अथोर्ध्वाम्नाये ।

ॐ नमः कार्त्तवीर्यार्जुनाय वर्मास्त्रठद्वयम् ।
चतुर्दशार्णमन्त्रोऽयमष्टमः परिकीर्त्तितः ॥
भूनेत्रसप्तनेत्राक्षिवर्णैरस्याङ्गपञ्चकम् ।
एकोनविंशदर्णस्य मुन्याद्यमखिलं मतम् ॥

अथ मालामन्त्रः ।

तारो नमो भगवते ततः श्रीपदमुच्चरेत् ।
कार्त्तवीर्यार्जुनायेति हैहयेति पदं ततः ॥

नाथाय श्रीकार्त्तवीर्यार्जुनेति च सहस्रशः ।
करसदृशसर्वेति दुष्टान्तकपदात् पठेत् ॥
सर्वशिष्टेष्टदपदं सर्वत उदधेः पदम् ।
आगन्तुकामान् प्रवदेदस्मद्वसुविलुम्पकान् ॥
चौरसमूहान् स्वकरसहस्रैश्च निवारय ।
रुन्धस्व पाशसहस्रैर्बन्धयेति ततोऽङ्कुशः ॥
सहस्रैराकर्षय स्वचापोद्भूतपदात् ततः ।
वदेद्बाणसहस्रैश्च भिन्दि भिन्दीति संवदेत् ॥
स्वहस्तोद्भूतखड्गेति सहस्रैश्छिन्धियुग्मकम् ।
स्वहस्तोद्भूतमुशलसहस्रैर्मर्दयद्वयम् ॥
स्वशङ्खोद्भूतनादेति सहस्रैर्भीषयद्वयम् ।
स्वहस्तोद्भूतचक्रेति सहस्रैर्द्विर्निकृन्तय ॥
परकृत्यां त्रासय द्विस्ततश्चाकर्षयद्वयम् ।
भ्रामय द्विर्मोहय द्विरुद्वासययुगं वदेत् ॥
उन्मादयद्वयं द्वेधा तापय द्विर्विनाशय ।
द्वेधा विदारय स्तम्भयद्वयं *जृम्भय द्वयम् ॥
मारयद्वितयं प्रोच्य वशं कुरु वशं कुरु ।
उच्चाटयोच्चाटयेति विनाशय विनाशय ॥
दत्तात्रेयश्रीपदान्ते पादप्रियतमेति च ।
श्रीकार्त्तवीर्यार्जुनेति सर्वगश्चोदधेर्वदेत् ॥
आगन्तुकामान् प्रवदेदस्मद्वसुविलुम्पकान् ।
चौरसमूहान् सम्यक् च वदेदुन्मूलयद्वयम् ॥

* भञ्जयद्वयमिति २ पु० पा० ।

हुँ फट् स्वाहेति मन्त्रोऽयं बाणाब्ध्यनलवर्णवान् ।
प्रोक्तः पञ्चदशश्छन्दो गायत्र्यन्यच्च पूर्ववत् ॥
दत्तात्रेयप्रियतमं ङेऽन्तं हृदि तु विन्यसेत् ।
माहिष्मतीति नाथाय शिरोमन्त्रो नगाक्षरः ॥
रेवती च जलक्रीडासक्तायेति शिखा मता ।
हैहयाधिपतिर्ङेऽन्तः कवचः परिकीर्त्तितः ॥
सहस्रबाहवेऽस्त्रं स्यादेवं पञ्चाङ्गमीरितम् ।

अथ ध्यानम् ।

उदग्रबाणाँश्चापानि दधतं सूर्यसन्निभम् ।
प्रपूरयन्तं ब्रह्माण्डं धनुर्ज्यानिःस्वनैस्तथा ॥
कार्त्तवीर्यं नृपं ध्यायेद्रुण्डशोभितकुण्डलम् ।
एवं ध्यात्वा समभ्यर्च्य सर्वकर्माणि साधयेत् ॥

अथ पुरश्चरणम् ।

त्रिसहस्रं जपः प्रोक्तः शेषं पूर्ववदाचरेत् ।

अथ प्रयोगः ।

दक्षोत्तरैः प्रतिशतैरेतान्यस्त्राणि संदधत् ।
चक्रेषुखड्गमुशलकुठारान् पाशमेव च ॥
प्रासचर्मधनुःशङ्खान् मध्यभास्करसन्निभम् ।
बलाढ्यमरुणं घोरं तालमातङ्गसंस्थितम् ॥
रक्ताम्बरं रक्तनेत्रं ध्यात्वैवं प्रजपेन्मनुम् ।
निशीथेऽष्टोत्तरशतं नष्टद्रव्याप्तिसिद्धये ॥
जपेन्निश्चयेकपादेन षण्मासानष्टयुक् छतम् ।
संप्रार्थ्य मन्त्रिणं चौराः प्रयच्छन्त्यखिलं धनम् ॥

चौरैर्हृतपशून् मन्त्री यदा नेतुं समिच्छति ।
जपेदष्टोत्तरशतं ध्यायेद्देवं नृपाशितान् ॥
कराठे सम्यक् सर्वपशून् गृहाभिमुखमागतान् ।
ध्यात्वैवं द्वादशाहेन ते चायान्ति विमोचिताः ॥
चौरैर्हृतं च व्रीह्यादि तच्छेषं होमयेन्निशि ।
हृतं प्रकाश्यते भीतैश्चौरैर्झटिति नान्यथा ॥
बाणान् प्रवेशयेद्रात्रौ धनुषा ध्यानतत्परः ।
दशदिक्षु जपेन्मन्त्रं राष्ट्रादे रक्षणं भवेत् ॥
मन्त्रेण परिजप्तानि पार्थिवानि रजांसि च ।
क्षिप्तानि मन्त्रिणा यत्र तत्र रक्षा भवेन्निशि ॥

मन्त्रान्तरमाह ।

क्रोमित्येकाक्षरो मन्त्रः कार्त्तवीर्यस्य षोडशः ।
मुनिपूजादिकं प्राग्वल्लक्षमेकं पुरस्क्रिया ॥
षड्दीर्घयुक्तेनानेन षडङ्गविधिरीरितः ।
प्राग्वत् प्रयोगा इत्येवमूर्ध्वाम्नायः प्रकीर्त्तितः ॥
पश्चिमाम्नायमन्त्रास्तु प्रोक्ताश्चारब्बभाषया ।
अष्टौ शतान्यशीतिश्च येषां संसाधनात् कलौ ॥
पञ्च खानाः सप्त मीराः नव शाहा महाबलाः ।
हिन्दुधर्मप्रलोप्तारो जायन्ते चक्रवर्त्तिनः ॥
पूर्वाम्नाये नवशतं षडशीतिः प्रकीर्त्तिताः ।
फिरङ्गभाषया मन्त्रास्तेषां संसाधनाद्भुवि ॥
अधिपा मन्दराणां च संग्रामेष्वपराजिताः ।
इङ्गूजा नवषट्पञ्च लन्द्रजाश्चापि भाविताः ॥

विद्या बौद्धनिदर्शिन्यां पञ्च प्रोक्तास्तु या मया ।
तद्बीजपूर्वाः सर्वेऽपि मनवो वामसिद्धिदाः ॥
दक्षिणाचारफलदः कार्त्तवीर्यार्जुनो नृपः ।
वामचारेण शूद्राणामिह लोके फलप्रदः ॥
न वामिनां हितार्थं तु कार्त्तवीर्यं प्रयोजयेत् ।
सप्तजन्मसु दारिद्र्यं पैशाच्यं प्राप्नुयाद्द्विजः ॥

इति कार्त्तवीर्यप्रकरणम् ।

अथ हनुमन्मन्त्रस्तत्रैव ।

अथान्यं संप्रवक्ष्यामि मन्त्रमष्टादशाक्षरम् ।
नमो भगवते प्रोच्य आञ्जनेयाय संवदेत् ॥
महाबलाय स्वाहेति मुनिरस्येश्वरः स्मृतः ।
छन्दोऽनुष्टुब्देवता तु हनुमान् हँ च बीजकम् ॥
स्वाहा शक्तिश्चाञ्जनेयो रुद्रमूर्त्तिर्मरुत्सुतः ।
अग्निगर्भो रामदूतो ब्रह्मास्त्रविनिवारकः ॥
एतैर्ङेऽन्तैः षडङ्गानि तथाऽङ्गुष्ठादिषु न्यसेत् ।

अथ ध्यानम् ।

तप्तकाञ्चनसंकाशं हृदये निहिताञ्जलिम् ।
किरीटिनं कुण्डलिनं ध्यायेद्वानरनायकम् ॥

अथ पुरश्चरणम् ।

अयुतं प्रजपेन्मन्त्रं दशांशं जुहुयात् तिलैः ।
विप्रसन्तर्पणाद्यं तु प्राग्वत् सिद्धो भवेन्मनुः ॥

अथ काम्यानि ।

जितेन्द्रियो नक्तभोजी प्रत्येकं साष्टकं शतम् ।
जपित्वा क्षुद्ररोगेभ्यो मुच्यते दिवसत्रयात् ॥
भूतप्रेतपिशाचादिनाशायैवं समाचरेत् ।

महारोगनिवृत्त्यै तु सहस्रं त्रिदिनं जपेत् ।
यताशनोऽयुतं नित्यं जपेद्ध्यायन् कपीश्वरम् ॥
राक्षसौघं विनिघ्नन्तमचिराज्जयति द्विषः ।
सुग्रीवेण समं रामं संदधानं स्मरन् कपिम् ॥
प्रजप्यायुतमात्रं तु सन्धिं कुर्याद्विरुद्धयोः ।
लङ्कादहन्तं तं ध्यायन्नयुतं प्रजपेन्मनुम् ॥
शत्रूणां प्रदहेद्ग्रामानचिरादेव साधकः ।
प्रयाणसमये ध्यायन् हनुमन्तं मनुं जपेत् ॥
यो याति सोऽचिरात् स्वेष्टं साधयित्वा गृहं व्रजेत् ।
यः कपीशं सदा गेहे पूजयेज्जपतत्परः ॥
आयुर्लक्ष्म्यौ प्रवर्त्तेते तस्य नश्यन्त्युपद्रवाः ।
शार्दूलतस्करादिभ्यो रक्षेन्मनुरयं स्मृतः ॥
प्रस्थानकाले चौरेभ्यो दुष्टसर्पादपि ध्रुवम् ।
पुच्छाकारे सुवसने लेखन्या कोकिलोत्थया ॥
अष्टगन्धैर्लिखेद्रूपं कपिराजस्य सुन्दरम् ।
तन्मध्येऽष्टादशार्णं तु शत्रूणामयुतं लिखेत् ॥
तेन मन्त्राभिजप्तेन शिरोबन्धेन भूमिपः ।
जयत्यरिगणं सर्वं दर्शनादेव निश्चितम् ॥
यद्वा जिगीषुर्नृपतिः पूर्वोक्तं लेखयेद्ध्वजे ।
ध्वजमादायोपरागे संस्पर्शान्मोक्षणावधि ॥
मान्त्रिकाज्जापयेत् पश्चाद्दशांशेन हुतं चरेत् ।
सर्षपैस्तिलसंमिश्रैः संस्कृते हव्यवाहने ॥
गजस्थं तं ध्वजं दृष्ट्वा पलायन्तेऽरयोऽचिरात् ।

अथ मन्त्रान्तरं तत्रैवोक्तम् ।

अथान्यं संप्रवक्ष्यामि मन्त्रमष्टाक्षरं परम् ।
षड्दीर्घयुक्ता हृल्लेखा प्रणवेन च संपुटा ॥
अष्टार्णोऽयं हनुमतो मन्त्रराजः प्रकीर्त्तितः ।
षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ॥

अस्य ऋषिः श्रीरामः जगती छन्दो हनुमान् देवता ।

अथ ध्यानम् ।

बालार्काभं त्रिभुवनं क्षोभकान् सर्वराक्षसान् ।
नादेनैव त्रासयन्तं सुग्रीवादिकसेवितम् ॥
सुन्दरं रामचरणध्यानं ध्यायेत् समीरजम् ।

अस्य पुरश्चरणं द्वादशसहस्रजपः 'सर्वमस्य द्वादशार्णवदि'त्युक्तत्वात् ।

द्वादशार्णमन्त्रोऽपि तत्रैव ।

अथास्यान्यं प्रवक्ष्यामि द्वादशार्णं महामनुम् ।
हौँ बीजं सम्यगुच्चार्य पूर्वोक्तं कूटपञ्चकम् ॥
हनुमते नमो मन्त्रो रामचन्द्रो मुनिर्मतः ।
जगती छन्द उद्दिष्टं हनुमान् देवता मतः ॥
बीजं तु पञ्चमं कूटं शक्तिराद्यं तु कूटकम् ।
षड्बीजैः प्रथमैर्न्यासः षडङ्गोऽस्य प्रकीर्त्तितः ॥

कूटपञ्चकं तु ।

आद्यन्ताकृतिवेदार्णा विन्दुरुद्रस्वरान्विताः ।
हनूमतस्त्वाद्यकूटमेतत् साधक उच्चरेत् ॥
प्रकृत्याकृतिवेदार्णा विन्दुरुद्रस्वरान्विताः ।
द्वितीयकूटमेतत् स्यादाद्यन्ताकृतिवर्णकाः ॥
विसर्गेन्दुस्वरोपेतास्तृतीयं कूटमुच्यते ।
आद्यन्तासिद्धाकृत्यब्धिवर्णैरीशस्वरान्वितैः ॥

सानुस्वारैस्तुर्यकूटं साद्यः सौः पञ्चमं मतम् ।

अथ ध्यानपुरश्चरणे ।

ध्यानं पूर्वोक्तमेवास्य जपेदर्कसहस्रकम् ।
दशांशं जुहुयाद्व्रीहीन् पयोदध्याज्यसंयुतान् ॥

अथ मालामन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि मालामन्त्रं वदेद्ध्रुवम् ।
वज्रकाय वज्रतुण्ड वदेत् कपिलपिङ्गल ॥
ऊर्ध्वकेश महावेति ल रक्तमुख कीर्त्तयेत् ।
तडिज्जिह्व महारौद्र दंष्ट्रोत्कटक हद्वयम् ॥
करालिने महा प्रोच्य दृढप्रति च हा वदेत् ।
हि लङ्केश्वर वेत्युक्त्वा धाय महा वदेत् परम् ॥
शेतुबन्धमहाशैलप्रवाह गगनेचर ।
एह्येहि भगवन् प्रोच्य महाबलपराक्रम ॥
भैरवाज्ञापय प्रोच्य एह्येहीति पदं वदेत् ।
महारौद्रपदं प्रोच्य दीर्घपुच्छेन वेष्टय ॥
वैरिणां भञ्जय द्वन्द्वं हुँ फड्बाणार्कवर्णवान् ।
मुन्याद्यर्चाप्रयोगादि सर्वं सूर्याशावन्मतम् ॥

अथ मन्त्रान्तरम् । (साधनसमुच्चये)

नमः सविन्दुमुद्धृत्य हनुमन्तं च ङेऽन्तकम् ।
रुद्रात्मकाय कवचमस्त्रं चेत्येकवर्णकः ॥
मन्त्रोऽयं हरिणा पूर्वं दत्तो गाण्डीवधन्विने ।
एतस्य साधनं कृत्वा रणे विजयमाप्तवान् ॥

अथ मन्त्रान्तरं तत्रैवोक्तम् ।

अथान्यं संप्रवक्ष्यामि मन्त्रमष्टाक्षरं परम् ।
षड्दीर्घयुक्ता हृल्लेखा प्रणवेन च संपुटा ॥
अष्टार्णोऽयं हनुमतो मन्त्रराजः प्रकीर्त्तितः ।
षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ॥

अस्य ऋषिः श्रीरामः जगती छन्दो हनुमान् देवता ।

अथ ध्यानम् ।

बालार्काभं त्रिभुवनं क्षोभकान् सर्वराक्षसान् ।
नादेनैव त्रासयन्तं सुग्रीवादिकसेवितम् ॥
सुन्दरं रामचरणध्यानं ध्यायेत् समीरजम् ।

अस्य पुरश्चरणं द्वादशसहस्रजपः 'सर्वमस्य द्वादशार्णवदि'त्युक्तत्वात् ।

द्वादशार्णमन्त्रोऽपि तत्रैव ।

अथास्यान्यं प्रवक्ष्यामि द्वादशार्णं महामनुम् ।
हौँ बीजं सम्यगुच्चार्य पूर्वोक्तं कूटपञ्चकम् ॥
हनुमते नमो मन्त्रो रामचन्द्रो मुनिर्मतः ।
जगती छन्द उद्दिष्टं हनुमान् देवता मतः ॥
बीजं तु पञ्चमं कूटं शक्तिराद्यं तु कूटकम् ।
षड्बीजैः प्रथमैर्न्यासः षडङ्गोऽस्य प्रकीर्त्तितः ॥

कूटपञ्चकं तु ।

आद्यन्ताकृतिवेदार्णा विन्दुरुद्रस्वरान्विताः ।
हनूमतस्त्वाद्यकूटमेतत् साधक उच्चरेत् ॥
प्रकृत्याकृतिवेदार्णा विन्दुरुद्रस्वरान्विताः ।
द्वितीयकूटमेतत् स्यादाद्यन्ताकृतिवर्णकाः ॥
विसर्गेन्दुस्वरोपेतास्तृतीयं कूटमुच्यते ।
आद्यन्तसिद्धाकृत्यब्धिवर्णैरीशस्वरान्वितैः ॥

सानुस्वारैस्तुर्यकूटं साद्यः सौः पञ्चमं मतम् ।

अथ ध्यानपुरश्चरणे ।

ध्यानं पूर्वोक्तमेवास्य जपेदर्कसहस्रकम् ।
दशांशं जुहुयाद्व्रीहीन् पयोदध्याज्यसंयुतान् ॥

अथ मालामन्त्रस्तत्रैव ।

अथातः संप्रवक्ष्यामि मालामन्त्रं वदेद्ध्रुवम् ।
वज्रकाय वज्रतुराड वदेत् कपिलपिङ्गल ॥
ऊर्ध्वकेश महाबेति ल रक्तमुख कीर्त्तयेत् ।
तडिज्जिह्व महारौद्र दंष्ट्रोत्कटक हृदयम् ॥
करालिने महा प्रोच्य दृढप्रति च हा वदेत् ।
हि लङ्केश्वर वेत्युक्त्वा धाय महा वदेत् परम् ॥
शेतुबन्धमहाशैलप्रवाह गगनेचर ।
एह्येहि भगवन् प्रोच्य महाबलपराक्रम ॥
भैरवाज्ञापय प्रोच्य एह्येहीति पदं वदेत् ।
महारौद्रपदं प्रोच्य दीर्घपुच्छेन वेष्टय ॥
वैरिणां भञ्जय द्वन्द्वं हुँ फड्बाणार्कवर्णवान् ।
मुन्याद्यर्चाप्रयोगादि सर्वं सूर्यार्णवन्मतम् ॥

अथ मन्त्रान्तरम् । (साधनसमुच्चये)

नमः सविन्दुमुद्धृत्य हनुमन्तं च ङेऽन्तकम् ।
रुद्रात्मकाय कवचमस्त्रं चेत्येकवर्णकः ॥
मन्त्रोऽयं हरिणा पूर्वं दत्तो गाराडीवधन्विने ।
एतस्य साधनं कृत्वा रणे विजयमाप्तवान् ॥

वह्निजायावधिः प्रोक्तो मन्त्रोऽयं सुरपादपः ॥
षड्दीर्घभाजा बीजेन मन्त्रार्णैरङ्गकल्पना ।
स्वरैः काद्यैश्च पाद्यैश्च प्राणायामत्रयं चरेत् ॥
ध्यायेद्रणे हनूमन्तं कपिकोटिसमन्वितम् ।
धावन्तं रावणं जेतुं दृष्ट्वा सत्वरमुत्थितम् ॥
लक्ष्मणं च महावीरं पतितं रणभूतले ॥
गुरुक्रोधं समुत्पाद्य गृहीत्वा गुरुपर्वतम् ।
हाहाकारैः सदर्पैश्च कम्पयन्तं जगत्त्रयम् ॥
आब्रह्म च समाव्याप्य कृत्वा भीमकलेवरम् ।
पूजा तु वैष्णवे पीठे लक्षमेकं जपं चरेत् ॥
ततः सिद्धमनुर्मन्त्री साधयेत् सिद्धिमुत्तमाम् ।

तथा ।

ब्राह्मे मुहूर्त्ते चोत्थाय कृतनित्यक्रियो द्विजः ।
गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य चाष्टधा ॥
मूलमन्त्रं ततो जप्त्वा सिञ्चेदादित्यसङ्ख्यया ।
संपूज्य हनुमन्तं षट्सहस्रं जपमाचरेत् ॥
एवं सप्तदिनान्ते च समायाति कपीश्वरः ।
रात्रौ त्रिभागशेषायां ददाति वरमीप्सितम् ॥
विद्यां वाऽपि धनं चापि राज्यं वा शत्रुनिग्रहम् ।
ददाति साधकेन्द्राय सत्यं सत्यं सुनिश्चितम् ॥

इति हनुमत्प्रकरणम् ।

अथ काममन्त्रः (शारदायाम्)

ब्रह्मा भूम्या समासीनः शान्तिविन्दुविभूषितः ।
बीजं मनोभुवः प्रोक्तं जगत्त्रितयमोहनम् ॥

ऋषिः संमोहनः प्रोक्तो गायत्रं छन्द ईरितम् ।
सर्वसंमोहनः साक्षाद्देवता मकरध्वजः ॥
बीजेन दीर्घयुक्तेन षडङ्गविधिरीरितः ।

अथ ध्यानम् ।

जपारुणं रत्नविभूषणाढ्यं
मीनध्वजं चारुकृताङ्गरागम् ।
कराम्बुजैरङ्कुशमिक्षुचापं
पुष्पास्त्रपाशौ दधतं भजामि ॥

अथ पुरश्चरणम् ।

लक्षत्रयं जपेन्मन्त्रं मधुरत्रयसंयुतैः ।
पुष्पैः किंशुकजैः फुल्लैर्जुहुयात् तद्दशांशतः ॥

अथ मन्त्रान्तरं तन्त्रान्तरे ।

मान्मथं बीजमुद्धृत्य ङेऽन्तं कामं समुच्चरेत् ।
हृदयान्तः षडर्णोऽयं जगत्संमोहनक्षमः ॥

अस्य मन्त्रस्य ऋष्यादिध्यानपर्यन्तं पूर्ववत् कार्यम् ।
पुरश्चरणे विशेषो यथा ।

वर्णलक्षं जपेन्मन्त्रं दशांशं मधुराप्लुतैः ।
पलाशकुसुमैर्होमं कुर्याद्वा चूतपल्लवैः ॥

इति काममन्त्रपुरश्चरणम् ।

बिभ्रत्यद्भुतभूतिभूतपवचोवैचित्र्यचित्रामृत-
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
नेपालेन्द्रनरेन्द्रनिर्मितपुरश्चर्यार्णवेऽस्मिन्नगात्
सद्युक्तिस्फुटमौक्तिकोत्कररुचोत्तुङ्गस्तरङ्गोऽष्टमः ॥

इति श्रीमन्महाराजाधिराजश्रीप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे गणेशादिमन्त्रपुरश्चरणविवेचनं नामाष्टमस्तरङ्गः ।

वह्निजायावधिः प्रोक्तो मन्त्रोऽयं सुरपादपः ॥
षड्दीर्घभाजा बीजेन मन्त्रार्णैरङ्गकल्पना ।
स्वरैः काद्यैश्च पाद्यैश्च प्राणायामत्रयं चरेत् ॥
ध्यायेद्रणे हनूमन्तं कपिकोटिसमन्वितम् ।
धावन्तं रावणं जेतुं दृष्ट्वा सत्वरमुत्थितम् ॥
लक्ष्मणं च महावीरं पतितं रणभूतले ॥
गुरुक्रोधं समुत्पाद्य गृहीत्वा गुरुपर्वतम् ।
हाहाकारैः सदर्पैश्च कम्पयन्तं जगत्त्रयम् ॥
आब्रह्म च समाव्याप्य कृत्वा भीमकलेवरम् ।
पूजा तु वैष्णवे पीठे लक्षमेकं जपं चरेत् ॥
ततः सिद्धमनुर्मन्त्री साधयेत् सिद्धिमुत्तमाम् ।

तथा ।

ब्राह्मे मुहूर्त्ते चोत्थाय कृतनित्यक्रियो द्विजः ।
गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य चाष्टधा ॥
मूलमन्त्रं ततो जप्त्वा सिञ्चेदादित्यसङ्ख्यया ।
संपूज्य हनुमन्तं षट्सहस्रं जपमाचरेत् ॥
एवं सप्तदिनान्ते च समायाति कपीश्वरः ।
रात्रौ त्रिभागशेषायां ददाति वरमीप्सितम् ॥
विद्यां वाऽपि धनं चापि राज्यं वा शत्रुनिग्रहम् ।
ददाति साधकेन्द्राय सत्यं सत्यं सुनिश्चितम् ॥

इति हनुमत्प्रकरणम् ।

अथ काममन्त्रः (शारदायाम)

ब्रह्मा भूम्या समासीनः शान्तिविन्दुविभूषितः ।
वीजं मनोभुवः प्रोक्तं जगत्त्रितयमोहनम् ॥

ऋषिः संमोहनः प्रोक्तो गायत्रं छन्द ईरितम् ।
सर्वसंमोहनः साक्षाद्देवता मकरध्वजः ॥
बीजेन दीर्घयुक्तेन षडङ्गविधिरीरितः ।

अथ ध्यानम् ।

जपारुणं रत्नविभूषणाढ्यं
मीनध्वजं चारुकृताङ्गरागम् ।
कराम्बुजैरङ्कुशमिक्षुचापं
पुष्पास्त्रपाशौ दधतं भजामि ॥

अथ पुरश्चरणम् ।

लक्षत्रयं जपेन्मन्त्रं मधुरत्रयसंयुतैः ।
पुष्पैः किंशुकजैः फुल्लैर्जुहुयात् तद्दशांशतः ॥

अथ मन्त्रान्तरं तन्त्रान्तरे ।

मान्मथं बीजमुद्धृत्य ङेऽन्तं कामं समुच्चरेत् ।
हृदयान्तः षडर्णोऽयं जगत्संमोहनक्षमः ॥

अस्य मन्त्रस्य ऋष्यादिध्यानपर्यन्तं पूर्ववत् कार्यम् ।
पुरश्चरणे विशेषो यथा ।

वर्णलक्षं जपेन्मन्त्रं दशांशं मधुराप्लुतैः ।
पलाशकुसुमैर्होमं कुर्याद्वा चूतपल्लवैः ॥

इति काममन्त्रपुरश्चरणम् ।

बिभ्रत्यद्भुतभूतिभूतपवचोवैचित्रचित्रामृत-
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
नेपालेन्द्रनरेन्द्रनिर्मितपुरश्चर्यार्णवेऽस्मिन्नगात्
सद्युक्तिस्फुटमौक्तिकोत्करुचोत्तुङ्गस्तरङ्गोऽष्टमः ॥

इति श्रीमन्महाराजाधिराजश्रीप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे
गणेशादिमन्त्रपुरश्चरणविवेचनं नामाष्टमस्तरङ्गः ।